# शब्दापशब्दविवेकः

(प्रतिसंस्कृतः)

वाक्यपदीयस्य संस्कर्ता
डा० चारुदेवशास्त्री

नाग पब्लिशर्स
११ ए/यू. ए. जवाहर नगर, दिल्ली-७

DEDICATED

to

Dr. Siddheshwara Varma

a Saint Scholar, an Indologist

and

Linguistician of worldrenown

as a humble token of profound respect and admiration

by the author,

one of his numerous admirers.

# निवेदना

अर्थगत्यर्थः शब्दप्रयोगः। अर्थं च यथा शब्दोऽवगमयति तथाऽपशब्दोपि। तथापि शब्दमभिनन्दति लोकोऽवक्षिपति चापशब्दम्। प्रियङ्करणो हि शब्दप्रयोगः। य इच्छेत्प्रियोऽहं लोकस्य स्यामिति स शब्दाञ्छीलयेत्साधीयश्च तान् व्यवहरेत्। आह च भगवान्भाष्यकारः—समानायामर्थगतौ शब्देन चापशब्देन च शब्देनैवार्थोऽभिधेयो नापशब्देनेति। कश्शब्दः कश्चापशब्दः। सूत्रानुसारी प्रयोगः शब्द उत्सूत्रश्चापशब्दः। सूत्रेष्वेव तत्सर्वं यद् वृत्तौ यच्च वार्तिक इति मतमाश्रित्येदमुच्यते। मतान्तरे तु संस्कारहीनश्शब्दोऽपशब्दः। स एवापभ्रंशः। अपशब्दपरीहारश्च न सहेलं साध्यः। शब्दापशब्दविवेकनिबन्धनो हि सः। विवेकश्च विशारदस्यापि न सहसा जायते किमुत शारदस्येति प्रकृतो नो यत्नः। वाचि शिक्षमाणस्य प्रथमवैयाकरणस्य साचिव्यं किमपि चिकीर्षामीति प्रक्रममिमं प्रकृतोस्मि।

अत्र विषये शरणदेवविरचितां दुर्घटवृत्तिमतिरिच्य न काचित् कृतिर्विद्यितेऽस्मत्कृतेः पूर्वा। सा चैतस्या एकदेश एव समाविशत्यबहु च व्याप्नोति। तत्र कवीनां महाकवीनां चाल्पे केचन प्रयोगा दुर्घटा इति चिन्तिताः। अस्याः कृतेस्तु भूयोविषयावगाहः। इह विनेयानां वाचि प्रतीतास्ते ते प्रमादानां गोचरा बहुलं सङ्गृहीताः। नैतदेव। इदानीन्तानां कवीनामकवीनां च क्रियासु नैकविधासु वर्तमानाः पाणिनीयशासनव्यतिक्रमलक्षणास्तास्ताः स्खलितयो निखिलेन विभाविताः सुनिपुणं च परीक्षिताः। अद्यत्वे संस्कृतं लोकव्यवहारस्य गोचरो नेत्यधीतिनोऽपि शास्त्रे प्रयोगे स्खलन्ति किमुत ये प्राधीताः। तस्मादसकृत्प्रबोधनसव्यपेक्षो लोको विशेषात्तु विनेयवर्गः। यदा संस्कृतं लोके प्राचारीदाबालवृद्धं च प्रयोगविषयो ऽभूत्तदापि क्वचित् क्वचित्प्रामदन्प्राञ्चोऽपीति तेषामपि वागिह साधु परीक्षिता। न जातु तेषां मान्यानामनादरोऽभिप्रेतः। पुराणादिषु भागवतव्यतिरिक्तेषु येऽपाणिनीया प्रयोगा अपभ्रंशलक्षणास्ते कृतेरस्या अविषयः। जनसामान्यस्य कृते कृतास्ताः कृतयोऽर्थप्रधानाः शब्द-

सौष्ठवं नात्यन्तं समाद्रियन्त । पाणिनेः प्राक् प्रणीयन्तेति च तासु पाणिनीयशासनाननुसारो न दोषाय न चोपालम्भायेत्यपि मतम् ।

इह कृतौ स्थितस्य गतिश्चिन्तनीयेति नात्यन्तं सूक्षितं वचः । अशक्यसमाधाने न समाधिः प्रसभं प्रवर्तितः । अस्थाने बुद्धिव्यायामः परिहृतः । शब्दादपशब्दो विविक्तः । न च तत्र वक्तृविशेषे संभावना प्रतिषेधिकाऽभून्न वेतरस्मिन्नवहेला प्रयोजिका । पाप्मभ्य इवापभ्रंशेभ्यः पूतेयं दैवी वाग् यथा स्यात्तथा प्रयस्तम् । अत्र प्रयासे कियती मे सकामतेति सुधियोऽत्र मानम् । नाहं किञ्चिद्विवक्षे । बलवच्च प्रत्येमि भूयसे समुपकाराय भविष्यतीयं कृतिः प्रतिपत्तॄणां प्रतिपित्सूनां च ।

नेदम्प्रथमं प्रकाशनं कृतेः । अद्य वर्षपूगोऽस्याः प्रकाशितायाः । कालेनेयं दुर्लभाऽभूदिति भूयः प्रकाशनमुपेयते । प्राक् च प्रकाशनाद् भूयसा प्रतिसंस्कृतेयम् । इत्थम्भूतश्चात्र प्रतिसंस्कारोऽभूत् । प्रथमे प्रकाशने समुदितोपि विवेच्यसङ्ग्रहो ग्रन्थपूर्वार्द्धे न्यस्तः, तद्विवेचनं चोत्तरार्धे कृतम् । तथा स्थिते विवेच्यविवेचनयोर्व्यवधिः सद्यः प्रतिपत्तेः प्रतिबन्धकोऽभूदायासाय च प्रतिपित्सोरिति सोऽनुक्रम इदानीमन्यथितः । विवेचनमिह विवेच्यस्यानन्तरमेव संनिवेशितम् । तेनैकत्रैव दृक्पातमात्रेणानायासं जायते प्रज्ञानम् । आवापोद्वापावप्यभूताम् । आवापेन च विपुलतरोऽत्र विवेच्यसंग्रहोऽभूत् । शतशोऽसंगृहीतचराणि वाक्यानि साम्प्रतमभ्युच्चितानि । उद्वापेन च व्यवहारव्यभिचारविषयाणां वाक्यानामल्पताऽपि संग्रहस्य समजनि । तथापि ग्रन्थकलेवरस्य प्रकर्ष एव पर्यणंस्त नापकर्षः । स्वयं कृतं विवेचनं चेह महता प्रयत्नेन परिशोधितं मानष्यकसुलभदोषाश्च प्रमार्जिताः । इत्थं प्रतिसंस्कृतोऽयं शब्दापशब्दविवेकः सुतरां रोचिष्यते विदद्भ्यो विविदिषावद्भ्यश्चेत्याशासानोहं विरमामि विदां विधेयश् चारुदेवः शास्त्री ॥

३/५४ रूपनगरे देहल्याम्

१०-७-१९८२

# विषयानुक्रमणी

—०—

ओं नमः परमात्मने ।

**नमो भगवते पाणिनये । नमः शिष्टेभ्यः । नमः पूर्वेभ्यः पथिकृद्भ्यः ।**

**सूत्रवाक्ये तथा भाष्यं विचिन्त्य स्वमनीषया ।**
**शब्दापशब्दयोरेष विवेकः प्रवितन्यते ॥ १ ॥**

**शास्त्रे प्रबोधवन्तो ये तत्रार्थेऽनारतं रताः ।**
**प्रयोगे तेऽपि मुह्यन्ति किम्पुनर्ये बुभुत्सवः ॥ २ ॥**

**प्रयोगनैपुणी साध्वी शैक्षाणां खल्वगोचरः ।**
**तत्सम्पत्त्या अभीष्टायै प्रकृतो नः समुद्यमः ॥ ३ ॥**

**इहार्वाचां प्रणेतृणां सङ्गृहीता दुरुक्तयः ।**
**क्रियाभ्यः प्रचरन्तीभ्यः क्वचित्प्राचां परीक्षिताः ॥ ४ ॥**

**तथा प्रयत्तमस्माभिर्यथा ये नाम शारदाः ।**
**वाचि भूयो विवेक्तारस्ते ध्रुवं स्युर्विशारदाः ॥ ५ ॥**

**अर्धोच्चारितमात्रे चेद् वाक्ये दुष्टत्वधीर्भवेत् ।**
**प्रज्ञावतां विनेयानां वैशारद्यं तदिष्यते ॥ ६ ॥**

# अथ संहितायां विवेच्यानि ।

## तत्राचसन्ध्यधिकारः प्रथमः ।

१. शुद्धोदनस्यापत्यं सिद्धार्थ इति शौद्धोदनि[1]रित्युच्यते ।

२. यदमात्यैर्मतमुपन्यस्तं तत्रौमिति[2] ब्रूमः । न हि तेषां प्रायो मिथ्या दर्शनं भवति ।

३. श्वोहं त्वामुपेष्यामीति दृढं प्रतिजाने ।

---

१. शुद्धोदनस्यापत्यमित्यत्र **वृद्धिरेचीति** वृद्धिर्नाकारि, स दोषः । पृषोदरादित्वाद्वा साधुत्वं कल्प्यम् । **संज्ञापूर्वको विधिरनित्य** इति वा समाधेयम् । स्वायम्भुवो मनुरित्यत्रापि स एव समाधिः ।

२. तत्रौमित्यत्र **ओमाङोश्चेत्यनेन** विहितं पररूपं नाश्रितम्, स दोषः । तत्रोमिति साधु ।

३. अत्र **एत्येधत्यूठ्सु** इति वृद्ध्या उपैष्यामीति साधु ।

---

**१. शाक्यसिंह. सर्वार्थसिद्धः शौद्धोदनिश्च सः इत्यमरः ।**

**२. ओमित्यव्ययमङ्गीकारे ।**

५७. महामहिमानस्तेऽन्तः स्थान् बहिः स्थांश्च रिपून् सममभिस्युः[1] ।
५८. सौवर्णानि राजतानि वा भाजनानि बभूवुरार्य्याणां न तु मृण्मयानि ।
५९. सच्चेष्टितपरिहीनस्य तस्य जीवितेन किम् ?
६०. एवमुपपादितमेतन्मतं निःपक्षपातिनां मनः प्रीणयेन्नाम ।
६१. इक्ष्वाकुकुलपुरोधाः श्रीवसिष्ठः श्रीरामं तीर्थेभ्य आहृतैरभ्यसिचत् सलिलैः ।
६२. एवं हि दैवं पराहण्यते पौरुषेण ।
६३. अयं बहिस्तो वैष्णवः, अन्तस्तु[2] शैवः ।
६४. कुत्सितेन तस्य परामर्शेण नितान्तं दूयते स्म नः स्वान्तम् ।
६५. भूरिरस्य परिश्रमो व्याकरणे । साध्वयं वेद हृदयं सूत्रवार्तिकाणाम् ।

---

५७. अभिष्युरित्येव साधु । **उपसर्गप्रादुर्भ्याम्**—इति षत्वम् । अभिभवेयुरित्यर्थः । भाग-वर्जितेषु लक्षणादिष्वर्थेष्वभेः कर्मप्रवचनीयता । अन्यत्रावस्थितोपसर्गता ।
५८. मृन्मयानीत्येव संस्कृतम् । णत्वविधायकं शास्त्रं प्रत्यनुनासिकस्यासिद्धत्वात् । उभे अपि सूत्रे त्रैपादिके । **यरोऽनुनासिक** इति तु परम् ।
५९. '**कृत्यचः**' इति णत्वे परिहीणस्येत्येव साधु ।
६०. **इदुदुपधस्य चाप्रत्ययस्येति** षत्वे निष्पक्षपातिनामिति भवितव्यम् ।
६१. अभ्यषिचत् इत्येव प्रयोज्यम् । **अडभ्यासव्यवायेऽपीति, उपसर्गात् सुनोति सुवतीत्यादिना** मूर्धन्यः ।
६२. **हन्तेरत्पूर्वस्येति** पराहण्यते इति निर्दुष्टम् ।
६३. **ह्रस्वात्तादौ तद्धिते** इति बहिष्ट इति शब्दः, बहिस्त इति चापशब्दः । बहिष्ट इति संस्कारवानपि न प्रयोगमवतरन्दृष्टः । बहिरित्येव प्रयुज्यते बाह्यत इति वा ।
६४. परामर्शेनेति साधु । शकारेण व्यवधानाण्णत्वस्याप्राप्तेः ।
६५. सूत्रवार्तिकानामित्येव साधु, तकारेण व्यवधानाण्णत्वस्याप्राप्तेः ।

---

१. युगपद् अभिभवेयुः । अभिपूर्वस्यास्तेः सार्वधातुके लिङि रूपम् ।
२. अन्तरित्यव्ययं मध्यवाचि ।

६६. वात्सल्यरसस्यासिस्वादयिषयाऽहं सूरनिबद्धं श्रीकृष्णस्य बाल-चरितं किञ्चिदपठम् ।
६७. सनाद्यन्ता धातवः ।।
६८. गगणं गगणाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं राम-रावणयोरिव ।।
६९. प्राङ्गणे खेलन्ति बालाः सांराविणं[1] च कुर्वन्ति ।
७० अत्र विसृमरे[2] जनप्रकोपे नृणायका एव प्रतिभुवः ।
७१. पुरा ब्राह्मणैः स्वेन गुणप्रकर्षेणोच्चैस्तमं पदमध्यस्थीयत ।
७२. फाल्गुणे मैत्रो विधिवद् दारान्करिष्यति ।
७३. भीष्मादयो वर्णिनो हि सुरासुरलोकान्नपि स्वतेजसाऽभ्यभूवन् ।

---

६६. आसिस्वादयिषयेति सर्वथानवद्यम् । षत्वभूते सनि **स्तौतिण्योरेवेति** नियमेनाभ्यनुज्ञातं षत्वं **सः स्विदिस्वदिसहीनां चेति** सूत्रेण प्रति-षिध्यते ।
६७. **ङमो ह्रस्वादचि ङमुण्नित्यम्** इत्यत्र नित्यशब्दोऽभीक्ष्णवचनः, यथा नित्यप्रहसितः, नित्यप्रजल्पित इत्यादिषु । तेनाभीक्ष्णं ङमु-डागमो भवति, क्वचिन्नैव भवतीति **सनाद्यन्ता** इति सूत्रकार-प्रयोगः साधुः ।
६८. गगणमित्यपशब्द एवायम्, णत्वनिमित्ताभावात् । वस्तुतो बर्बरा एवं व्यवहरन्ति न त्वार्याः । **गगने फाल्गुने फेने णत्वमिच्छन्ति बर्बरा** इति वचनात् ।
६९. प्राङ्गणे इति दुष्टः शब्दः । **इजादेः सनुमः** इति नियमात् । इजा-देरेव सनुमो नान्यस्मादित्यर्थात् । अगिरत्र धातुः कृत्प्रत्ययान्तः । इदित्वान्नुम् । परमयमिजादिर्न ।
७०. **ऋवर्णाच्चेति** समानपद एव प्रवर्तत इति पदभेदे णत्वं दुर्लभम् ।
७१. **प्राक् सितादड्व्यवायेपीति** मूर्धन्येऽध्यष्ठीयतेत्येव साधु ।
७२. फाल्गुने इत्येव शब्दः, णत्वनिमित्ताभावात् ।
७३. लोकानपीति साधु । ङमो ह्रस्वादित्यस्य प्राप्तिरेव न । नात्र नकारात्पूर्वो ह्रस्वः ।

---

१. व्यापकंशब्दम् । २. व्यापनशीले ।

७४. अद्य प्रात एवातपः प्रखरोऽभूत् ।
७५. आर्द्रगोमयेण लिम्प महानसभूतलम् ।
७६. गौर्गौः कामदुघा सम्यक् प्रयुक्ता स्मर्यते बुधैः । दुःप्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति (काव्यादर्शे) ॥
७७. कश्चित् भूमिस्थोऽपि दिविषदमात्मानं मन्यते ।
७८. म्लायन्त्यङ्गुलिसङ्गेऽपि कोमलाः कुसुमस्रजः ।
७९. तत्र तटिनीतटे सर्वं नीरवं निष्पन्दं चासीदिति भीराविशन्नः ।[1]
८०. सुस्थिते को न पण्डितः ।
८१. नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभूच्च नान्यत् (वि० पु० १।२।११) ।
८२. पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम् ।
वस्तुवृत्तानुरोधेन कथं तत्राप्रमा वचः (सुरेश्वराचार्यकृतसम्बन्धवार्तिके) ।

---

७४. प्रातरेवेति साधु । प्रातर् इति रकारान्तमव्ययम् । तेन रुत्वयत्वशाकल्यानामप्राप्तिः ।
७५. **पदव्यवायेऽपीति** निषेध **पदव्यवायेऽतद्धिते** इति वचनान्नेह प्रवर्तते । तेन प्रकृतेऽदोषः । मयट् तद्धितः । स च स्वादिः । स्वादौ पूर्वं पदमिति **गोशब्दः पदम्** ।
७६. दुःप्रयुक्तेति दुष्प्रयुक्तम । **इदुदुपधस्य चाप्रत्ययस्येति** षकारविधानात् ।
७७. **अम्बाम्बगोभूमी**त्यादिसूत्रेण मूर्धन्यादेशे भूमिष्ठ इत्येव साधु ।
७८. **समासेऽङ्गुलेः सङ्गः** इति मूर्धन्यादेशेऽङ्गुलिषङ्ग इत्येव साधु ।
७९. निस्पन्दमित्येव साधु । स्पदि ईषच्चलने इति धातुः । नात्र षत्वं शास्त्रदृष्टमित्युपेक्ष्यम् ।
८०. **सुः पूजायामिति** कर्मप्रवचनीयत्वे सुस्थित इति साधु । पूजा चेह धात्वर्थस्तुतिरभिमता । साधु यथा स्यात्तथा स्थितः सुस्थित इत्युच्यते ।
८१. नाहो नेत्यत्र **अहन्** इति सूत्रेण रुत्वं न युक्तम् । तस्य **रोऽसुपी**त्यनेन बाधात् । रेफे सति नाहर्नेत्येव न्याय्यम् ।
८२. प्रमिण्वन्तीत्यत्र डुमिञ् प्रक्षेप इति धातुः । तत्रोपसर्गकृतं विकरणस्य णत्वं केनापि शास्त्रेण न विहितम् । **हिनुमीना**(८।४।१५) इत्यत्र तु मीञ् हिंसायामित्यस्य श्नाविकरणस्य ग्रहणम् ।

---

१. भयमस्मानाक्रामत्, भयेनाविष्टा व्याप्ता वयमिति यावत् ।

८३. सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः (कारिकावल्याम्)।
८४. पात्त्रमाहर सौम्य । अहमस्म्यनेनार्थी ।
८५. अयं विरलं प्रणिदेग्धि शिरस्तैलेन । अयं तु प्रनिदेदेग्धि ।
८६. यदुच्छिष्टं प्राश्नाति (आप० ध० १।१।४।१)।
८७. वसा शुक्रमसृङ् मज्जा मूत्रं विट्कर्णविण्णखाः (१।५।६।४३ बौ० ध० व्याख्यायां गोविन्दस्वामिकृतायामुद्धृतं मनुवचनम्)।
८८. नक्तं सुष्वापो मे नास्ति, तत्र हेतुं न वेद ।
८९. मुहुर्मुहुर्निष्टनतीव मेदिनी (बुद्ध० २१।११७)।
९०. इयं नः संस्कृतिर्मन्त्रेषूदितोषेव पुराणी युवतिः ।

---

८३. सामान्यपरिहीनास्तु । अत्र कृत्यच (८।४।२९) इति णत्वं न कृतम्, स दोषः ।
८४. पात्त्रम् इत्यसाधु । **दीर्घादाचार्याणाम्** (८।४।५२) इत्यनेन द्वित्व-निषेधात् । पात्रमित्येव साधु ।
८५. **नेर्गदनदेति** सूत्रे देग्धीति श्तिपा निर्देशाद् यङ्लुकि णत्वं नेति प्रनिदेदेग्धि इति साधु ।
८६. प्राश्नातीत्येव साधु । **शात्** (८।४।४४) इति श्चुत्वनिषेधात् ।
८७. विण्णखा इत्यत्र **न पदान्ताट्टोरनाम्** इति ष्टुत्व निषेधाद् विण्नखा इत्येव साधु । सम्प्रत्युपलब्धायां भृगुप्रोक्तायां मनुसंहितायां तु घ्राणकर्णविट् इति पाठः स्थितः ।
८८. सुष्वाप इत्यत्र षत्वं दुर्लभम् । सुपिरूपस्यैव **सुविनिर्दुर्भ्यः सुपि-सूतिसमाः** (८।३।८८) इत्यनेन तद्विधेः ।
८९ अभिनिस् इत्युपसर्गसमुदायादुत्तरस्य स्तनतेः सकारस्य मूर्धन्या-देशो विधीयते, समुदायेन चेच्छब्दसंज्ञा गम्यते—अभिनिष्टानो विसर्जनीयः । तेन प्रकृते मूर्धन्यादेशो दुर्लभ इति निःस्तनतीत्येव साधु निस् उपसर्ग इति कृत्वा रूपम् । निरित्युप सर्गे तु निस्तन-तीति विसर्जनीयरहितं रूपम् ।
९०. उषेत्याकारान्तं निशान्तवाच्यव्ययम् । तेनेह नार्थः । उष इति सकारान्तं देवतावाचि स्त्रियां वर्तते । तस्येह ग्रहणम् । देवता च पितृप्रसूरिति विवक्ष्यते । एवं सति उषा इवेति वक्तव्यम् । उपधादीर्घे सस्य रुत्वे यत्वे शाकल्यलोपे च रूपम् ।

९१. दैवदुर्विपाकेन सर्वोपि चिन्तितचरोऽर्थो व्याध्र्यत् ।
९२. मनस्सु येन द्युसदां न्यधीयत (शिशु०)
९३. हे करुणावति देवमातः, अक्षमोहं ते वेगं विसोढुम् । दत्तहस्ताव-
लम्बा मां निष्णापय ।
९४. येन येन श्रुता वार्ता शबरेण शुकेन वा । गिरिष्ठः पञ्जरस्थो वा
मुग्धस्तत्रैव तत्र सः (बृ० श्लो० सं० ५।८४) ॥
९५. मातरमुपरतां निशम्य सोऽतितरां व्यसदत् ।
९६. काणेन चक्षुषा किं वा चक्षुःपीडैव केवलम् । (हितोप०)
९७. पुरः करिष्यामि निजपाणिकृपाणिकाम् (शि० भा०) ।
९८. टीकयति गमयत्यर्थाण्टीका ।
९९. अधन्योसि यदकुशलं कर्म नापद्विक्षे, कुशले च नानुसज्जसे ।

---

९१. दैवदुर्विपाकेणेति साधु । **कुमति चेति** नित्यं णत्वविधानात् ।
९२. द्युसदामित्यत्र **पूर्वपदादिति**(८।३।१०६) पूर्वपदस्थान्निमित्तादुत्तर-
स्यादेशसकारस्य षत्वं न भवति, सूत्रे छन्दसीत्यनुवृत्तेः ।
९३. निष्णापयेत्यत्र षत्वं दुर्लभम् (तद्धेतुकं णत्वं च), कौशलार्थस्या-
भावात् । नितरां स्नापयेत्येवार्थः ।
९४. गिरिष्ठ इत्यत्र मूर्धन्यादेशस्याप्राप्तेर्गिरिस्थ इत्येव न्याय्यम् ।
**अम्बाम्बेति** सूत्रे गिरिशब्दस्यादर्शनात् ।
९५. **सदिरप्रतेः**, **प्राक्सितादड्व्यवायेपीति** षत्वे सति व्यषदद् इत्येव
साधु ।
९६. चक्षुष्पीडेति युक्तम् । **नित्यं समासेऽनुत्तरपदस्थस्येति** नित्येन
षत्वेन भवितव्यम् ।
९७. पुरस्करिष्यामीति वक्तव्यम् । **पुरोव्ययमिति** गतिसंज्ञायां **नम-
स्पुरसोर्गत्योरिति** विसर्जनीयस्य सत्त्वविधानात् ।
९८. अर्थाष्टीकेति साधु स्यात् । **ष्टुना ष्टुरित्यस्यासिद्धत्वान्नश्छव्यप्र-
शान्** इति रुः । विसर्जनीयः । सकारः । तस्य ष्टुत्वेन षकारः ।
९९. नानुसज्जते इति साधु । **उपसर्गात्सुनोतिसुवतीत्यादिना** (८।३।-
६५) उपसर्गात्सञ्जेः सकरस्य षत्वं विधीयते न तु सज्जेः ।
**सात्पदाद्योः** (८।४।१११) इति निषेधश्च स्थितः ।

१००. सम्राजते सम्यक् छोभत इति सम्राट् ।
१०१. तदेतत् सहृदयाणामन्तःकरणस्थितयोर्जगतः पित्रोः करुणा-
 कटाक्षलहर्या अवतरणिकायाम्)
१०२. मम चित्तपुष्पमपि ते चक्षुःपदे स्वीकुरु (करुणा० १२) ।
१०३. रूपौदार्यप्रपञ्चणचणाः पौराः (मोहभङ्गे १४।६) ।
१०४. सत्प्रदीपाननवरतचितांच्छोभमानान् (मोहभङ्गे ४।१) ।
१०५. विप्रांच्छ्रुतिविधिचतुरान् (मोहभङ्गे ४।२)
१०६. अहरहो नीलतेजः प्रपन्नः (करुणा० १०८) ।
१०७. कश्चिन्मृण्मयमीननक्रकमठम् (मोहभङ्गे ४।५) ।
१०८. एवं विधास्यति मतिः परिहीनदोषा (मोह० ७।३७) ।

---

१००. संराजत इत्येव साधु । **मो राजि समः क्वावित्यनेन** क्विबन्ते राजतौ समो मकारादेशोऽनुस्वारापवादो विधीयते । अत्र तु राजतिस्तिङन्तः ।

१०१. सहृदयाणाम् इत्यत्र णत्वं दुर्लभम् । अट्कुप्वाङ्भिरेव व्यवाये ऋकाराद् रषाभ्यां चोत्तरस्य नस्य णत्वमभ्यनुज्ञायते । प्रकृते तु दकारेण व्यवायः ।

१०२. चक्षुःपदे इत्यत्र षत्वं दुर्वारम् । चक्षुःशब्द औणादिको व्युत्पन्न इति पक्षे **नित्यं समासेऽनुत्तरपदस्थस्ये**त्यनेन नित्यं षत्वम् । उणादयोऽव्युत्पन्नानि प्रातिपदिकानीति पक्षे **इदुदुपधस्य चाप्रत्ययस्ये**त्यनेन ।

१०३. रूपौदार्यप्रपञ्चणचण इत्यत्र प्रपञ्चणे णत्वं दुष्यति । ञच-काराभ्यां व्यवधानात् ।

१०४. चितांच्छोभमानान् इत्यत्र पदान्तनकारस्यानुसारः कृतः, स दोषः । श्चुत्वेन ञकारेण भाव्यम् । चिताञ्च्छोभमानान् इत्येव साधु ।

१०५. विप्रांच्छ्रुति विधीत्यत्राप्यनन्तरपूर्वोदीरित एव दोषः ।

१०६. अहरहो नीलतेजः प्रपन्नः । अहरह र्नीलतेज इत्येव साधु । **रोऽसु-पीति** नकारस्य रेफः ।

१०७. मृण्मय इत्यपशब्दः । **प्रत्यये भाषायां नित्यमिति** मृदो दकारस्यानुनासिको नकारः । णत्वे कर्तव्येऽयमसिद्ध इति णत्वमनवकाशम् । मृन्मय इत्येवशब्दः ।

१०८. परिहीनदोषेति दुष्टम् । **कृत्यच्च** इत्यनेन णत्वमिष्यते । बहूनां साधारणो ऽयमपप्रयोगः ।

१०९. सीमा मर्यादा विसीव्यति देशाविति (नि. १।७।३) ।
११०. स्त्रीत्वं हि मैथुनेन व्यवहारेणासौ निर्मिणोति ।
१११. स्वर्गार्थं ब्राह्मणे दानं यशोर्थं नटनर्तके ।
सङ्ग्रहार्थं तु भृत्येषु भयार्थं पुन राजसु ॥
११२. कथं रिपूनिषूदन इति श्रीरामायणे प्रयोगः ।
११३. आधोरणा हस्तिपका हस्त्यारोहा निषादिन इत्यत्रामरे निषादयन्त्युपवेशयन्ति हस्तिनम् इति भानुजिदीक्षितः।

## विसर्गसन्ध्यधिकारस्तृतीयः

१. को वर्णयेन्नृपगुणाञ्श्लोकैः परःशतैरपि ।
२. अस्योद्यानस्य बहिःप्रदेशे तिष्ठ, यावदहं प्रत्यावर्ते ।

---

१०९. विषीव्यतीति तु युक्तम् । परिनिविभ्यः (८।३।७०) इत्यनेन सीव्यतेः सकारस्य मूर्धन्यादेशविधानात् ।
११०. निर्मिणोतीत्यत्र णत्वं दुर्लभम् । डुमिञ् प्रक्षेप इति धातुः श्नुविकरणः ।
१११. **रोरि** (८।३।१४) इति रलोपे **ढ्रलोपे पूर्वस्य दीर्घोऽणः** (६।३।१११) इति दीर्घे पुना राजसु इति वक्तव्यम् ।
११२. रिपुषूदन इत्यत्र **सुषामादित्वात्** षत्वमिति श्रीरामायणे कतकटीकाकारो माधवयोगी । अशिष्टस्य शिष्टैरास्थितस्य षत्वस्य सुषामादित्वं कल्प्यमिति वृत्तिकारादयश्च ।
११३. निषादयन्तीत्यत्र **सदिरप्रतेः** (८।३।६६) इत्यनेन षत्वमिति भ्रमः । **प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणमि**त्यस्याः परिभाषाया हेरचङि (७।३।५६) इति कुत्वविधिरेव विषय इति प्रामाणिकाः । तेन निसादयन्तीत्येव साधु ।

### इति हल्सन्धिविवेचनम्

१. परःशतैरित्येव साधु । सुटः परस्यादिवद्भावात्सकारस्य पदान्तता नास्ति । तेन सकारस्य श्चुत्वेन शकारः ।
२. बहिष्प्रदेशे इत्येव साधु । **इदुदुपधस्य चाप्रत्ययस्येति** विसर्जनीयस्य षकारः ।

३. निःप्रमाथो[1]ऽसहोद्योगः श्रीगान्धिनो नयस्य मुख्यमङ्गम् ।
४. आयुःकामो व्यायामी पथ्याशी स्त्रीषु जितात्मा नरो न रोगी स्यादिति नित्यं मनसि कुर्यात् ।
५. चित्ताभोगो मनःकार इति केचिदधीयते । तत्र दोषं विभावय ।
६. गव्यसर्पिष्पात्त्राणीमानि[1] किमीयानीति वेत्थ किम् ?
७. मान्याः सदसस्पतयः! बालोऽहमप्रगल्भवाक् । न मया परिशीलितचरं भाषणं सभासु । तेनोपेक्ष्या मे वाचि दोषा इति विनीतवत् प्रार्थये ।
८. परिवृत्ता सम्प्रति स्थितिः । दुराचारा[2] अपि जातिपङ्क्तिभ्यां बहिः कर्तुं न शक्यन्ते ।
९. कपाटं कश्चिदाहन्ति । कः कोऽत्र भोः ।
१०. सेयमुभयतस्पाशा रज्जुः ।

---

३. निष्प्रमाथ इत्येव युक्तम् । पूर्वगत एव हेतुः ।
४. **नित्यं समासेऽनुत्तरपदस्थस्येति** नित्ये षत्व आयुष्काम इत्येव न्याय्यम् ।
५. मनःकार इत्यपपाठः । **अतः कृकमिकंसे**त्यादिना विसर्जनीयस्य सकारेण भवितव्यम् ।
६. गव्यसर्पिःपात्राणीति वाच्यम् । **नित्यं समासे** इति सूत्रेऽनुत्तरपदस्थस्येति पर्युदासात्षत्वं न । गव्यसर्पिरित्यत्र सर्पिरुत्तरपदम् । पात्त्राणीत्यत्र च द्वित्वं दुर्लभम् । **दीर्घादाचार्याणामिति** निषेधात् ।
७. सदसः पतय इत्येव निर्दुष्टं वचः । **षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु**(८।३।५३) इति च्छन्दसि षष्ठीविसर्जनीयस्य सकारविधिर्न तु भाषायाम् । **छन्दोवत्कवयः कुर्वन्तीति दुर्बलः समाधिः ।**
८. बहिष्कर्तुमित्येव युक्तम् । उपपत्तिस्तु बहुशः पूर्वत्र निर्दिष्टा ।
९. कस्क इत्येव न्याय्यम् **कस्कादिषु चे**ति शास्त्रात् ।
१०. उभयतस्पाशेति साधु । **अविहितलक्षण उपचारः कस्कादिषु द्रष्टव्य** इति वृत्तिकारः । स्पश बाधनस्पर्शनयोरित्यस्माण्णे स्पाशेति वोत्तरपदम् । **खर्परे शरि वा विसर्गलोप** इति वा समाधानान्तरम् ।

---

१. कस्येमानि किमीयानि । २. दुष्ट आचारो येषां ते दुराचाराः (बहुव्रीहिः) ।

११. कान्तः सर्वगुणोपेतो बाले ! दुःखेन लभ्यते ।
१२. गृहाण भो तात मदीयभावम् ।
१३. मुनित्रयं नमःकृत्य व्याकरणं नित्यमामनेत् ।[1]
१४. जीवितं हि नाम जन्मवतां चतुःपञ्चान्यहानि (दशकु०) ।
१५. अयं पयस्कामः । अयं परमपयःकामः । किंहेतुकः सांहितिको विशेषः ।
१६. अयःपात्रमायसं पात्रमुच्यते तद्धितवृत्त्या ।

---

११. दुःखेनेत्यत्र **इदुदुपधस्य चाप्रत्ययस्येति** विसर्जनीयस्य षत्वमभिशङ्कन्ते। तत्र सुख दुःख तत्क्रियायामिति विसर्जनीयोपधो धातुः पठ्यते, तस्येदं रूपमित्येवं शरणदेवः समाधिं ब्रूते दुर्घटवृत्तौ ।
१२. भोस्तातेति प्रयोगः । रोर्विसर्जनीये **विसर्जनीयस्य सः** इति सकारः ।
१३. **नमस्पुरसोर्गत्योरिति** गतिसंज्ञस्य नमःशब्दस्य नित्यं विसर्जनीयस्य सः । **साक्षात्प्रभृतीनि चेति** वैकल्पिकी सत्यपि गतिसंज्ञेहाश्रिता, क्त्वो ल्यपो विधानात् ।
१४. चतुष्पञ्चान्यहानीति वक्तव्यम् । इदुदुपधस्येति षत्वेन भवितव्यम् । चत्वारि वा पञ्च वेति विग्रहे **बहुव्रीहौ संख्येये डजबहुगणादिति** डचि रूपम् ।
१५. पयस्काम इत्यत्र **अतः कृकमिकंसे**त्यादिना विसर्जनीयस्य सकारः । परमपयःकाम इत्यत्र पय इत्युत्तरपदम् । **नित्यं समासेऽनुत्तरपदस्थस्येति** निषेधात्सत्वं न ।
१६. अयस्पात्रमित्येव युक्तम् । **अतः कृकमिकंसे**त्यादिना नित्यं सत्वम् ।

**इति विसर्गसन्धिविवेचनम्**

---

१. अभ्यस्येत् । म्ना अभ्यासे ।

# अथ सुप्सु विवेच्यानि

## तत्र नाम्नामधिकारः प्रथमः

१. रोचते मेऽनुवादकला नाम पुस्तकम् । एका प्रतिर्मे प्रहीयताम् ।
२. तारकासुरं जिगीषन्तः कार्तिकेयं सेनानीमैच्छन्सुराः ।
३. त्यजेन्मायाविनं मित्रं धनं प्राणहरं त्यजेत् ।
४. पूर्णचन्द्रनिभाननां सुभ्रूं पद्मपलाशाक्षीं मलपङ्कधरां दीनां सीतां दुःखेन व्यभावयन्मारुतिः ।
५. तपसैव सृजत्येतां विश्वसृक् सृष्टिमुत्तमाम् ।
६. प्राञ्चि काले कन्यकानामपि मौञ्जीबन्धनमभूदिति केचित् ।
७. सम्बन्धिनो हि तत्पत्युर्दायं हरन्तीति स्त्रियाऽकामयापि ते समाश्रयितव्या भवन्ति ।

---

१. प्रतिशब्दो ऽव्ययम् । **अव्ययादाप्सुप** इति सुब्लुका भवितव्यम् । किं च प्रतिशब्दस्य नात्रार्थे शिष्टप्रयोगो दृष्टचर इति यत्नतस्तं परिहरेत् । तदेकं मे प्रहीयतामित्येव शोभनो न्यासः ।
२. **एरनेकाचोऽसंयोगपूर्वस्येति** यणि सेनान्यमित्येव साधु ।
३ सुहृद्वचनस्य मित्रशब्दस्य नित्यनपुंसकत्वात्तद्विशेषणेन मायाविशब्देनापि नपुंसकेन भवितव्यम् । तेन **स्वमोर्नपुंसकात्** इत्यमो लुकि **नलोपः प्रातिपदिकान्तस्येति** नलोपे मायावि इत्येव सुवचम् ।
४. सुभ्रूमित्यपशब्दः । **अचिश्नुधातुभ्रुवामित्युवङि** सुभ्रुवमित्येव शब्दः ।
५. **व्रश्चभ्रस्जेति** सूत्रेण जकारस्य षत्वे जश्त्वे च विश्वसृडिति साधु ।
३, प्राचि इति साधु । अञ्चेःक्विनि **अनिदितां हल इति** नकारलोपः । **उगिदचां सर्वनामस्थाने** इति सर्वनामस्थान एव नुम्विधिः ।
७. तत्पतेरिति वक्तव्यम् । **पतिः समास एवेति** घिसंज्ञा ।

४. अहोऽस्मि परमप्रीतो यस्य मे तादृशः सुतः ।

५. एहि पुत्रक । परिष्वजस्व मां पीडितम् ।[१] चिरमुत्सुकोऽस्मि ते दर्शनेन ।[२]

६. उभेऽपि भगिन्यौ सङ्गीते विशारदे, विशेषतश्च प्रवीणे वीणायाम् ।

७. सर्वस्यात्मा बहुमतः सर्वोत्मानं प्रशंसति ।

८. स्वयं कृते पुण्यपाप अनुवर्तमानो जायस्व[३] म्रियस्वेत्येवायं संसरति[४] देही ।

९. नाभिप्रैमस्त्वं धर्ममेव सततमनुरुन्ध्या इति, अर्थकामावपि यथाकालं जुषस्व ।

१०. अथ त अब्रुवन्मनुम्–भगवन्व्याख्याहि नो वर्णधर्मानिति ।

११. अद्यत्वेऽपेक्षिततमानामर्थानां महर्घता परं क्लिश्नाति जनताम् ।

---

४. ओत् इति प्रगृह्यसंज्ञायां प्रकृतिभावे अहो अस्मीति साधु ।

५. आङ् इहि इत्यवस्थायाम् **आद्गुण** इति गुणेन एहीति साधु ।

६. उभे अपीति साधु । **ईदूदेद् द्विवचनमिति** प्रगृह्यसंज्ञा ।

७. सर्व आत्मानमित्येव साधु । रोर्यादेशे तस्य च शाकल्येन लोपे तस्य चासिद्धत्वादत्परत्वाभावाच्च उत्वं दुर्लभं पूर्वरूपैकादेशश्च दुर्लभतर इत्यलं समाधानयत्नेन । भारते चैष प्रयोगः । **नियोगपर्यनुयोगानर्हा वाचि स्वतन्त्रा महर्षयः ।**

८. पुण्यपापे इत्येव साधु । **ईदूदेद् द्विवचनं प्रगृह्यम्** । प्रगृह्यत्वे प्रकृतिभावः ।

९. नाभिप्रेम इत्येव साधु वृद्ध्यप्राप्तेः ।

१०. तेऽब्रुवन् इतीष्यते । **एङः पदान्तादति** इति पूर्वरूपम् ।

११. महार्घतेति स्यात् । अत्र शकन्ध्वादित्वे शिष्टव्यवहारो मृग्यः ।

---

१ पीडितमिति क्रियाविशेषणं दृढमित्यर्थे । तथा च भारते (सभा० २।२०) प्रयोगः—**पार्थमामन्त्र्य गोविन्दः परिष्वज्य सुपीडितम् ।** इत्युक्त्वा **माधवं कर्णः परिष्वज्य च पीडितम्** (उ० १४३।५०) इति च । श्रीरामायणे स्वल्वपि–**हृष्टः सौहृदमालम्ब्य पर्यष्वजत पीडितम्** (४।५।१३) । विष्णुपुराणे चापि–**तं पिता मूर्ध्न्युपाघ्राय परिष्वज्य च पीडितम्** (१।२०।३०)

२. **प्रसितोत्सुकाभ्यां तृतीया चेति** तृतीया ।

३. **क्रियासमभिहारे लोट्** ।

४. **समुच्चये सामान्यवचनस्येति** सामान्यवचनस्यानुप्रयोगः । संसरतिश्च सामान्येनोभे जननमरणे आह । संसरणं योनिषु सङ्क्रमणं भवति ।

८. हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः (भट्टि० ६।११)।
९. [1]बह्वाम्पीमानि तडागानीति नावगाह्यान्यनाविकेन।
१०. आसां तिसृणामृचामर्थो न सुज्ञानः। विप्रतिपद्यन्तेऽत्र व्याख्यातारः।
११. पोषकृतं पूषाणं पोषं रयीणां नित्यमनुनाथामः[2]।
१२. विरलाः खलु वेदशास्त्रमर्माणां वेदितारः, विरलतराश्च तदर्थानामनुष्ठातारः।
१३. यवीयेभ्यो भ्रातृभ्यः किमाहृतं त्वया। बह्वी हि तेषु ते प्रीतिः।
१४. ईदृंशि कर्कशान्यरुष्कराणि[3] त्वयोदीर्यन्ते वचनानीति किमात्मना नापत्रपसे ?

---

८. सुभ्रु इति सम्बुद्धौ भट्टिप्रयोगः। सुभ्रूरिति चेष्यते। अयमत्र समाधिर्जयमङ्गलायाम्—भ्रूशब्दात् **अप्राणिजातेश्चारज्ज्वादीनामि**त्यूङ्। उवर्णान्तमात्रस्य विधानात् बहुव्रीहिः, उपसर्जनत्वं च। पुनः स्त्रियामूङ्। **अन्तादिवच्चे**ति पूर्वं प्रत्यन्तवत्त्वात् प्रातिपदिकत्वम्। अतः सम्बुद्धौ ह्रस्वत्वम्।
९. **समासान्तविधिरनित्य** इति समासान्तो न कृतः। नित्यमपि च नुममकृत्वा अप्तृन्तृच्-इत्यादिनोपधाया दीर्घे पश्चान्नुमि रूपम् बह्वाम्पि तडागानीति केचिदिच्छन्तीति वृत्तिः। सति समासान्ते बह्वपानीति स्यात्।
१०. **न तिसृचतसृ** इति दीर्घनिषेधे तिसृणामिति साधु।
११. **सौ चे**ति नियमात्पूषणमित्येव साधु।
१२. वेदशास्त्रमर्मणामित्येव न्याय्यम्। **नोपधायाः** इति नामि दीर्घविधेः। इह च नाम् नास्ति। नकारान्तान्मर्मशब्दादामो नुड् दुर्लभः।
१३. यवीयोभ्य इति तु युक्तम्। **झल्येत्** इत्यस्याप्राप्तेः।
१४. ईदृंशीत्येव साधु नान्ताङ्गस्योपधाया दीर्घविधानात्। इह च शकारान्तमङ्गम्।

---

१. बह्व्य आपोऽत्रेति बह्वाम्पि।
२. याचामहे। ३. अरुः क्षतं (व्रणम्), तत्कुर्वन्तीति।

१५. त्रिंशद्भिरपि वर्षैर्नेदं शक्यं निर्वर्तयितुं[1] किमुत त्रिभिः ।
१६. सहस्रेण श्लोकैः संचिक्षेप नीतिशास्त्रमुशनाः ।
१७. ग्राम्याश्चतुष्पदो नृशंसैस्तैर्यवनैर्विनाशिताः ।
१८. यया लक्ष्यते प्रसिध्यतीति यावत् सा लक्ष्मीत्यभिधीयते ।
१९. वत्स ! तथा चेष्टस्व यथा ते वृत्तशीले विगतदोषे गुणवन्ती भवेताम् ।
२०. प्राक्तनं जन्मानभ्युपेयुषो यूय तावद् ब्रूत ईश्वरे वैषम्यनैर्घृण्ये[2] कुतो न स्याताम् ।
२१. शक्यं षट्त्रिंशता वर्षैः साङ्गाः सरहस्याश्चत्वारोऽपि वेदा ग्रहीतुम् ।
२२. सर्वेषां चतुष्पदानां ज्वलनाद् भयं भवति ।
२३. प्रत्यूषसि समुत्थाय वातमासेवितुं बहिर्गच्छेच्चिरं च विहरेत् ।

---

१५. त्रिंशतेत्येकवचनं प्रयोक्तव्यम् । **विंशतेः प्रभृत्या नवनवतेः संख्याशब्दाः स्वभावतः स्त्रियामेकत्वे वर्तन्ते ।**
१६. अन्तादेशेऽनङि प्रथमैकवचने उशना इति निर्विसर्गकं रूपं भवति ।
१७. चतुष्पाद इति प्रथमाबहुवचने शुद्धं रूपम् । द्वितीयाबहुवचने भसंज्ञायां '**पादः पत्**' इति पद्भावे चतुष्पद इति बाढं युज्यते ।
१८. लक्ष्मीशब्दे ईकार औणादिको न तु स्त्रीप्रत्ययः, तेन सुलोपासम्भवः । लक्ष्मीरित्यभिधीयते इत्येवं वक्तव्यम् ।
१९. गुणवती इति साधु । नुमोऽप्राप्तेः । शी सर्वनामस्थानं न ।
२०. अनभ्युपेयुष इति तु द्वितीयायां युक्तम् । इष्यते चात्र प्रथमा । प्रथमाबहुवचने चानभ्युपेयिवांस इति भवति ।
२१. शक्यमिति सामान्योपक्रमे नपुंसकमेकवचनान्तं च साधु । तथा च काव्यालंकारसूत्रवृत्तौ वामनसूत्रम्—**शक्यमिति रूपं कर्माभिधायां विलिङ्गवचनस्यापि सामान्योपक्रमात् ।** तथा च श्रीरामायणे प्रयोगः—**शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः** । कविभिश्चानेकत्र समादृतोऽयं व्यवहार इत्यस्य साधुत्वमनतिशङ्कनीयम् ।
२२. चतुष्पदामित्येव साधु । उपपत्तिर्विस्पष्टा ।
२३. प्रत्यूषे इति वा प्रत्युषसि इति वा प्रयोज्यम् ।

---

**१. साधयितुम् । २. नैर्घृण्य निर्दयता ।**

२४. मनो न रमते स्त्रीणां जराजीर्णेन्द्रिये पतौ ।
२५. सभासदानामाचारशुद्धिर्यशसे कल्पते[1] सभायाः ।
२६. प्रातरुत्थाय प्रसू[2] तावन्नमस्कुर्यात्ततः पितरम् ।
२७. कैश्चनैर्विचारैः प्रयुक्तः सोन्ते गृहमहासीत्[3] प्राव्राजीच्च ।
२८. हरिद्वारे कुम्भमहोत्सवे नैकधां जनसंहतिं विलोक्य ऐक्यमापन्ना भरतदेशस्था इति वैदेशिका भ्रमन्ति ।
२९. ज्येष्ठे मासि विहायसे वितनुते नव्यो घनस्ताण्डवम् ।
३०. अङ्गे जातभङ्गे भयभृतोत्सङ्गरङ्गः कलिङ्गः ।
३१. नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ । पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते (इति पाराशराः) ॥
३२. उर्वशी नामाप्सरा स्वर्गस्यालङ्कारोऽभूत्, श्रियाश्च प्रत्यादेशः ।

---

२४. केवलस्य पतिशब्दस्य घिसंज्ञा नास्तीति सप्तम्यां पत्याविती‌ष्यते । नञ्समासो वात्र द्रष्टव्यः । कुत्सितः पतिरपतिः । अप्राशस्त्ये नञ् ।
२५. सभासदामित्येव साधु । सभासद् इति दान्तं प्रातिपदिकम् ।
२६. प्रस्वमिति द्वितीयैकवचने साधु । **ओः सुपीति** यण्विधेः ।
२७. कैश्चनेत्येव युक्तम् । चनशब्दोऽव्ययम्, पृथक्पदं च ।
२८. **'संख्याया विधार्थे धा'** इति क्रियाप्रकारे धाप्रत्ययस्तद्धितः । **तद्धितश्चासर्वविभक्तिरितीदमव्ययम्** । तेन एकधेति साधु । अस्थाने चायं प्रयोग इति नादृत्यः ।
२९. विहाय इति सकारान्तं प्रातिपदिकं क्लीबपुंसोः, तेन विहायसीत्येव साधु ।
३०. अङ्गाः कलिङ्गा इति चेष्यते । **तस्य निवास** इति चातुरर्थिकस्य **जनपदे लुप्** इति लुपि, **लुपि युक्तवद् व्यक्तिवचने** इति युक्तवद्भावाद् प्रकृतिगते लिङ्गसंख्ये युज्येते । अङ्गानां (क्षत्रियाणां) निवासो जनपदोऽङ्गाः । एवं कलिङ्गाः ।
३१. पत्याविति तु युक्तम् । हेतुश्चोक्तपूर्वः ।
३२. 'अप्सराः' इति विसर्गान्तं साधु । अप्सरस् इति प्रातिपदिकं सकारान्तं न त्वाकारान्तम् । एकत्वेऽप्युत्तरत्रयमित्यमरवचनादेकवचनेऽप्यस्य प्रयोगः क्वाचित्कः ।

---

१. अलं भवति, समर्था भवति ।
२. मातरम् । ३ ओहाक् त्यागे इत्यस्य लुङि रूपम् ।

३३. अल्पायुषमेव जीवजातं निशाम्य[1] लोकस्यानित्यतां भावयेत् ।
३४. अद्यत्वे यथा तथा यतन्ते प्रख्यातिमधिगन्तुमना जनाः ।
३५. पादतलाघातेन नोदयन्तोऽर्वणो वयं क्षणैः कैश्चिदेव गृहमापाम ।[2]
३६. नदीनां च नखीनां च शृङ्गिणां शस्त्रपाणिनाम् । विश्वासो नैव कर्तव्यः... ॥
३७. भगवान् भूतभावनः स्वेन सामर्थ्येनैव द्विपदानभावयच्चतुष्पदांश्च ।
३८ परः पापीयान्पराजेयः निशितैर्वा क्षुरधारैर्यमसादनं[3] नेयः ।
३९. सौधानि ते निर्मिमते नभः स्पृशः ।
४०. इत्थं चातुरीभाजैः प्रगल्भंमन्यैर्वा वाक्यमुत्तरं दीयते ।
४१. एक एव त्वादित्यः द्वादशान्यस्य नामानीति वैदिकाः ।

---

३३. अल्पायुरित्येव साधु । समूहवचनो जातशब्दो नपुंसकम् इति तद्विशेषणेनापि नपुंसकेन भवितव्यम् ।
३४. अधिगन्तुमनस इत्येव साधु । बहुवचनं ह्यपेक्ष्यते ।
३५. अर्वण इत्यपशब्दः । **अर्वणस्त्रसावनञः** इति त्रन्तादेशेन अर्वत इत्येव प्रयोज्यम् ।
३६. बह्वत्र भ्रष्टम् । साधीयः पाठान्तरं च दृश्यते—नदीनां शस्त्रपाणीनां नखिनां शृङ्गिणां तथेति । तेनास्थाने प्रकृतसमाधानयत्नः ।
३७. द्विपदान् चतुष्पदान् इत्युभयमसाधु । असाधुत्वे हेतुरुक्तः पूर्वत्रेति नेहाम्रेड्यते । 'द्विपदः' चतुष्पदः' इति च प्रयोगार्हम् ।
३८. निशिताभिः क्षुरधाराभिरिति वक्तव्यम् । धाराशब्दे ह्रस्वोऽवैधः ।
३९. नपुंसके नभःस्पृंशीति स्यात् । सौधानीति विशेष्यस्य नपुंसकत्वाद् विशेषणस्य च विशेष्यनिघ्नत्वात् ।
४०. चातुरीभाग्भिरित्येव । ण्विप्रत्ययान्तो भाक् शब्दः ।
४१. **षड्भ्यो लुक्** इति जसो लुकि द्वादशेत्येव साधु ।

---

१. शम लक्ष आलोचने इति चुरादेर्निपूर्वात् शामयतेर्ल्यपि ।
२. आप्लृ व्याप्तावित्यस्य लुङि ।
३. यमसदनमेव यमसादनम् । अन्येषामपि दृश्यते (६।३।१३७) इति दीर्घः ।

४२. बौद्धमताराातिनो यतिनः श्रीगोविन्दस्य शिष्यः स्वनामधन्यः श्री-शङ्करः साध्वनुससार गुरुसरणिम् ।
४३. नियते ! त्वमेव वद निर्घृण ! किमित्याजन्म दारिद्र्यसख एव विनिर्मितोऽस्मि ।
४४. अहं हरे ! त एवाऽस्मि । सपदि समुद्धर मां शुचः ।
४५. इयमेका वीणायास्तन्त्री विच्छिन्नेति समाधेया ।
४६. सुतनु ! जहिहि मानं पश्य पादानतं माम् ।
४७. हे उशनः, हे उशन, हे उशनन् ! ब्रूहि ब्रूहि यत्तवेष्टम् । अयमहं तत्सम्पादयामीति होवाच वृषपर्वा दैत्यराट् ।
४८. हे क्रोष्टः ! सम्प्रति विरम । किमिति सर्वरात्रं मुधा विरौषि ?
४९. मित्रेण गोप्त्रा वनानि पर्यटन्नहं न मनागप्यबिभयम् ।

---

४२. अरातिशब्द इकारान्तः, तेन षष्ठ्यामरातेरिति भवति । यति-शब्दश्च इकारान्त इन्नन्तश्च । तेन यतिन इत्यपि न दोषाय ।
४३. नियतिः स्त्रीति तद्विशेषणेन निर्घृणशब्देनापि स्त्रीलिङ्गेन भवितव्यम् । तेन संबुद्धौ निर्घृणे इति युज्यते रूपम् ।
४४. तवैवास्मीति साधु । **न चवाहाहैवयुक्ते** (८।१।२४) इति एवयोगे युष्मदस्ते इत्यादेशो निषिध्यते ।
४५. तन्त्रीरिति साधु । अत्र ईकार औणादिको न तु स्त्रीप्रत्ययः ।
४६. ऊकारान्तस्तनूशब्दोऽप्यस्ति । **अम्बार्थनद्योर्ह्रस्वः** । ह्रस्वविधान-सामर्थ्याद् गुणो न । समासान्तविधेरनित्यत्वाद् नद्यृतश्चेति कपि सुतनूक इति च न भवति ।
४७. उशनसः संबुद्धावपि पक्षेऽनङ् इष्यते । **न ङिसम्बुद्ध्योरिति** नलोपप्रतिषेधोऽपि पक्ष इष्यते । तेन त्रैरूप्यं भवति । तथा चोक्तम्—**सम्बोधने तूशनसस्त्रिरूपं सान्तं तथा नान्तमथाप्यदन्तम्** इति ।
४८. हे क्रोष्टो इत्येव साधु । **तृज्वत्क्रोष्टुः** इति सर्वनामस्थानेऽसम्बुद्धौ प्रवर्तते ।
४९. गोप्त्रेति मित्रेणेत्येतद्विशिनष्टि । तेन गोप्तृणेति युज्यते । **तृतीयादिषु भाषितपुंस्कं पुंवदित्यनेन** पक्षे पुंवद्भावे गोप्त्रेत्यपि साधु ।

५०. यती व्रती चापि पतिव्रता च वीरश्च शूरश्च दयापरश्च ।
त्यागी च योगी च बहुश्रुतश्च सुसङ्गमात्रेण दहन्ति पापम् ॥
५१. अत्यासत्तिर्विनाशाय त्वतिदूरं तु निष्फलम् ।
सेवा च मध्यभावेन राजवह्निगुरुस्त्रियाम् ॥
५२. रे रे दुर्जनाग्रणे बाढमनियन्त्रितं ते तुण्डम् । विरमातः परं वाक्प्रसङ्गात् ।
५३. शक्यार्थपरिग्रहेणान्वयानुपपत्ति प्रतीत्य शक्यार्थसम्बन्धिनमर्थान्तरं स्मरति ।
५४. पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः (मनु. १।४३) ।
५५. सा कदाचित्स्वपत्युर्गृहद्वारि पतिता मुमूर्षुरदृश्यत ।
५६. महामहिम ! भिक्षुकस्य मम कोऽयमुपहासः ।
५७. इदमाह पुरास्माकं भगवान्विश्वसृक्पतिः (भा० पु० ४।२४।७२) ।

---

५०. यतीत्यपि साधु । इन्नन्तोऽपि यतिन् इति शब्दोस्ति ।
५१. षष्ठ्यां स्त्रीणामित्येव साधु । **नेयङुवङ्स्थानावस्त्री** इत्यत्र स्त्रीपर्युदासात् स्त्रीशब्दस्य नदीसंज्ञायास्तादवस्थ्याद् आमो नुट् ।
५२. सम्बुद्धौ 'दुर्जनाग्रणे' इत्यसाधु । अग्रणीरिति क्विबन्तं शब्दरूपम् । तत्र ह्रस्वस्याप्राप्तेः । ह्रस्वस्य गुणविधिरिति तदभावे तदभावः सुतरां सिद्ध इति 'दुर्जनाग्रणीः' इत्येव साधु ।
५३. शक्यार्थसम्बन्धि इति तु वक्तव्यम् । इदं हि अर्थान्तरमिति नपुंसकं विशिनष्टि ।
५४. दन्तशब्दसमानार्थो दच्छब्दः प्रकृत्यन्तरमस्ति । तस्येदं प्रथमाबहुवचने रूपमिति निर्दोषं वचः ।
५५. स्वपतेरिति वक्तव्यम् । समासे घिसंज्ञाविधानात् ।
५६. **नलोपः प्रातिपदिकान्तस्येति** नलोपे प्राप्ते **न ङिसम्बुद्ध्योरिति** तन्निषेधान् 'महामहिमन्' इत्येव साधु ।
५७. **व्रश्चभ्रस्जसृजे**ति सूत्रेण सृजेर्जकारस्य पदान्ते षविधानात् विश्वसृट्पतिरिति साधु ।

१२. तस्मिन् विप्रकृताः काले तारकेण दिवौकसः । तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः (कु० २।१) ॥
१३. आत्ममनसोरेकत्वऽऽत्मा प्रतिक्षणं परिवर्तेत । तन्नेष्यते ।
१४. विप्रोषिता विद्यार्थिन अकामतोऽपि न तथा वर्तेरन् यथाऽस्य देशस्य मानो देशान्तरेऽपकृष्येत ।
१५. शास्त्रेणातिशयने तमबिष्ठनौ विधीयेते ।
१६. अथैतच्छ्रुत्वा द्वीपि आह ।
१७. उपैषस्व गुरून् । अर्हन्तस्ते मार्गमुपदेक्ष्यन्ति ।

## हल्सन्ध्यधिकारो द्वितीयः

१. इमान्यन्तरङ्गानि साधनानि, इमानि बहिरङ्गानि ।
२. यदीयं किम्वदन्ती राजानं स्पृशेत्तदाऽतिदारुणं स्यात् ।
३. इमे दोषा गुणान्तिरस्कुर्वन्ति महतामपि ।

---

१२. स्वायम्भुवमित्यत्र **ओर्गुण** इति गुणो न कृतः, संज्ञापूर्वको विधिरनित्य इत्यदोषः ।
१३. एकत्व आत्मेत्येव साधु । पूर्वरूपस्याप्राप्तेः ।
१४. विद्यार्थिनोऽकामत इति स्यात् । रोरुत्वे आद्गुणे **एङः पदान्तादति** इति शास्त्रेण प्रवृत्यम् ।
१५. अतिशायने इत्येव वक्तव्यम् । **बाधकान्येव निपातनानि भवन्तीति । अतिशायने तमबिष्ठनाविति** सूत्रेऽतिशायनमिति निपातितम् ।
१६. **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्चेति** प्रकृतिभावो ह्रस्वश्च वा भवतः ।
१७. **एङि पररूपमिति** पररूपत्वे उपेषस्वेति साधु । एषृ गताविति भ्वादिष्वनुदात्तेत् पठितः ।

### इत्यच्सन्धिविवेचनम् ।

१. अन्तरङ्गाणि बहिरङ्गाणीति च भाव्यम् । **कुमति चेति** मित्यं णत्वं दुर्वारम् ।
२. किंवदन्तीत्येव साधु । **मोऽनुस्वार** इत्यनुस्वारः ।
३. गुणांस्तिरस्कुर्वन्तीति वाच्यम् । **नश्छव्यप्रशान्** इति नस्य रुः ।

४. आचार्यो मेऽसंनिहितः, आचार्याणीं नमस्कृत्य यास्यामि ।
५. भिषजादीनामन्नं नोपभुञ्जीतेति स्मरन्त्यृषयः ।
६. किं विधवापुनरुद्वाहस्य शास्त्रदृष्टतां सिसाधयिषस्युताद्यत्वे तदुपयोगिताम् ।
७. अप्यन्तरायाण्यार्य ?
८. यन्मान्या विशेषविदो दुर्गता इत्यवमन्यन्ते लोकेन स दुर्णयः ।
९. प्राज्ञेति पदं व्युत्पाद्यतां स्वार्थिकेन तद्धितेन मत्वर्थीयेन वा यथाकामम् ।
१०. विराजादिशब्दानां सन्ति मुख्या अर्थाः सन्ति च गौणाः प्रकरणाद्यनुरोधात् ।
११. देवीं सरस्वतीं नमः कृत्वा बृहस्पतिसमं गुरुं च पुरः कृत्य वाक्यमुक्तावलीं नाम पुस्तिकां प्रणेतुमारभे ।

---

४. आचार्यानीति साधु । **आचार्यादणत्वं चेति** वक्तव्याण्णत्वनिषेधः ।
५. **भिषगादीनामिति** चोः कुत्वे कृते साधु । पदान्त एष विधिः । **भिषगिति** पूर्वपदम् ।
६. सिषाधयिषसीत्यभ्यासादुत्तरस्य सकारस्य मूर्धन्यादेशे साधु । **स्तौतिण्योरेव षण्यभ्यासादिति** नियमात् । साधेर्ण्यन्ताच्चात्र सन् ।
७. अन्तरायाणीति लोडुत्तमैकवचने साधु । **अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यमि**त्युपसर्गतायाम् **आनि लोट्** इति णत्वम् ।
८. दुर्नय इत्येव साधु । दुरः **षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्य** इति णत्वनिमित्तमेव नास्ति ।
९. **प्राज्ञ** इत्येवं वक्तव्यम् । रोर्यस्य लोपः । लोपः शाकल्यस्येत्यस्यासिद्धत्वाद् गुणो न । अनुकरणम् अनुकार्येणार्थेनार्थवदिति सुबुत्पत्तिः । अनर्थकमनुकरणमिति मते तु यथास्थितमदुष्टम् ।
१०. विराडादिशब्दानामिति **व्रश्चभ्रस्जेति** सूत्रेण षत्वे ततो जश्त्वे च कृते साधु ।
११. नमः कृत्वेति निरवद्यम् । **साक्षात्प्रभृतीनि** चेति विभाषा गतिसंज्ञा । गतिसंज्ञाऽभावे **नमःपुरसोर्गत्योरिति** विसर्गस्य सत्वमपि न । पुरः कृत्येति दुष्टम् । **पुरोऽव्ययमिति** गतिसंज्ञा । तेन विसर्गस्य सत्वे पुरस्कृत्येत्येव साधु ।

१२. अत्रार्थे किमप्युपष्टम्भकं प्रमाणं नोपलभामहे ।
१३. विद्युत्प्रणाशं स वरं प्रणष्टः कल्याणमतिषु सुजनेषु कष्टायते[1] यः ।
१४. अत्र श्रेण्यां चतुःपञ्चाशच्छात्राः । अनुवत्सरं ह्रसति **संख्या** ।
१५. प्रियम्वदो मे प्रियवयस्यः सर्वस्य प्रियार्हो विशेषतो मे प्रियसख्याः ।
१६. इयं मे मातृस्वसा । इयं मयि भृशं वत्सला ।
१७. मूर्छन्त्यमी[2] विकाराः प्रायेणैश्वर्यमत्तेषु ।
१८. अद्यत्वे भोजनाछादने अपि दुर्लभे किमुत सुखोपकरणान्तरम् ।
१९. किं जानीषे सीतायाः स्वयम्वरे के के राजानः संनिपतिताः[3] ।
२०. सर्गेस्मिञ्चेतना अचेतनाश्च सर्वेऽर्थाश्चेष्टमाना लक्ष्यन्ते ।
२१. विषिण्वन्ति विषयिणमनुबध्नन्ति स्वेन रूपेणेति विषयाः ।

---

१२. उपस्तम्भकमिति साधु । मूर्धन्यादेशे प्रमाणविरहात् ।
१३. **नशेः षान्तस्येति** णत्वे निषिद्धे प्रनष्ट इति साधु ।
१४. **इदुदुपधस्य चाप्रत्ययस्येति** विसर्जनीयस्य षत्वे **चतुष्पञ्चाश-** दिति साधु ।
१५. मोऽनुस्वारे प्रियंवद इति साधु ।
१६. **मातृपितृभ्यां स्वसेति** षत्वे मातृष्वसेति साधु ।
१७. **अचो रहाभ्यां द्वे** इति द्वित्वं विभाषितम् । तेन द्वित्वाभावपक्षे मूर्छन्तीति साधु ।
१८. भोजनाच्छादने इत्यत्राङ्**माङोश्चेति** नित्यं तुका भवितव्यम् ।
१९. स्वयंवर इति स्यात् । **मोऽनुस्वार** इत्यनुस्वारो दुर्निवारः ।
२०. अस्मिंश्चेतना इति वक्तव्यम् । **नश्छव्यप्रशान्** इति नस्य रुः । पूर्वत्रासिद्धमिति **स्तोः श्चुना श्चुरित्यसिद्धवद्**भवति । **तेन पूर्वं** नकारस्य चवर्गादेशो न ।
२१. **सात्पदाद्योरिति** निषिद्धः **परिनिविभ्यः सेवसितसयेत्यादिना सूत्रेण** सयशब्दस्य सकारस्य मूर्धन्यो ऽभ्यनुज्ञायते न तु तत्प्रकृतेः सिनोतेरपीति विसिन्वन्तीत्येव साधु । विषिण्वन्तीत्यपप्रयोगः साङ्ख्यतत्त्वकौमुद्याममरोद्घाटने च स्थितः ।

---

१. पापं चिकीर्षतीत्यर्थः । कण्वचिकीर्षायां क्यङ् । कण्वं पापम् ।
२. वर्धन्ते इत्यर्थः । ३. समवेताः ।

२२. भुवनप्रथितप्रख्याणां क्षत्रियपुङ्गवानां भूरेषेति कस्य नेहाभिमानः ।
२३. दुराचारस्य प्रणश्यति कीर्तिः प्रणश्यति च वित्तम् ।
२४. यद्यपि नद्यां निस्नातोऽस्मि तथाप्यस्यां सरस्यां सिष्णासामि ।
२५. दाक्षिण्यं नाम परछन्दानुवर्तनम् । प्रियङ्करोऽयं गुणः ।
२६. या नः साम्प्रतिकी परिस्थितिः सा निपुणमालोच्या ।
२७. प्रखरनखरैः प्रतिष्किरति[1] व्याघ्रो मेषीम् ।
२८. त्रिहायणेयं[2] पाठशाला कमप्यपूर्वं प्रकर्षं प्राप्तेति यत्सोऽस्या अध्यक्षस्य गुणः ।
२९. किं भोः सुसिक्तम् ? यथा तथा सुषिक्तं किं तवानेन ?

---

२२. भुवनप्रथितप्रख्यानामित्येव साधु । **असिद्धे शस्य यवचनं विभाषेति** भाष्ये स्थितम् । इदमुक्तं भवति । चक्षिङः ख्याञ् इति ख्शादिरयमादेशः । शस्य च यवचनमसिद्धकाण्डे द्रष्टव्यम् । तेन शकारेण व्यवधानात् प्रातिपदिकान्तेति शास्त्रेण वैकल्पिकं णत्वं न ।
२३. **उपसर्गादसमासेऽपीति** णत्वे प्रणश्यतीति यथास्थितं साधु ।
२४. निस्नातोऽस्मीति साधु । **निनदीभ्यां स्नातेः कौशले** इति कौशले गम्यमाने णत्वं विहितम् । नेह कौशलं विवक्षितम् । सम्यक् स्नात इत्येवार्थः ।
२५. परच्छन्दानुवर्तनमिति तुकि सति साधु ।
२६. **उपसर्गात्सुनोतिसुवतो**त्यादिना मूर्धन्ये परिष्ठितिरित्येव साधु । परिशब्दोऽनर्थक इति चेन्मतम् **अधिपरी अनर्थकाविति** कर्मप्रवचनीयत्वे यथास्थितेऽपि न दोषः ।
२७. **हिंसायां प्रतेश्चेति** सुटि प्रतिस्किरतीत्येव साधु । परिनिविभ्यः सुटो मूर्धन्यादेशविधानात् ।
२८. त्रिहायनेत्येव साधु । **त्रिचतुर्भ्यां हायनस्येति** णत्व वयस्येव स्मर्यते । कालकृतशरीरावस्था वयः, तच्चेह नास्ति ।
२९. **सुः पूजायामिति** कर्मप्रवचनीयत्वे उपसर्गनिमित्तं षत्वं न । सुषिक्तमित्यत्र पूजार्थेऽसत्युपसर्गत्वं तदवस्थम् । तेन षत्वमित्युभयत्रादोषः ।

---

१. हिनस्ति । २. त्रिवार्षिकी ।

३०. नरवाहण इति धनदनामसु पठितम् । तत्र नरान् अनाक्रम्य न शक्यो महान्धनराशिः सम्पादयितुमित्यार्याणामभिप्रायो भाति ।
३१. अहरहोऽधीते स्वाध्यायं प्रयतो गृहस्थः ।
३२. यदत्र मेऽभिस्यात्[1] तन्मे दातुमर्हसि । न ततोधिकं मार्गामि[2] ।
३३. अन्याय्यमपरिणिष्ठितस्योपदेशस्य प्रदर्शनम् ।
३४. इदं सर्पिः, इदं च सर्पिष्टरम्[3] । कुत इदं वेत्थ ?
३५. इदं पयः, इदं च पयःपाशम्[4] इति वचनं नापेक्षते ।
३६. यत्परकृतनिकृतिं नार्हति तेजस्वी विषोढुं सोऽस्य स्वो भावः ।
३७. आकाङ्क्षायोग्यतासत्तितात्पर्याख्याणि चत्वारि कारणानि शाब्दबोधे ।

---

३०. नरवाहन इत्येव समीचीनम् । नरो वाहनमस्येति विग्रहः । यस्मान्नरशब्दोऽनाहितवचनः तस्मात् **वाहनमाहितात्** इत्यस्यात्यन्तमप्राप्तिः । **पूर्वपदात् संज्ञायामग** इत्यनेनापि णत्वं नेष्यते । क्षुभ्नादित्वात् । एवं श्रीघनः शास्ता मुनिः, स्वर्भानुः, चित्रभानुः इत्यादिषु णत्वाभावः ।
३१. अहरहरधीते इत्येव साधु । **रोऽसुपीति** रेफः ।
३२. **अभिरभागे** इति भागेर्थे उपसर्गत्वमप्रतिषिद्धम् । तेन **उपसर्गप्रादुर्भ्याम् अस्तिर्यच्परः** इति षत्वेऽभिष्यादित्येव साधु । अतएव ममेति शेषे षष्ठी ।
३३. अपरिनिष्ठितस्येत्येव साधु । णत्वविधायकशास्त्रस्यानुपलम्भात् ।
३४. **ह्रस्वात्तादौ तद्धिते** इति सकारस्य मूर्धन्यादेशे सर्पिष्टरमिति साधु ।
३५. पयस्पाशमित्येव साधु । **याप्ये पाशप्** इति पाशप् प्रत्ययो निन्दायाम् । **सोऽपदादौ** इति विसर्जनीयस्य सकारः । स च पाशककल्पकाम्येषु नियम्यते ।
३६. विसोढुमिति वक्तव्यम् । **सोढः** इति मूर्धन्यादेशनिषेधात् ।
३७. तात्पर्याख्यानीति साधु । मूलगतस्यासाधुत्वे पूर्वत्र (द्वाविंशे वाक्ये हेतुरुक्तः ।

---

१. भागः स्यात् । २. याचामि । ३. साधीयो घृतम् । ४. कुत्सितं क्षीरम् ।

३८. ते नाम श्रेयान्सो ये स्वार्थाविरोधेन परहितं राध्नुवन्ति ।
३९. विरला एव पुमान्सः स्वार्थमतिहाय परार्थैकसाधनपरा भवन्ति ।
४०. प्राणवायुं पूर्वमन्त आददीत ततो बहिर्गमयेत् । एवं त्रिः प्राणानायच्छेत् ।
४१. तेजस्कामो ब्रह्मचर्यं परिसेवेत । ब्रह्मचर्येण देवा मृत्युमपाघ्नतेत्याथर्वणिकाः ।
४२. यो जायते स अवश्यं म्रियते इत्युत्सर्गः क्वापि नापोद्यते ।
४३. परः कोट्यः प्रजा नवोदितं शशिनमिवाभिनन्दन्ति स्य श्रीजवाहरलालं महामन्त्रिणम् ।
४४. अवष्टब्धो[1] वृषलः शीतेन ।
४५. तस्य स्वसा विषूचिकया मृतेति निशम्य स चिरमशोचीत् ।
४६. प्रातस्कल्पा[2] शर्वरीति प्रस्थेयं नः । कालसङ्गः[3] परिहार्यः ।

---

३८. **नश्चापदान्तस्य झलीत्य**नुस्वारे श्रेयांस इति स्यात् ।
३९. पुमांस इत्येव साधु । पूर्ववच्छास्त्रकार्यम् ।
४०. अन्तराददीतेति वक्तव्यम् । अन्तर् इति रकारान्तमव्ययम् । रोरेव यादेशो विहितो न तु रेफस्य । असति यादेशे शाकल्यप्राप्तिरेव न ।
४१. **परिनिविभ्यः सेवसितसये**त्यादिना मूर्धन्यादेशे परिषेवेतेत्येव साधु ।
४२. सस्य रुत्वे **अतो रोरप्लुता**दित्युत्वे आद् गुणे **एङः पदान्तात्** इति पूर्वरूपे सोऽवश्यमिति साधु ।
४३. पारस्करादित्वात्सुडागमः । सुट्कात्पूर्व इति परस्यादिर्भवति टित्वान्न तु पूर्वस्य । तेन सकारस्य पदान्तता नास्ति । तेन परस्कोटय इत्येव साधु । प्रयोगस्तु दुर्लभः ।
४४. अवस्तब्ध इत्येव साधु । मूर्धन्यादेशे निमित्ताभावात् ।
४५. विषूचिकेत्यत्र षत्वे शास्त्रम् मृग्यम् । सुषामादित्वं वा कल्पनीयम्
४६. प्रातःकल्पेत्येव साधु । सत्वविधौ अनव्ययस्येत्युक्तत्वात् । प्रातः शब्दश्चाव्ययम् ।

---

१. गात्रस्तम्भं प्राप्तः । २. प्रभातप्राया । ३. विलम्बः ।

४७. द्विजः शुध्येत्पराकेन शूद्रः कृच्छ्रेण शुध्यति ।

४८. तदहोऽन्यत्र व्यापृतो भवितास्मीति न सखायं द्रष्टुं पारयितास्मि ।

४९. वैडालव्रतिकं दाम्भिकं द्विजं वाग्मात्रेणापि नार्चयेत् ।

५०. अन्तर्यामिनो भगवतः किं नाम तिरोहितम् ?

५१. अचां हल्सु हलां चाक्षु संमिश्रः संनिवेशो दृश्यते भाषान्तरवर्णमालासु ।

५२. शास्त्राण्यध्यापयितुं प्रभूनां विशेषज्ञानां युज्यते भूयान् समादरः ।

५३. परोलक्षेषु मनुष्येषु कश्चिदेवात्मोपलब्धये यतते ।

५४. सापराधक्षमापनं चेह नम्रं निवेदयामि बालस्यापि मे वचः किञ्चिदवधानमर्हति ।

५५. शुद्धसरल संस्कृतोपनिबद्धानि प्रमेयमात्रपरिचायकाणि वेदव्याख्यानानि विरचनीयानि ।

५६. स्वयमनुत्तीर्णः कः परान्तारयेत् ।

---

४७. अट्कुप्वाङ् इति णत्वे पराकेणेति भवितव्यम् ।

४८. तदहरिति तु न्याय्यम् । हेतुरधस्तादुक्तः ।

४९. वाङ्मात्रेणेति वाच्यम् । मात्रचि **प्रत्यये भाषायां नित्यमिति** वचनान्नित्यमनुनासिकः । अवधारणवचने मात्रशब्दे च व्यवस्थितविभाषाविज्ञानात्सिद्धम् ।

५०. अन्तर्यामिन इत्यदुष्टम् । **प्रातिपदिकान्तेति** सूत्रेण णत्वविकल्पविधानात् ।

५१. **इण्कोः, आदेशप्रत्यययोर्** इति षत्वे हल्षु इत्येव साधु ।

५२. **एकाजुत्तरपदे णः** इति नित्ये णत्वे प्रभूणामित्येव साधु ।

५३. परस्लक्षेष्विति स्यात् । हेतुस्तु परःकोटय (४३) इत्यत्रोक्तः ।

५४. सापराधक्षमापणमित्येव संस्कारवत् । णत्वस्य निर्बाधत्वात् । आपुक् त्वपाणिनीय इत्यन्यदेतत् ।

५५. परिचायकाणीत्यत्र णत्वं दुर्लभम्, चकारेण व्यवधानात् ।

५६. परांस्तारयेत् इत्येव साधु । **नश्छव्यप्रशान्**निति हि नित्यो विधिः ।

५८. वीतजन्मजरसः परं शुचि ब्रह्मणः पदम् (कि० ५।२२)।
५९. पदापि युवतीं भिक्षुर्न स्पृशेद् दारवीमपि (भा० पु० ११।८।१३)।
६०. सव्येष्ठाः सादिनश्चोपहितकवचकाः (मोह० २।१६)।
६१. मान्धाता नवदम्पतीरतिगतिं निर्माय मोमुद्यते (मोह० ४।३९)।

## सर्वनाम्नामधिकारो द्वितीयः।

१. गृहस्यैकतमे देशे न्यासो गुप्तप्रच्छन्नस्तिष्ठतीति चिन्तां मा गाः।
२. एतयोरेकतरत्पुस्तकं मे देहि, निरूढकार्यस्त्वरितं प्रत्यर्पयिष्ये।
३. अमीषामन्यतमस्मै च्छात्राय पारितोषिकं दीयताम्। एतदेव पर्याप्स्यति।

---

५८. वीतजन्मजरस इति षष्ठ्येकवचनान्तम्। वृत्त्यनुसारिणस्तु पूर्वविप्रतिषेधेन ङसः स्यादेशे कृते जरसादेशो न प्रवर्तत इत्याहुः। तन्मते वीतजन्मजरस इति षष्ठ्येकवचनं नोपपद्यते। अत एव ते वीतजन्मरजस इति पठनीयमित्याहुः। दीक्षितप्रभृतयस्तु षष्ठ्येकवचने ङसि वैकल्पिको जरसादेशो निर्बाध इति मतमास्थिताः।
५९. पदाऽपि **पद्दन्नोमास्** (६।१।६३) इति पादशब्दस्य पद् इत्यादेशे तृतीयैकवचनान्तं साधु।
६०. सव्येष्ठा इति विसर्जनीयान्तं पदमवद्यम्। सारथिवचनः सव्येष्ठृशब्द ऋकारान्तः। तेन प्रथमैकवचने सव्येष्ठा इत्याकारान्तं रूपमिति बालस्यापि विदितम्। बहुवचने तु सव्येष्ठार इति स्यात्।
६१. नवदम्पतीरतिगतिम् इत्यत्र दम्पतीशब्दे दीर्घो नोपपद्यते। **सुपो धातुप्रातिपदिकयोरिति** समासे सुब्लुकि सति **प्रथमयोः पूर्वसवर्ण** इति प्राप्तिरेव न। तस्मान्नवदम्पतिरतिगतिम् इत्येवं वाच्यमवाच्यतायै।

## इति सुप्सु नाम्नां विवेचनम्

१. 'एकतमस्मिन्' इति युक्तम्। सर्वादिगणे डतरडतमौ पठ्येते।
२. **एकतरात्प्रतिषेध** इत्यद्डादेशनिषेधे एकतरमित्येव साधु।
३. अन्यान्यतरयोरेव सर्वादिगणे पाठात्सर्वनामसंज्ञा, न त्वन्यतमशब्दस्यापि, तेन अन्यतमायेत्येव वक्तव्यम्।

४. विश्वेऽस्मिन्नह्यतः परतरं पातकमस्ति यदनृतम् ।
५. तपसैव सृजत्येनां विश्वसृट् सृष्टिमुत्तमाम् ।
६. आर्येतराणां मिथः कलहाः किंकृता इति न न विदितं प्राकृतस्यापि ।
७. आर्येतराणां वेदेऽधिकारो नाभ्यनुज्ञातः । तत्र कारणेन गुरुणा भवितव्यम् ।
८. को नाम प्रजापतिरिरिति चेत्कस्मै देवाय हविषा विधेमेति मन्त्रवर्णे कायेति साधु स्यात् । तत्र कथं पश्यसि ?
९. न ह्यनृतादितरं महत्तरं पातकमस्ति ।
१०. सर्वमिदं विश्वं ब्रह्मण्यन्तर्निविष्टम् ।
११. पूर्वस्यामुदेति सूर्यः पश्चिमस्यामस्तमेति च ।
१२. स्वकपोलकल्पिता एताः कथाः । एताः को नाम प्रतीयात्[1] ?

---

४. विश्वशब्दः सर्ववचनः सर्वनाम । जगत्यर्थे तूपचर्यते तात्पर्यतः । तेन विश्वस्मिन्निति वक्तव्यम् ।
५. अन्वादेशाभावे एनामित्यस्य स्थाने एतामिति स्यात् ।
६. आर्येतराणामिति द्वन्द्वो विवक्षितः, मिथःशब्दप्रयोगात् । द्वन्द्वे च सर्वनामसंज्ञानिषेध इति नामि रूपं साधु ।
७. अत्र आर्येतराणामिति पञ्चमीसमासो विवक्ष्यते । तेन सर्वनामसंज्ञायां स्थितायाम् आर्येतरेषामिति साधु ।
८. मन्त्रवर्णे किंशब्दः प्रश्नवचन इत्यव्याहता सर्वनामसंज्ञेति न कश्चिद्दोषः ।
९. **अद्ड् डतरादिभ्यः पञ्चभ्यः** (७।१।२५) इति स्वमोरद्डादेशविधानाद् इतरदित्येव न्याय्यम् ।
१०. विश्वशब्दः सर्ववचन इत्युक्तमधस्तात् । तेन सर्वशब्दः सुपरिहरः । पर्यायवचनानां युगपदप्रयोगात् । **युगपत्प्रयोगे तु पर्यायाः पर्यायत्वं जह्युः ।**
११. पश्चिमायामित्येव साधु । पश्चिमशब्दस्य सर्वादिगणे पाठाभावात् सर्वनामसंज्ञा नास्ति ।
१२. एताः को नामेत्यत्र एतच्छब्दोन्वादिष्टः । अन्वादेश एनादेशे सत्येना इति स्यात् ।

---

१. श्रद्दधीत । प्रतिपूर्वाद् इणो लिङि रूपम् ।

१३. अद्यत्वे संस्कृताधीतिस्तु विशिष्टवर्ग एवैके दृश्यते न तु जनकाये[1] निर्विशेषम् ।
१४. य इमेऽन्तरस्यां[2] पुरि वसन्ति ते निष्टचाः[3] ।
१५. नायमर्थः प्रत्येकस्मै प्राणिने समं हित इति शक्यमध्यवसातुम्[4]।
१६. द्वये वा प्राजापत्या देवाश्चासुराश्च । द्वेधा च प्रवृत्तिर्द्वयेषाम् ।
१७. ये नामोभयाल्लोकात्परिभ्रष्टास्ते हता हताशाः ।
१८. अमुकपुत्रस्येदं गेहममुकेनामुकमूल्येन क्रीतमिति वितत्य पत्त्रे न्यस्येत् ।
१९. दक्षिणस्या उत्तरां याति, उत्तरायाश्च दक्षिणां दिङ्मूढो यात्रिकः ।
२०. नक्तं भीरुरयं त्वमेव तमिमं राधे गृहं प्रापय (अमरु०) ।

---

१३. एकस्मिन्नित्येव युक्तम् ।
१४. अपुरीति (१।१।३६ वा०) पर्युदासाद् अन्तरायामिति वक्तव्यम् ।
१५. प्रत्येकमिति तु युज्यते । प्रत्येकमित्यव्ययीभावो वीप्सायाम् । अव्ययीभावश्चाव्ययं भवतीति सुपो लुकि रूपम् । प्राणिन इत्यस्य स्थाने प्राणिभ्य इति पुंबहुत्वे प्रयोगो व्यवहारानुपातीति च न तिरोहितं प्रेक्षावताम् । वीप्सा व्याप्तिः । स्वभावत एव सा बहुविषया भवतीति युज्यते बहुवचनम् ।
१६. जसि विभाषेत्युक्तम् । अप्राप्तविभाषा चेयम् । तयपोऽयजादेशः । तेन षष्ठ्यां सर्वनामसंज्ञाया अभावाद् द्वयानामित्येव साधु । अत्र विषये माघोपि बभ्राम व्यथा द्वयेषामपि मेदिनीभृताम् (शिशु० १२।१३) इति प्रयुञ्जानः ।
१७. उभयस्मादित्येव साधु । पूर्वादिषूभयशब्दो नान्तर्भवतीति **पूर्वादिभ्यो नवभ्यो वेति** विकल्पो न ।
१८. अमुकमित्यव्युत्पन्नं प्रातिपदिकम् ।
१९. उत्तरस्या इति वक्तव्यम् । उत्तरशब्दः सर्वनाम ।
२०. अमरुशतकवचनमिदम् । भीरुत्वस्यानुवाद्यत्वेन विवक्षितत्वादिहान्वादेशो नास्ति । तेनादोषः । किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेश इत्युक्तत्वात् ।

---

१ कायशब्दः समूहवचनः । जनकाये जनतायाम् इत्यर्थः । २. बाह्यायाम् । ३. चाण्डालाः । ४. निश्चेतुम् ।

२१. या ब्राह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्ति ।
२२. गेये केन विनीतौ वाम् ?
२३. एतयोरुभयजात्योः सम्बन्धविशेषः समस्ति ।
२४. सर्वथा स्वात्ममानो रक्षणीयः प्राणैरपि धनैरपि ।
२५. प्रभूताः स्वा[1] न दीयन्ते, प्रभूताः स्वा न भुज्यन्ते (काशिकायाम्) ।
२६. नहि समेऽपि लोकाः सर्वत्र समं प्रवीणा भवन्ति ।
२७. गुरो ! यदत्र [2]मयकाऽजानता कृतं तन्मर्षितुमर्हसि ।
२८. सामान्यादिष्वन्यतमत्तमः ।
२९. प्राच्यादीनामन्यतमस्यां दिश्युद्वसेत् (आश्व० गृ० ४।१।४) ।
३०. हे देवदेव ! के वयं त्वा चेतसा समीक्षितुम् ।

---

२१. एनामिति न युक्तम् । अन्वादेशाभावात् । सकृदेवैतच्छब्द उपात्तः ।
२२. श्रीरामायण उत्तरकाण्डेऽयं प्रयोगः । वामित्यादेशं पाणिनीया न सहन्ते । युवामित्येव न्याय्यम् ।
२३. उभयशब्दस्यैकत्वे बहुत्वे च प्रयोगो नियत इत्येतस्या उभयजातेरिति वक्तव्यम् ।
२४. स्वात्ममान इति दुष्टम् । स्वात्मनोः पर्यायत्वाच्छक्यं नामैकतरं हातुम् । तथैव चोपन्यासः साधुर्भवति ।
२५. **स्वमज्ञाती**त्यादि सूत्रे अज्ञातिधनाख्यायामिति पर्युदासाद्धनेर्थे सर्वनामसंज्ञा नेति नेह कश्चिद् दोषः ।
२६. सर्ववचनः समशब्दः सर्वनाम गणे पाठात् तेन समे इति साधु ।
२७. मयकेति साधु । '**अव्ययसर्वनाम्नामकच्प्राक्टेः**' इत्यकच् ।
२८. अन्यतमशब्दो डतमप्रत्ययान्तो न । तेन **अद्ड्डतरादिभ्यः पञ्चभ्य** इत्यनेन सोरद्डादेशो न युक्तः । अन्यतमम् इत्येव युक्तम् ।
२९. अन्यतमशब्दस्य सर्वादिगणे पाठाभावात्सर्वनामसंज्ञा नेति अन्यतमायामित्येव साधु ।
३०. त्वेति न शक्यं प्रयोक्तुम् । **पश्यार्थैश्चानालोचने** (८।१।२५) इति त्वादेशनिषेधात् । त्वाम् इत्येव साधु ।

---

**१.** धनानि । २. कुत्सितेन मया । सर्वनाम्नोऽकच् ।

३१. उपहास्याः परेषां च शोच्याः स्वेषां भवन्ति च (कथा० ६२।१९२)

## अथ स्त्रीप्रत्ययेषु विवेच्यानि ।

१. गिरः क्षोभकराः श्रुत्वा चिरं दूयते मे वयस्यः ।
२. तावकीयं मतिर्न मामकी । मम त्वन्य एवाभिप्रायः ।
३. वसुन्धरे ! त्वमसि जडाजडाश्रया । नानुपपन्नः सङ्गदोषात् तेऽविवेकः ।
४. भयङ्करीयं मूर्त्तिर्दृष्टमात्रा लोमानि मे हर्षयति[1] ।
५. त्वं मे प्राणानामीश्वरी, त्वद्विरहितो न जीवामि ।
६. इयं शूर्पनखीति रूपेण वृत्तशीलाभ्यां च विसदृश्यपि किंचित्सदृशी शूर्पणखायाः ।

---

३१. स्वानाम् इति तु युक्तम् । **स्वमज्ञातिधनाख्यायाम्** (१।१।३५) इति शास्त्रेण ज्ञात्यर्थे सर्वनामसंज्ञायाः पर्युदासात् ।

## इति सुप्सु सर्वनाम्नां विवेचनम्

१. कृञो हेतुताच्छील्यानुलोम्येषु इति ट प्रत्यये टित्वान्ङीपि क्षोभकरीरित्येव न्याय्यम् ।
२. केवलमामकभागधेयेत्यादिना संज्ञाछन्दसोर्ङीब्विधानाद् भाषायां प्रत्ययस्थात्कात्पूर्वस्य-इत्यत्र मामकनरकयोरुपसंख्यानमिति वचनाट्टापि इकारे च मामिकेति साधु । 'सविद्यो वा ऽप्यविद्यो वा ब्राह्मणो मामकी तनुः' इत्यत्रापि सैव संस्कारच्युतिः ।
३. जडाजडाश्रय इति षष्ठीसमासे तत्पुरुषस्य परवल्लिङ्गत्वात् पुंसि प्रयोग एवोचितः । आश्रयशब्दश्च एरच् इत्यजन्तः । घाजन्तश्चेति लिङ्गानुशासनेन पुंसि नियतः ।
४. मेघर्तिभयेषु कृञः इति खचि प्रत्यये स्त्रियां टापि भयङ्करेति साधु ।
५. स्थेशभासपिसकसो वरच् इति वरचि स्त्रियां टापि ईश्वरेति साधु । औणादिके वरटि तु यथास्थितमपि साधु ।
६. शूर्पनखीति यौगिकः शब्दो न तु संज्ञा । शूर्प इव नखा यस्याः सा शूर्पनखी शूर्पनखा वा । स्वाङ्गाच्चोपसर्जनादसंयोगोपधाद् इति

---

१. रोमाण्युद्गमयति, रोमाञ्चं करोति ।

७. पिता रत्नाकरो यस्य लक्ष्मीर्यस्य सहोदरी ।
८. कल्माषां[1] कुथामास्तृणीहि । इयं हि साधीयोऽलङ्करिष्यत्यगारम् ।
९. एतादृशाया अवस्थायाः का प्रतिक्रियेति विभावयन्तु सुधियः ।
१०. गायत्रीविश्ववारेत्यादयो योषितोपि मन्त्रद्रष्टारो बभूवुरिति कस्तासामपकर्षं ब्रूयात् ।
११. पत्नी नाम गृहपत्नी । एतत्तन्त्रं हि गृहतन्त्रम् ।
१२. असौ सुकुमारा वल्लो वातेरितनवपल्लवाङ्गुलिभिर्नस्त्वरयतीव ।
१३. यथा पतिमत्यामङ्गसंस्कारः शोभते न तथा प्रमीतपतिकायाम् ।
१४. चतुर्हायिनेयं कन्यकाऽष्टहायनीरपि कुमारीरतिशेते मेधया ।

---

वा ङीष् । शूर्पणखेति तु संज्ञा । नखमुखात्संज्ञायामिति ङीष्निषेधः । पूर्वपदात्संज्ञायामग इति णत्वम् ।

७. सहोदरीत्यत्र ङीष् दुर्लभः । **न क्रोडादिबह्वचः** इत्यनेन प्रतिषिद्धो ङीष् **नासिकोदरौष्ठेत्यादिना** प्रतिप्रसूतोऽपि **सहनञ्विद्यमानपूर्वाच्चेति** पुनः प्रतिषिध्यते । तेन टापि सहोदरेत्येव साधु ।
८. **अन्यतो ङीष्** इत्यनेन ङीषि कल्माषीमिति साधु ।
९. कञि प्रत्यये एतादृश्या इत्येव स्त्रियां ङीपि रूपम् ।
१०. **ऋन्नेभ्यो ङीप्** इति मन्त्रद्रष्ट्र्य इत्येव साधु ।
११. **विभाषा सपूर्वस्येति** विकल्पेन नकारान्तादेशे ङीपि च गृहपतिः, गृहपत्नीति च रूपद्वयम् ।
१२. स्त्रीप्रत्ययविधौ तदन्तविधेरभ्यनुज्ञानात्कुमारशब्दवत् सुकुमारशब्दादपि **वयसि प्रथमे** इति ङीप् । सुकुमारशब्दश्च प्रादितत्पुरुषः, तेन कुमारशब्दोऽनुपसर्जनम् । वयोवचन एव सुकुमारशब्दः कोमलेर्थे उपचर्यत इति तत्त्वम् ।
१३. **अन्तर्वत्पतिवतोर्नुक्** इति जीवपत्यां पतिवत्नीतीष्यते । जीवः पतिर्यस्याः सा जीवपतिः (जीवपत्नी वा) ।
१४. वयसि चतुर्हायणीत्येव साधु । **हायनो वयसि स्मृत** इति **दामहायनान्ताच्चेति** वयस्येव ङीप् । **त्रिचतुर्भ्यां हायनस्येति** णत्वमपि वयस्येव ।

---

[1] चित्रां नानावर्णाम् ।

१५. पापीयं नापिती। इयं हि यत्र तत्र विग्राहयति लोकान्।
१६. वीरा यासां पतयः ता वीरपतय इति वाच्याः स्युर्वीरपत्न्य इति वा। अत्र प्रमाणपुरःसरं स्वं मतं ब्रूहि।
१७. त्रिपदा गायत्री भवति न तु त्रिपात् त्रिपदी वेति प्रमाणपुरःसरमुपपाद्यताम्।
१८. अहो रम्यो वसन्तः। किमपि मञ्जुलं परभृता व्याहरन्ति सहचरैः समेताः।
१९. ह्रीनिषेवाः[1] कुलाङ्गनाः पादार्पितेक्षणाः सत्यो यान्ति।
२०. धमस्याम्नातृषु पर्षत्सु[2] रागद्वेषविनिर्मुक्ता ब्राह्मणा इष्यन्ते।
२१. ख्रिस्तस्यैकोनविंश्याः शत्याः प्रथमार्धे श्रीदयानन्दनामा यतिर्बभूव यः प्रचरति हिन्दुमते बहु परिशोध्यं परिवर्त्यं च ददर्श।
२२. ऋचया यदुक्तपूर्वं तदेव साम्नोच्यते। अत एव ऋच्यध्यूढं साम गीयत इति च्छन्दोगा आमनन्ति।
२३. इयं हि मे पाणिगृहीतिः सततं मय्यनुरक्ता नान्यं मनसाऽपि चिन्तयति।

---

१५. पापेयं नापितीति साधु। **केवलमामकभागधेयपापे**त्यादिना संज्ञाछन्दसोरेव ङीब्विधानात्।
१६. **नित्यं सपत्न्यादिष्विति** वीरपत्न्य इत्येव साधु।
१७. **टाबृचि** इति त्रिपदेत्येव साधु। असाधुनी च त्रिपात् त्रिपदी चेति रूपे।
१८. परभृता इति स्त्रियां बहुत्वे प्रयोगः। क्रियाशब्दविवक्षायां **जातेरस्त्रीविषयादिति** ङीष् न।
१९. पादार्पितेक्षणा इति बह्वज्लक्षणे ङीष्-प्रतिषेधे टापि सिद्धम्।
२०. **ऋन्नेभ्यो ङीप्** इत्याम्नात्रीषु इत्येव साधु। पर्षच्छब्दो हि स्त्री।
२१. शत्या इत्यत्र ङीब् दुर्घटः। शतमिति नित्यं नपुंसकम्। शतकस्येति तु वक्तव्यम्, विशेषणलिङ्गपरिणामश्च कार्यः।
२२. ऋचेति साधु। आबन्ते व्यवहारो मृग्यः।
२३. **बहुव्रीहेश्चान्तोदात्तात्, पाणिगृहीत्यादीनामर्थविशेष** इति शास्त्राभ्यां ङीषि पाणिगृहीती इत्येव साधु।

---

१. लज्जावत्यः। २. परिषत्सु।

२४. विंशतिहायनीयं शालाऽद्यापि सद्यो निर्मितेव भाति ।
२५. इयं जरती, इयं च यूनी । तथाऽपि पूर्वा वपुष्मती सर्वदोद्युक्ता च । अपरा कृशा तुन्दपरिमृजा च ।[1]
२६. परस्य युवतीं रम्यां सस्पृहं नेक्षते कः ।
२७. पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी ।
२८. आश्चर्यम् । नेयमुक्तिरस्माकं श्रुतिगोचरी पुराऽभूत् । तेनैतां प्रत्येतुं न पारयामः ।
२९. सुन्दरयाऽनया शैल्या शिक्षिताश्छात्राः संस्कारं कमपि लप्स्यन्ते नूनम् ।
३०. सेयं सेव्यतां सुधीभिः सुरसरिदिव पावना देववाणी ।
३१. सितासिते सरिते यत्र संगते तत्राप्लुतासो दिवमुत्पतन्ति ।
३२. उषः ! चिरायुषी भूयाः, सुखं च जीव्याः ।

---

२४. विंशतिहायनेयमिति तु युक्तम् । हेतुरुक्तपूर्वः ।
२५. यूनीत्यपाणिनीयम् । **'यूनस्तिः'** इति युवतिरित्येव भवति ।
२६. युवतीमित्यपशब्दः । यूनस्तिरिति **स्त्रीप्रत्ययस्तद्धितः,** तेन स्त्र्यर्थस्योक्तत्वादपरेण स्त्रीप्रत्ययेन नार्थः । विधायकं च नास्ति । बाढं यौतेः शतरि स्त्रियां ङीपि रूपं लभ्यतेऽर्थस्तु द्वितीयत्रयोलक्षणो नोपलभ्यते । **अर्थनित्यः परीक्षेतेति नैरुक्तसमयो वैयाकरणस्यापि मान्यः ।**
२७. **हरतेरनुद्यमनेऽच्** इत्यचि स्त्रियां टापि धनहरेति भवितव्यम् ।
२८. श्रुतिगोचरीत्यशुद्धम् । श्रुतेर्गोचर इति श्रुतिगोचर इति षष्ठीसमासः । गोचरशब्दश्च **गोचरसंचरेति** सूत्रेण घप्रत्ययान्तः । घाजन्त इति लिङ्गानुशासनेन च घप्रत्ययान्तः पुंसि नियतः ।
२९. **षिद्गौरादिभ्यश्चेति** ङीषि सुन्दर्या इति (तृतीयान्तं) साधु ।
३०. पावनशब्दो ल्युडन्तः, तेन टित्त्वान्ङीपि पावनीति साधु ।
३१. सरिते इति भागुरिमतेन आपि प्रत्यये समाधेयम् ।
३२. चिरायुर्भूया इत्येव प्रयोगः । ङीप्ङीष्ङीनामप्राप्तेः । अदन्तात्तद्विधेः ।

---

१. अलसा ।

३३. यत्र दैवी सम्पदा, विलयमेति तत्र विपदा उपनमन्ति ।
३४. नैजां क्षमतां तावत्प्रसाधय ततो यद्वाञ्छसि तत्ते भविष्यति ।
३५. अथार्थगुर्वीं प्रसन्नां मधुरां वाचमवोचदच्युतः ।
३६. इयं व्याकरणपद्धती सुदूरं प्रकृष्यते पद्धत्यन्तरेभ्यः ।
३७. त्वां कामिनो मदनदूतिमुदाहरन्ति (कुमार०) ।
३८. इमाः समुत्सादकराः प्रथाः सर्वात्मना निरोद्धव्याः ।
३९. सिन्धुदेशे महेञ्जोदाड़ोरित्यत्र चिरन्तना मृन्मया काश्चन मुद्रा अप्युत्खानकैर्लब्धाः ।
४०. परं हि प्रावीण्यमस्यार्हतस्य[1] प्राकृतायां वाचि ।
४१. केषां वा नावतंसायते श्रवणयुगलीं प्रति कुन्दकुसुमावदाता कीर्ति-रेषाम् ।
४२. गभीरोऽयमर्थो न सहसाऽवसेयः, विवेकिनामपि सन्देहदोलास्पदां करोति मनीषाम् ।

---

३३. **सम्पदादिभ्यः क्विप्,** इति **क्तिन्नपीष्यते** इति च वार्तिकद्वयेन सम्पद् विपद्, सम्पत्तिः, विपत्तिः इति साधुरूपनिष्पत्तिः । अयं क्विप् स्त्र्यधिकारोक्त इति भागुरिमतेनाप्यापोऽनवसरः ।
३४. नैजशब्दोऽणन्तः । स्वार्थेऽण् । तेन नैजीमित्येव साधु ।
३५. गुणवचनाद् गुरुशब्दाद् **वोतो गुणवचनादिति** ङीषि पश्चादर्थेन सह समासः ।
३६. **बह्वादिभ्यश्चेति** विकल्पेन ङीषि पद्धतीति साधु ।
३७. मदनदूतिमित्ययं प्रमादः । दूतशब्दाद् गौरादित्वान्ङीषि दूतीत्येव साधु । दूङ् परितापे इत्यस्मात् क्तिचि दूतिरिति केचित् ।
३८. टप्रत्यये समुत्सादकर्य इत्येव साधु टिल्लक्षणे ङीपि ।
३९. चिरन्तन्यः, मृन्मय्य इत्येव साधु । पूर्वत्र ट्युलप्रत्ययः, अपरत्र च मयट् । टित्वान्ङीप् ।
४०. प्रकृतेरागता प्राकृती इति तु न्याय्यमणि तद्धिते स्त्रियां च ङीपि ।
४१. श्रवणयुगलीत्यपशब्दः । युगलशब्दस्य गौरादिगणेऽपाठात् । श्रव-णयुगलमित्येव तु शब्दः ।
४२. सन्देहदोलाऽऽस्पदं यस्यास्तामिति बहुव्रीहिः । तस्य च विशेष्य-निघ्ने लिङ्गवचने इति स्त्रीलिङ्गता ।

---

१. आर्हतो जैनः ।

४३. को नाम सहेत शेमुषीमुषीमरुन्तुदामीदृशीं न्यक्क्रियाम्[1] ।
४४. इष्टानिष्टप्राप्तिपरिहारेच्छा खलु स्वाभाविकैव ।
४६. को नाम हृदयधाम्न्यै श्रियै न स्पृहयति । निःश्रीकस्य हि निरालोको लोकः ।
४७. प्राचीनासु प्रथासु प्रीतिमानंस्त्वं नूतनीषु कमपि गुणं नेक्षसे । तदयुक्तम् ।
४८. फलाभिलाषा हि प्रायेण प्रयोजयति प्रवृत्तिं लौकिकीं वैदिकीं च ।
४९. देवतार्चनपरा हिन्दवो देवतायतनानां परिक्रमां कुर्वन्ति ।
५०. कतिपयाः कालिदासीयाः सूक्तयः संगृह्यन्ते भूयसे रसास्वादाय ।

---

४३. शेमुषीमुषीमित्यत्र स्त्रीप्रत्ययो दुर्लभः । शेमुषीं मुष्णातीति शेमुषीमुट् । **क्विप् चेति** क्विप् प्रत्ययः । द्वितीयायां शेमुषीमुषम् ।
४४. अशरणानां शरणमित्यर्थेऽशरणशरणमिति स्यात् । शरणशब्दस्याजहल्लिङ्गत्वात् । शरणमिति त्रातर्यर्थे नित्यं नपुंसकम् ।
४५. स्वभावादागत इत्यर्थे ठकि स्वाभाविकमिति भवति । तेन स्त्रियां ङीपि स्वाभाविकीत्येव साध्वी शब्दाकृतिः ।
४६. हृदयं धाम यस्या इति बहुव्रीहौ **अन उपधालोपिनोऽन्यतरस्यामिति** पक्षे ङीपि साधु । हृदयस्य धामेति षष्ठी-समासे तु हृदयधाम्ने इत्येव साधु ।
४७. **नवस्य नू त्नप्तनप्खाश्च प्रत्यया** इति वार्तिकेन तनप्प्रत्ययान्तो नूतनशब्दः । तेन स्त्रियां टापि नूतनास्विति भवितव्यम् ।
४८. अभिलाषशब्दो घञन्तः । घञबन्त इति लिङ्गानुशासनेन पुंसि नियतः । तेन फलाभिलाष इत्येव न्याय्यम् ।
४९. परिक्रमशब्दो घञन्तः । तेन पुंसि नियतः । अतः परिक्रममिति साधु ।
५०. कतिपयशब्दो ह्ययचि प्रत्यये पुगागमे च सिध्यतीत्याहुः । अयचि स्वतन्त्रे प्रत्यये स्त्रियां ङीब्दुर्लभ इति टापि कतिपयेति साधु । आधुनिका अभिधानकृतस्तु स्त्रियां कतिपयीत्याहुः । तत्र प्रमाणं मृग्यम् ।

---

१. अवमाननाम्, तिरस्कारम् ।

५१. किङ्करा इमाः स्त्रियः स्वामिनि भक्तिमत्यः सर्वात्मना नियोगं निर्वाहयन्ति ।

५२. तामैक्षन्त क्षणं सभ्या दुःशासनपुरः सराम् ।

५३. विशेषास्त्वङ्गना भीरुः कामिनी वामलोचना (अमरे) ।

५४. पीवरोरु ! पिबतीव बर्हिणः (कुमारे)

५५. संचयशीलेयं भिक्षुणी न मात्रयाप्यपरिग्रहव्रतं चरति ।

५६. सुधाधरीस्तस्य वाचो निशम्यानास्वादितपूर्वं कमपि रसमन्वभूवम् ।

५७. इदानीन्तनासु भाषासु संस्कृत इव समुदायावयवानामभिव्यक्तिर्नालोक्यते ।

५८. आविष्कारप्रधाना विंशतितमेयं शताब्दी विलासप्रियत्वं वर्धयतीति नापरोक्षम् ।

५९. पद्यं चतुष्पदी तच्च वृत्तं जातिरिति द्विधा ।

---

५१. **कियत्तद्बहुष्वच्** इत्यचि किङ्करा इति साधु । क्रियाशब्दोयऽम् । जातिवाचित्वे तु ङीषि किङ्कर्य इति स्यादेव ।

५२. दुःशासनः पुरःसरो यस्यास्तामिति विग्रहः । तेन पुरःसर-शब्द उपसर्जनम् । टप्रत्ययान्तत्वेऽप्यनुपसर्जनादित्यधिकारादत्र टिल्लक्षणो ङीब्न ।

५३. भीरुरित्यत्र **ऊङ् उत** इत्यूङ् मनुष्यजात्यविवक्षायां न कृतः, तेनादोषः ।

५४. **संज्ञापूर्वको विधिरनित्य** इति ह्रस्वस्य गुण इत्यस्याप्रवृत्तेः 'पीवरोरु' इति सम्बुद्धौ साधु ।

५५. भिक्षुणीति प्रमाद एवायम् । भिक्षुं भिक्षुत्वं नयति प्राप्नोति इति नयतेः क्विपि, कृदिकारादक्तिन इति ङीषि सिद्धमिति दुर्घटवृत्तिकारः । **तदिदं वैयाकरणस्य व्यायाममात्रम् इति वयम्** ।

५६. सुधाया धर इति धर-शब्दः पचाद्यजन्तः, सुधाधराः, इत्येव साधु ।

५७. ट्युलप्रत्यये इदानीन्तनीष्वित्येव साधु ।

५८. डटि तमडागमे च स्त्रियां ङीपि विंशतितमीति साधु ।

५९. चत्वारः पादा अस्या इति बहुव्रीहौ चतुष्पदी । **पादोऽन्यतरस्यामिति** ङीप् । पक्षे चतुष्पात् ।

६०. बहुश्रेयसी वैदिकधर्मरक्षेति वेद[1] आम्नातिनः ।
६१. कस्येयं रम्या रशना त्रिसूत्री ?
६२. इयमार्षा भणितिः कस्य नाम नावर्जयति चेतः ?
६३. यदि बुद्धिरेव ग्रन्थानामादेयानादेयत्वे प्रमाणा तदा किं नाम वेदादीनां स्वतः प्रामाण्यं स्यात् ?
६४. ते प्रभविष्णवः प्रभवन्ति नः तेषु वयं काष्ठपुत्तलिकामात्रा एव स्मः ।
६५. अविनश्वराऽऽकल्पान्त[2] स्थायिनी कीर्तिरस्य महात्मनो भविष्यति येन चिरं परदास्यं गतोऽयं देशः स्वातन्त्र्यं लम्भितः ।
६६. स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा । इति भारतमाख्यान मुनिना कृपया कृतम् (भा० पु० ४।२५) ॥
६७. महत्खल्वन्तरं देवदत्तस्य च यज्ञदत्तस्य च । असावस्य शततमामपि कलां नार्हति ।

---

६०. **उगितश्चेति** ङीपि बहुश्रेयसीति साधु । बहूनि श्रेयांस्यस्या इति विग्रहः ।
६१. त्रीणि सूत्राणि यस्या इति बहुव्रीहौ ङीब्दुर्लभः, त्रिसूत्रेति तु साधु । कथञ्चिद् द्विगुसमासाश्रये तु न दोषः ।
६२. अणि तद्धिते स्त्रियां ङीपि आर्षीत्येव साधु ।
६३. प्रमाणमित्यजहल्लिङ्गवचनम् । प्रमाणायां स्मृताविति प्रयुञ्जाना मीमांसका अप्युपेक्ष्याः ।
६४. मात्रशब्दोऽवधारणे वर्तमानो नपुंसकम् । अत्रार्थे चेदं नित्यमेकत्वे व्यवह्रियते । यथा ऋगेव ऋङ्मात्रम् । तेन पुत्तलिकामात्रमित्येव साधु ।
६५. **इण्नश्जिसर्तिभ्यः क्वरप्** इति क्वरपि स्त्रियां ङीपि अविनश्वरीत्येव साधु ।
६६. श्रुतिगोचर इत्येव साधु । श्रुतेर्गोचर इति विग्रहः । अस्य साधुत्वे हेतुः पूर्वमुक्तः ।
६७. शततमीमपीत्येव साधु । डटि तमडागमे स्त्रियां ङीपि शततमीति रूपम् । शततमी कलेति व्यवहारेण विरुध्यते । षोडशैव हि कला भवन्तीति यथास्थिते वाक्ये व्यवहारव्यभिचारलक्षणोऽपरो दोषः ।

---

१. वेद इति सप्तम्यन्तम् । आम्नातमभ्यस्तमेभिरिति आम्नातिनः । क्तस्येन्विषयस्य कर्मण्युपसंख्यानमिति कर्मवाचिनि वेदशब्दे सप्तमी ।
२. आकल्पान्तं तिष्ठतीत्येवंशीला ।

६८. यस्त्रैवर्णिकः शूद्रीं तल्पमारोपयेत्, मन्ये स पतितः स्यात् ।
६९. इयं क्षीरपो क्षत्रिया । इयं सुरापी । अतो भिद्येते शीलेन ।
७०. अनुचरी प्रियतमा मदालसा ।
७१. गतगतः, नष्टनष्ट इत्याबाधमाचष्टे । आबाधो बाधेत्यनर्थान्तरम् ।
७२. कुवलयदलनीला कोकिला बालचूते ।
७३. अहो विनयोऽस्याश्छात्रायाः । को न्वस्या गुरुः स्यात् ।
७४. समदृष्टेस्तदा पुंसः सर्वाः सुखमया दिशः (भा० पु० ११।१९।५) ।
७५. एकाक्षरी काश्मीरकाणां श्री-पत्रिकाप्यस्तङ्गता ।
७६. एता मे सिद्धयः सौम्य अष्टावौत्पत्तिका मताः (भा० पु० ११।१५।५) ।

---

६८. **शूद्रा चामहत्पूर्वा जातिरिति** टापि शूद्रेत्येव साधु । पुंयोग एव शूद्रीति भवति ।
६९. क्षीरपेत्येव साधु । टकोऽप्राप्तेः । **आतोऽनुपसर्गे इति** कः, ततष्टाप् । सुरापीति तु सुष्ठु । 'सुरासीध्वोः' इति वक्तव्याद् **गापोष्टक्** इति टक् । ततो ङीप् ।
७०. पचादिषु चरट् इति निर्देशाट्टिल्लक्षणे ङीपि अनुचरीति साधु । एवं सहचरीत्यस्यापि साधुत्वं द्रष्टव्यम् ।
७१. बाधेति भिदादेराकृतिगणत्वादङि टापि सिद्धम् ।
७२. कोकिलेत्यजादिगणे पाठाट्टापि सिद्धम् । जातिलक्षणस्य ङीषो बाधः ।
७३. छत्रशीलश्छात्र इति णप्रत्ययान्तः । **क्वचिण्णोऽण्कृतं भवतीति** ङीपि छात्रीति स्त्रियां स्यात् । प्रयोगस्तु नास्ति । **यथालक्षणमप्रयुक्ते** इति वार्तिकस्याप्रयुक्ते लक्षणं न प्रवर्त्यमित्यर्थात् । यथाऽलक्षणमिति च्छेदात् ।
७४. सुखमया इत्यसाधु । मयटष्टित्त्वान्ङीपि सुखमय्य इति स्यात् ।
७५. एकमक्षरं वाचकत्वेन घटकं यस्या इति बहुव्रीहौ टापा भवितव्यम्, तेनैकाक्षरेत्येव साधु ।
७६. औत्पत्तिक्य इत्येव युज्यते वक्तुम् । औत्पत्तिक्यः सहजाः, निसर्गसिद्धाः । उत्पत्तेरागता इत्यर्थे ठकि ङीपि ।

७७. आत्यन्तिकेषु कार्येषु नारी कार्या पुरः सरा ।
७८. इयं शूद्रा, इयं शूद्री, इयं च महाशूद्री । को विशेषः ।
७९. पुरीं निर्यादवीं कृत्वा विचरिष्याम्यहं सुखी । (हरि० १।२८।३९) ।
८०. दिष्ट्या समानी खलु तवात्मजानां त्वय्यनुरक्तिः ।
८१. आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् (पा० ४।१।६३ सूत्रे श्लोकवार्तिकम्) ।
८२. कण्डूतिर्वपनादपैति शिरसः ।
८३. देवदत्तस्य भार्या प्राज्ञा, तस्य भगिन्यपि प्राज्ञी ।
८४. तद्दर्शितपथीं कुर्वे वृत्तिं शिशुविबोधिनीम् (का० श्रौ० सूत्रवृत्तौ मङ्गलश्लोकः ) ।

---

७७. **पुरोऽग्रतोऽग्रेषु सर्तेष्ट** प्रत्यये टित्त्वान्ङीपि पुरःसरीत्येव शोभनं वचः ।
७८. **शूद्रा चामहत्पूर्वा जातिरिति** जातावर्थे ङीषोऽपवादष्टाब् भवति । शूद्रीति च शूद्रस्य स्त्रीति पुंयोगे ङीष् । महाशूद्रीत्यत्रापि जातिलक्षणो ङीष् । आभीरी तु महाशूद्री ।
७९. निर्गता यादवा यस्याः सा ताम् । अत्र बहुव्रीहौ ङीपोऽप्राप्तेऽजाद्यतष्टाब् इति टापि निर्यादवाम् इत्येव साधु ।
८०. छन्दस्येव समानीति भवति समानी प्रपा सह वोऽन्नभागः (ऋ० ) शास्त्रं च केवलमामकेत्यादिनाच्छन्दस्येव समानशब्दान्ङीपं विधत्ते । तेन टापि समानेति वक्तव्यम् ।
८१. आकृतिर्ग्रहणं यस्या इति बहुव्रीहिः । गृह्यतेऽनेनेति ग्रहणम् । करणे ल्युट् । सामान्ये नपुंसकम् ।
८२. कण्डूतिरित्यत्र क्तिन्दुर्लभः । कण्ड्वादिभ्यो यकि **अ प्रत्ययाद्** इत्यकारे कृत्प्रत्यये टापि 'कण्डूया' इति रूपम् । सम्पदादित्वात् क्विपि तु कण्डूरित्यपि ।
८३. 'प्राज्ञा' इति **प्रज्ञाश्रद्धार्चाभ्यो णे** तद्धिते स्त्रियां टापि साधु । प्रज्ञा बुद्धिरस्या अस्तीति प्राज्ञा । प्रज्ञः (प्रजानातीति) एव प्राज्ञः । स्वार्थेऽण् । **टिड्ढाणञ्** इति ङीपि प्राज्ञीति साधु । प्रज्ञा तु प्राज्ञी प्राज्ञा तु धीमतीत्यमरः ।
८४. तेन दर्शितः तद्दर्शितः । तद्दर्शितः पन्था यस्याः सा, ताम् इति विग्रहे तद्दर्शितपथाम् इति टापि भवितव्यम् । **ऋक्पूरब्धूरित्यनेन** अ-समासान्तस्तद्धितः । नस्तद्धित इति टिलोपः ।

८५. कौसल्ययाऽसावि सुखेन रामः प्राक् केकयीतो भरतस्ततो भूत् (भट्टि० १।१४)।
८६. फलमुखी कारणमुखी चानवस्था।
८७. सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी।
८८. त्वां विना न क्षणमपि जीवेयम्। न हि सलिलमति जीवति मीना।
८९. ततः तनयस्य स्वस्त्ययनाय सर्वदेवताकीर्तनपुरःसरीमाशिषमाचचक्षे (चम्पू रा० पृ० ११०)
९० गुरुणानुज्ञातः स्नात्वाऽसमानार्षेयामवरवयसीं सदृशीं भार्यां विन्देत (वासिष्ठ ध. सू. ८।१)।

---

८५. पुंयोग इति दम्पतिभाव एवेति नाग्रहः। योगः सम्बन्धः। स चेह जन्यजनकभावलक्षणोपि गृह्यत इति तत्त्वबोधिनीकारः। तेन केकयशब्दात्पुंयोगे ङीष् सिद्धः। **वयं तु मन्यामहे** पुंयोगशब्दो विवाहलक्षणे सम्बन्धे रूढ इति पुंयोगाभावात्केकयीत्यत्र ङीष् दुर्लभः। आत्मा वै जायते पुत्र इत्यभेदोपचारात्तु केकयः पिता केकयः पुत्रः। गोत्रं च चरणैः सहेति वचनादपत्यार्थो जातिवचन इति जातिलक्षणे ङीषि केकयीति साधु।
८६. अद्रवं मूर्तिमत्स्वाङ्गं प्राणिस्थम् इति स्वाङ्गलक्षणान्मुखमिति प्राणिस्थत्वाभावात्स्वाङ्गं न। मुखमिह द्वारमाह। मुखसादृश्यान्मुखमुच्यते। तेन ङीषोऽप्रसङ्गात्फलमुखीत्यादि प्रामादिकमेव।
८७. **गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति** वचनानुरोधात्क्रीतशब्देन समासे **क्रीतात् करणपूर्वादिति** ङीष् स्यात्। गतिकारकेति वचनं प्रायिकमिति सुबन्तेन क्रीताशब्देन समासे त्वदन्तत्वाभावान्ङीषोऽप्रसङ्गः।
८८. मीनेति टाबन्ता प्रकृतिर्नास्ति। मीनो मत्स्यः। स्त्रीत्वविवक्षायां तु मत्सीति प्रयोज्यम्।
८९. समस्तदेवताकीर्तनपुरःसरीमित्यसाधु। अनुपसर्जनादित्यधिकाराद् बहुव्रीहौ समासे पुरःसरशब्दस्योपसर्जनत्वाट्टित्वलक्षणो ङीब्न प्राप्नोति।
९०. अवरवयसीत्यपशब्दः। अवरं वयो यस्याः साऽवरवयाः। स्त्रीप्रत्ययमात्रस्याप्राप्तेः। **ताम् अवरवयसम्।**

९१. आपो नारा इति प्रोक्ता आपो वै नरसूनवः (मनु० १।१०)।
९२. अर्जुनो विदधे मृत्युं प्राकृतां बुद्धिमास्थितः (रा० १।७५।२४)।
९३. अयादवीं क्ष्मां करिष्ये पौरुषं मम पश्यत (भा० पु० १०।७६।३)।
९४. काव्यशैलिश्चात्र सुगमा ललिता चेति स्पष्टम्।
९५. यस्या गर्भाच्च जाता जनकद्रुपदजाऽग्रेसरा भर्तृदेव्यः।
९६. कथं प्रमाणायां स्मृताविति शाबरभाष्ये।
९७. शक्तिं बाणस्ततः क्रुद्धो घोररूपां भयानकाम्।
जग्राह·········(हरि० २।११९।६०)॥

---

९१. नराख्यस्य परमात्मनः सूनवोऽपत्यमिति नाराः। **तस्यापत्यमि**त्यण्। अणि कृते ङीप् प्रसक्तः, स नेह भवति। स्मृतिषु च्छान्दसलक्षणैरपि व्यवहारदर्शनात्। छन्दसि च सर्वे विधयो विकल्प्यन्त इति पाक्षिको ङीप्। तस्याभावपक्षे सामान्यलक्षणष्टाप्।
९२. प्रकृतेरागता प्राकृतीति स्यात्। **तत आगत** इत्यणि ङीपि रूपम्।
९३. अविद्यमाना यादवा यस्यां साऽयादवा। अनुपसर्जनाद् इत्यधिकारादुपसर्जनादण्णन्ताद् यादवशब्दान्ङीब्न। सामान्यलक्षणष्टाप्।
९४. शैलिरित्यपभ्रष्टम्। शीलादागता शैली। तत आगत इत्यण्। ततो ङीप्।
९५. जाता इति बहुवचनम्। भर्तृदेव्य इत्यपशब्दः। भर्ता देवो यासां ता भर्तृदेवाः। देव इति पचादिषु टित्पठितः। तथाप्युपसर्जनत्वाट्टित्वलक्षणो ङीब्न भवति।
९६. अत्र भट्टाः—प्रमाणमयते याति मूलभूतां श्रुतिं यतः। क्विबन्तादयतेस्तस्मात्प्रमाणा स्मृतिरुच्यत इत्याहुः॥ तत्रेदं दूषणम्—अयतेः क्विपि **लोपो व्योर्वलीति** यलोपे **ह्रस्वस्य पिति कृति तुग्** इति तुकि सति टाप् दुर्लभः। आगमशास्त्रस्यानित्यत्वात्तुङ् नेति कथंचित् समाधेयम्। अन्ये तु प्रमाणं वेदस्तद्वदाचरतीत्याचारक्विबन्तात्प्रमाणशब्दात्पचाद्यचि टाबित्याहुः।
९७. **आनकः शीङ्भियः** इत्यौणादिकसूत्रेण बिभेतेरानकः प्रत्ययः। प्रत्ययस्थात् इत्यापि कात्पूर्वस्येकारादेशः प्राप्तः **क्षिपकादीनां** चेति वार्तिकेन निषिध्यते। **वार्तिकोक्ता गणा आकृतिगणा** इति सिद्धान्तात् भयानकादीनां ग्रहणम्।

९८. आमन्त्रयस्व सहचरीम् । उपस्थिता रजनी ।

९९. धात्री कराभ्यां करभोपमोरुः ।

१००. कथं कन्यामिव श्रीमपि कुत्सयन्तः ।

१०१. सोदर्यौ गलदश्रुपूर्णनयने गाढं समश्लिष्यताम् । (क्रिस्तु० २८।३८) ।

१०२. पट्वीं कृष्णविलोचनाब्जमधुपां राधे दृशं तां श्रये (करुणा० २९) ।

---

९८. सहचरीमिति निर्दुष्टम् । समाधिरसकृत्पूर्वत्रोक्तः ।

९९. करभोपमोरुः । अत्र **ऊरूत्तरपदादौपम्ये** इति सूत्रेण ऊङ् न भवति । उपमानवाचिपूर्वपदमूरूत्तरपदं यत्प्रातिपदिकं तस्मादूङ् इति सूत्रार्थः । अत्र यद्यपि करभ इत्युपमानं तथापि पूर्वपदं न भवति । ऊरूत्तरपदं प्रति करभोपम इत्यस्य पूर्वपदत्वात् ।

१००. **कृदिकारादक्तिन** इति ङीषोऽप्रसङ्गः । कृत्प्रत्ययस्य य इकार इति व्याख्यानात् । धात्विकार एवात्र दीर्घीभूतः । कृदन्तं यदिकारान्तमिति पक्षे तु यद्यपि ङीष्प्राप्तिरस्ति, तथापि कारग्रहणसामर्थ्येन केवलस्येकारस्य ग्रहणादिकारान्तपक्षो दुर्बल इत्याहुः । मैत्रेयरक्षितस्तु ङीषि श्रीमिच्छति ।

१०१. **समानोदरे शयित** इति यति विवक्षित एव **विभाषोदर** इत्यनेन वैकल्पिके समानस्य सभावे समानोदर्यः सोदर्य इति रूपे । स्त्रियां सोदर्याट्टापि सोदर्येति स्याद् द्विवचने च सोदर्ये इति । सह समानमुदरमस्येति सहोदरः सोदर इति वा । ततः स्त्रियां सह शब्दे पूर्वपदे **सह-नञ्-विद्यमानपूर्वपदाच्चेति** ङीषो निषेधे टापि सहोदरा सोदरेति रूपे । एवं सोदरे इति प्रथमाद्विवचने रूपम् । तेन सोदर्याविति स्त्रियां दुः समाधानम् ।

१०२. कृष्ण विलोचनाब्जमधुपाम् इत्यत्र मधुपशब्दाद् भ्रमरवचनाट् टाब्विहितः स दोषः । नायं क्रियाशब्दः, जातिवचन एवात्र विवक्षितः । दृग्घि भ्रमरीत्वेन रूप्यते । जातिवचनत्वे ऽपि नातो ङीषुत्पद्यते । स्त्रीत्वविवक्षाविरहात् । **पुंस्येव मधुपशब्दं व्यवहरन्ति कुशला व्यवहर्तारः**, यथा मत्स्यामपि मीन इति पुंसि ।

१०३. नानारूपधरी नटी (करुणा० ८३)।
१०४. सिद्धिर्न मुक्तिङ्करी (करुणा० ८३)।
१०५. राधे हरिनायिके भगवति (करुणा० १०१)।
१०६. तदमन्दरसस्यन्दसुन्दरेयं निपीयताम्।
श्रोत्रशुक्तिपुटैः स्पष्टा साङ्गराजतरङ्गिणी (राज० १।२४)॥
१०७. मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः (का० सू० वृ० १।२।१३ इत्यत्रोद्धृतः श्लोकः)।
१०८. सर्वपारसवीं तीक्ष्णां महोल्काप्रतिमां (शक्ति) तदा (भा० कर्ण० २६।२३)।
१०९. योजनानां शतं साग्रं हयया प्रत्यपद्यत (हरि० १।२६।४ भण्डाकर सं०)।

---

१०३. **नानारूपधरी**। अत्र धरशब्दोऽच्-प्रत्ययान्तः। स्त्रीत्वविवक्षायां नातो ङीप्ङीष्ङीनामन्यतमः प्रत्ययः सहते समुत्पत्तुम्। तेन नानारूपधरेति टाबन्त एव साधुः।
१०४. मुक्तिङ्करी। अपशब्द एवायम्। **क्षेमप्रियमद्रेऽण्** चेति क्षेमादिष्वेवोपपदेषु कर्मसु करोतेः खच् विधीयते। खचोऽभावे नुमोऽभावः। तेन मुक्तिकरीत्येव टप्रत्यये साधु।
१०५. हरिनायिके इत्यत्रेत्त्वं दुष्यति। हरिर्नायकोऽस्यास्तत्सम्बुद्धौ हरिनायिके इति रूपं न सिध्यति। **प्रत्ययस्थात्कात्पूर्वादत इदाप्यसुप** इत्यसुप इत्युक्तेरित्त्वं दुर्लभम्। तेन '**हरिनायके**' इति निर्दुष्टं रूपम्।
१०६. सुन्दर शब्दो गौरादिषु पठ्यते। तेन ङीषि सुन्दरीत्येव साधु।
१०७. सुकुमार शब्दे कुमार शब्दोऽनुपसर्जनम्। तत्पुरुषस्योत्तरपदार्थप्रधानत्वात्। **वयसि प्रथमे** (४।१।२०) इत्य**नुपसर्जनात्** (४।१।१४) इति प्रकरणे पठितम्। तेन कुमारशब्दाद् विहितो ङीप् सुकुमारशब्दादपि भवति। सुकुमार इति कोमलमाह। कुमारस्तु वयोवचन एव।
१०८. **तिरस्कारविनाशे च पुंसि पारसव** इति मेदिनी। सर्वस्य पारसवो नाशो यस्मात् सा सर्वपारसवेति स्यात्। ङीप्ङीष्ङीनां नैकतमोपि प्रसक्तः।
१०९. हयशब्दो गौरादिषु पठ्यते, तेन ङीषि हयीत्येव शब्दः। योपधप्रतिषेधे **हयगवयमुकयमनुष्याणामप्रतिषेध** इति वा ङीष्।

११०. गन्धर्वीणां नरीणां च किन्नरीणां शतं शतम् (स्कन्द० का० ४।८२।८६)।

१११. चिन्ता बहुतरी तृणात् (भा० वन०)।

---

११०. **नृनरयो वृद्धिश्चेति** वृद्धौ नारीति स्यात्। नरस्य स्त्री नरीति पुंयोगलक्षणे ङीषि नरीत्युपपन्नम्। किञ्चिन्नरी किन्नरीत्यर्थादिदमपि साधु।

१११. बहुतर शब्दात्तरबन्ताट् टाबेवोत्पत्तुमर्हति न तु ङीब्ङीष्ङीनः। बहुतरेत्येव शब्द इति पाणिनीयाः।

**इति स्त्रीप्रत्ययेषु विवेचनम्।**

# अथ विभक्तिषु विवेच्यानि

## तत्र कारकविभक्त्यधिकारः प्रथमः ।

१. नहि व्यवहितविप्रकृष्टमप्यर्थजातं सुधियामगोचरः । न हि तेषां किमपि दुर्घटमस्ति ।
२. को वर्णयेन्नृपगुणान् परश्शतेष्वपि श्लोकेषु ?
३. तरन्ति सन्तो जगतो महान्तः ।
४. दिष्ट्या शास्त्रिपरीक्षायामुत्तीर्णोऽसि ।
५. दयानिधिरपि त्वं कथं न दयसे मयि ?
६. ये सर्वायुषि सत्क्रियां द्विषन्ति सुकृतिषु चासूयन्ति तेऽधमाः ।
७. यो राजभिरर्चितस्तं लोकोऽर्चतितराम् ।
८. त्रिचतुरेष्वहःसु कृत्यमेतन्निर्वर्तयितास्मीति सम्भावयामि ।

---

१. तेषामित्यसाधु । **न लोकाव्ययेत्**यादिना कृद्योगलक्षणायां षष्ठ्यां निषिद्धायामनुक्ते कर्तरि तृतीयया तैरित्येव वक्तव्यम् ।
२. करणे तृतीयया परश्शतैः श्लोकैरिति वाच्यम् । **वाग्घि वाच्यार्थानां करणं मतं नाधिकरणम्** ।
३. जगत इत्यस्थाने पञ्चमी । जगदिति द्वितीया तु युज्यते । जगदिति तरतेः कर्म । तरतिः पारगमने ।
४. तरतिः सकर्मकः पारगमने, प्लवने त्वकर्मकः । तेन परीक्षामुत्तीर्ण इत्येव साधु ।
५. **'अधीगर्थदयेशां कर्मणि'** इति कर्मणः शेषत्वविवक्षायां षष्ठी विधीयते । तेन मयीत्यनुक्त्वा ममेति वक्तव्यम् । द्वितीया वा प्रयोक्तव्या । दयतिः सकर्मक इति सप्तम्या अनवकाशः ।
६. **कालाध्वनोरिति** द्वितीयायां 'सर्वमायुः' इति साधु स्यात् । कालाध्वनोरिति विहिता द्वितीया न कारकविभक्तिः । सुकृतिभ्य इति च स्यात् । **क्रुधद्रुहेर्ष्यासूयार्थानाम्** इति सम्प्रदानतायां चतुर्थ्या भवितव्यम् ।
७. **मतिबुद्धिपूजार्थेभ्यश्चेति** वर्तमानेऽर्चितशब्दे क्तः । **क्तस्य च वर्तमाने** इति तद्योगे षष्ठ्या राज्ञामिति साधु ।
८. त्रिचतुरैरिति वक्तव्यम् । अपवर्गे तृतीयाविधेः ।

९. वाहयति रथं वाहैः सूतः ।
१०. महात्मनो दर्शका जना नानादिग्देशेभ्यः संनिपतन्ति ।
११. दुर्बलाः प्रबलेभ्यो नमस्कुर्वन्ति शिष्टाश्च दुष्टेभ्यः ।
१२. भगवता सूत्रकारेण स्वं शास्त्रमष्टास्वध्यायेषु निबद्धमित्यष्टाध्यायीसमाख्यया तत् प्रथते ।
१३. को नाम सुधीश्चलाचलान्प्राणान् प्रति मानं यच्छेत् ?
१४. आत्ययिकं, कार्यं सम्मन्त्र्यमिति वसुधाधिपः सभासदः सभामाहूतवान् ।
१५. उभयोर्नाशोऽवश्यं भाव्यः ।

---

९. वाहानिति वक्तव्यम् । **नीवह्योर्नेति** निषेधो नियन्तृकर्तृकस्य न । तेन गत्यादिसूत्रेणाणौ कर्तुर्णौ कर्मत्वम् ।

१०. महात्मानं दर्शका इत्येवं वाच्यम् । **अकेनोर्भविष्यदाधमर्ण्ययोः** (पा० २।३।७०) इति कृद्योगलक्षणायां षष्ठ्यां निषिद्धायामनुक्ते कर्मणि द्वितीया ।

११. **उपपदविभक्तेः कारकविभक्तिर्बलीयसीति** प्रबलान्, दुष्टानिति च युक्तम् । प्रबलान् दुष्टाननुकूलयितुमित्यर्थविवक्षायां **क्रियार्थोपपदस्य च कर्मणि स्थानिन** इति वा चतुर्थी समाधेया ।

१२. अष्टास्वध्यायेष्विति यथास्थितं साधु । बध्नातिप्रयोगे कर्मादिव्यतिरिक्ते विषयेऽधिकरणं विवक्षन्ति शिष्टा इति **बन्धे च विभाषा** (६।३।१३), **नेन्सिद्धबध्नातिषु चे**ति (६।३।१९) सूत्रद्वयं ज्ञापकम् । इहाध्याया आधार इति विवक्षिताः ।

१३. **प्रतिः प्रतिनिधिप्रतिदाने च यस्मात्** (१।४।९२) इति कर्मप्रवचनीययुक्ते पञ्चमी । तेन चलाचलेभ्यः प्राणेभ्य इति स्यात् । **चरिचलिपतिवदीना**मित्यादिवार्तिकेनाचि प्रत्यये द्वित्वेऽभ्यासस्यागागमे चलाचल इति साधु । अत्राचलशब्द उत्तरपदमस्तीति मा स्म शङ्किष्ठाः ।

१४. न हि ह्वयतिर्द्विकर्मकः, तेन सभां प्रतीति वक्तव्यम् ।

१५. भाव्य इति कृत्यप्रत्ययान्तम् । **ओरावश्यक** इति ण्यत् । भावे चायं प्रत्यय इत्यनुक्ते कर्तरि तृतीया, तेन नाशेनेति साधु । **भावो नपुंसकमिति** नाशेन भाव्यम् इति वक्तव्यम् ।

---

१. अत्ययः विनाशः प्रयोजनमस्येति । विलम्बासहम् इत्यत्रार्थे उपचर्यते ।

१६. देवदत्तोऽधीती व्याकरणे, आम्नाती च च्छन्दसीति धन्यतमः पुंसाम् ।
१७. आन्दोलयन् विशिखमेककरेण सार्धम् (हनुमन्नाटके ४।१) ।
१८. तौ पापौ शङ्करं गरलं खादयामासतुः ।
१९. यथा तद्भवतिव्यमासीत् तथा भूतम् । भवितव्यतैव गरीयसी ।
२०. रामश्चतुर्दशभ्यो वर्षेभ्यो वनं गच्छेद् इत्येको मे वरः ।
२१. त्वया पाठशालां गन्तव्यम्, अतिक्रामति कालः ।
२२. हरीतकीं भुङ्क्ष्व राजन्मातेव हितकारिणीम् ।
२३. पथि श्रेयसि प्रणीय लोकं लोकान्तरं प्रस्थितः श्रीचित्तरञ्जनदासः ।

---

१६ **क्तस्येन्विषयस्येति** कर्मणि सप्तमीति-व्याकरणे छन्दसीति चोभयं साधु ।
१७. एककरेणेति करणे तृतीया । तत्र सार्धमित्यनेन नार्थः ।
१८. **आदिखाद्योर्न**त्यणौ कर्तुर्णौ कर्मत्वनिषेधात् शङ्करेणेति साधु ।
१९. तेन भवितव्यमित्येव साधु ।
२०. चतुर्दश वर्षाणीत्यत्यन्तसंयोगे द्वितीयैव साध्वी । यद्यपि गमनक्रिया क्षणिका न चतुर्दश वर्षाण्यभिव्याप्नोतीति तथापि गमनक्रियात्र वासक्रियामन्तर्णयतीति प्रयोक्तुर्विवक्षा । तथा च चतुर्दशवर्षव्याप्तिरस्त्येव । चतुर्दश वर्षाणि वत्स्यतीति वनं गच्छेदित्यभिप्रायः । एतज्जातीयकश्च प्रयोगो भारते—**आत्मनो हि वयं दोषाद् विनष्टाः शाश्वतीः समाः** (शां० ७।३२) इति ।
२१. पाठशालेति गमिक्रियान्तर्भूताया उद्दिशिक्रियायाः कर्मेति द्वितीयोपपन्ना । साक्षाद् गमिक्रियाकर्मत्वे तूक्ते कर्मणि प्रातिपदिकार्थमात्रे प्रथमा स्यात् ।
२२. मातेवेति प्रथमाऽनुपपन्ना । मातरमिवेति तु युक्तम् । उपमानोपमेययोः समानविभक्तिकत्वनियमात् । मातेव इतीवेन समस्तस्य हितकारिणीमित्यनेन समासे साध्वेवेति केचित् ।
२३. गत्यर्थानां धातूनां प्रयोगेऽधिकरणत्वस्याविवक्षितत्वात्करणत्वं विवक्षन्ति शिष्टाः । तेन पथा श्रेयसा प्रणीयेत्येवं वाग्व्यवहारोऽनुसृतो भवति ।

२४. घोरायां निद्रायां शेरतेऽमी अनात्मज्ञाः ।
२५. परमात्मनि संश्रितः सत्यव्रतो न कुतश्चन बिभेति ।
२६. भ्रमरो हि भ्रमंस्तत्र पुष्पाणां चिनुते मधु ।
२७. शान्तो मुनिर्मृदुर्भववि द्विषद्भ्यो मृदुरागस्कृद्भ्यः[1]।
२८. यतिर्नाम न परस्य कस्यचिद् द्वेष्टि न च क्वचित् सविशेषं रज्यते ।
२९. तव चिकीर्षितं देशोन्नत्यभ्युपायं जिज्ञासे ।
३०. ब्रह्मैव जगद्रूपे परिणतमित्याहुरविद्वांसः ।
३१. कामं मुनिवेषोऽयं परं नैष मुनिर्भवितुं शक्यः ।

---

२४. घोरया निद्रयेति **इत्थंभूतलक्षणे** इति तृतीया युक्ता । सप्तम्या नार्थः । आधारस्यासत्त्वात् । घोरं निद्राणा शेरत इति प्रकारान्तरेण वा वक्तव्यम् ।

२५. श्रयतिः सकर्मकः प्रायेण । **नहि बहिरुपाधीन् प्रीतयः संश्रयन्त इत्यत्र उत्तरे रामचरिते यथा** । तेन परमात्मानं संश्रित इति साधु । क्वचिदकर्मकोऽपि प्रयुक्तो दृश्यत इति यथास्थितमपि साधु । यथा मयि वो रायः श्रयन्ताम् (तै० सं० १।५।६।२) । ऋते भूमिरियं श्रिता (तै० ब्रा० १।५।५।१) इत्यत्र । संगमनेऽर्थे तृतीयाऽपि दृश्यते—**चूतेन संश्रितवती नवमालिकेयम्** (शा० ४।१२) ।

२६. कारकत्वस्यैवाविवक्षायां पुष्पाणामिति साधु । अपादानत्वस्याविवक्षायां कारकत्वस्य च विवक्षायाम् अकथितं चेति कर्मसंज्ञायां तु द्वितीयैव युक्ता पुष्पाणीति । चिनुते इत्यवपूर्वः प्रयोक्तव्यः ।

२७. वैषयिकेऽधिकरणे द्विषत्सु, आगस्कृत्सु इति चेष्यते ।

२८. द्विष अप्रीतौ सकर्मकः, तेन कंचिदित्येव साधु ।

२९. तवेत्यस्य स्थानेऽनुक्ते कर्तरि तृतीयैव युक्ता । **न लोकाव्ययनिष्ठेति** कृद्योगलक्षणायाः षष्ठ्या निषेधात् ।

३०. जगद्रूपेणेत्येव साधु । **प्रकृत्यादिभ्य** इति वा **इत्थम्भूतलक्षणे** इति वा तृतीयैव साध्वी । तथा च शिष्टप्रयोगः—पयो दधिभावेन परिणमते ।

३१. नैनेन मुनिना भवितुं शक्यमित्येवं न्यासो युक्तः । शक्यमित्यपहाय शक्त इति वा प्रयोज्यमित्यृजुर्मार्गः ।

---

[1]. आगोऽपराधः ।

३२. तनुरियं[1] ते तनुरसहिष्णुरातपस्य। तेन मुहूर्तं प्रच्छायशीतलेऽस्मिंस्तरुतले विश्रमयात्मानम्।
३३. दूरक्षाः स्त्रिय इति न तासां जन्मन्युत्सवो भवितुं शक्य इति केचिदुत्प्रेक्षन्ते।
३४. यो ह्यध्ययनात्परिग्लानः[2] स दुःखं तत्र प्रवर्त्य इति सत्यम्।
३५. सहोदराणामिव परस्परं प्रीतिमन्तः परस्परमनुव्रताश्च लोका अभ्युदयन्ते।[3]
३६. प्रायेण पापो दुर्गतो जनः स्वं कर्मानुपालभ्य परिमृष्यति[4] दैवाय।
३७. न वार्यपि प्रयच्छेत्तु वैडालव्रतिके द्विजे। (मनु० ४।१९२)।
३८. ये वदितारो जनापवादान् ग्रहीतारो वोत्कोचांस्ते[5] हीयन्ते परत्रेह च शर्मणः।
३९. स्यन्दन्ते[6] सरितः सागराय, न च सर्वाः समुद्रगा भवन्ति।

---

३२. **न लोकाव्ययनिष्ठेति** सूत्रे **इष्णुचोऽपि** प्रयोगे निषेध इति वृत्तौ स्थितम्। तेनातपमिति द्वितीयान्तमेव साधु।
३३. उत्सवेन भवितुं शक्यमित्येवं साधू करणीयम्।
३४. **पर्यादयो ग्लानाद्यर्थे चतुर्थ्या** तिसमासविधानाल्लिङ्गाद् अध्ययनायेति वक्तव्यम्।
३५. सहोदरा इति प्रथमान्तमेव न्याय्यम्। इवशब्दप्रयोग उपमानोपमेययोर्विभक्तिसाम्यमेवेष्टम्। उपमानं हि विशेषणान्नातिभिन्नम्।
३६. **क्रुधद्रुहेति** सूत्रेऽर्थग्रहणाद् दैवायेति सम्प्रदाने चतुर्थी साध्वी। परिमृष्यति क्रुध्यति।
३७. द्विज इत्यधिकरणं विवक्षितम्। तेन सप्तम्यदुष्टा। सममब्राह्मणे दानमित्यत्र यथा।
३८. **न लोकाव्ययनिष्ठेति** सूत्रेण षष्ठीनिषेधाज्जनापवादान् उत्कोचानिति चोभयं साधु। वदितारः, ग्रहीतार इत्युभयं तृन्प्रत्ययान्तम्।
३९. **क्रियार्थोपपदस्येत्य**प्रयुज्यमानाया गमिक्रियायाः कर्मणि चतुर्थ्या सागरायेति साधु। सागरमुपगन्तुमित्यर्थः।

---

१. तनुरल्पा, कृशा। २. क्षीणोत्साहः, असमर्थः। ३. उन्नमन्ति, समृध्यन्ति। ४. असूयति। ५. उपग्राह्याणि। ६. स्रवन्ति।

४०. किं कार्यं ते महाभाग ? भगवन्तमभिवादक एवागतोऽयं जनः कार्यान्तरं त्वस्य नास्ति ।
४१. गङ्गायामाप्लवमानस्य[1] कूपेभ्यः किं प्रयोजनम् ?
४२. पितुश्चरणयोर्नमति प्रातरुत्थितो भक्तिप्रह्वस्तनूजः ।
४३. महीं क्षियतीति[2] महीक्षिद्राजोच्यते ।
४४. यदेकस्मै प्रियं नावश्यं तत्सर्वेभ्यः प्रियं भवेत् ।
४५. पञ्चसु वर्गेषु विभक्ताः कादयो मावसाना वर्णाः ।
४६. अधर्मं धर्ममिति यो मन्यते स तमसाऽऽवृतो निरयाय राध्यति ।

---

४०. **अकेनोर्भविष्यदाधमर्ण्ययोरिति** षष्ठीनिषेधेऽनुक्ते कर्मणि द्वितीयेति भगवन्तमिति साधु । भगवन्तमभिवादयिष्य इत्यागतोऽस्मीत्यर्थः ।

४१. कूपैः किं प्रयोजनमित्येवं न्यासो युक्तः । **गम्यमानाऽपि क्रिया कारकविभक्तेः प्रयोजिकेति** वामनवचनात् कूपैरिति करणतृतीयान्तं साधु । साधिरत्र गम्यमाना क्रिया ।

४२. अधिकरणविवक्षायां चरणयोरिति साधु ।

४३. **देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामिति** महीमिति साधु ।

४४. प्रियशब्दः कप्रत्ययान्तः । कृद्योगलक्षणया षष्ठ्या एकस्य सर्वेषामिति च वक्तव्यम् ।

४५. कादयो वर्णा विभागस्याश्रयः । विभक्तास्ते पञ्चसु वर्गेषु स्थिता भवन्ति । वनं वृक्षा इतिवत् समूहस्य समूहिनां चाभेदमविवक्षित्वाऽऽधाराधेयभावं च कल्पयित्वा वर्गेष्वित्यत्र सप्तमीं व्यवहरन्ति लौकिकाः परीक्षकाश्च । वर्गाणां विभागक्रियायां न करणत्वं न च हेतुत्वम् । तेन तृतीयाऽनवकाशा । अधिकरणत्वं तु बुद्ध्यारोपितमस्ति । अस्मिन् सूक्ते कति ऋच इत्याधारकल्पनयैव सङ्गच्छते प्रश्नः ।

४६. निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिरिति वामनवचनाद् धर्म इत्येव साधु । प्रातिपदिकार्थे प्रथमा ।

---

१. स्नानमाचरतः । २. निवसति ।

४७. स भगवान् भूमिं सर्वतः स्पृत्वा[1] सर्वप्रदेशेऽध्यधिष्ठित इति पुरुष इत्युच्यते ।

४८. उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनं चेति पञ्च कर्माणि वैशेषिकैः परिगणितानि । भ्रमणरेचनादीनि गमनस्यान्तर्भवन्तीति पृथङ् नोपात्तानि ।

४९. तपः शब्दार्थेऽप्यशिक्षितास्तपसि वर्तन्त इत्यहो साहसिक्यम् ।

५०. एते हि तीर्थध्वाङ्क्षा इवानवस्थिता नैकत्र शक्नुवन्ति चिरकालाय स्थातुम् ।

५१. अनभिमतार्थोदयेन संत्रस्ताः केचिज्जिज्ञासामेव निषेधन्ति शास्त्रार्थस्य ।

५२. अध्वखेदपरिक्लान्तमेतं तुरंगं शिवकेन[2] बधान ।

५३. अयं ग्रन्थो यावानादृतस्तावानस्य समादरोऽल्पीयानेव ।

५४. शार्मण्यानां वाङ्मये बहूपादेयमस्तीति तत्रत्यानि कानि चिदुपाख्यानानि संस्कृते परिवर्तने[3] प्रसितोऽभूवम् ।

---

४७. **अधिशीङ्** इत्यादिनाऽऽधारस्य कर्मसञ्ज्ञायां सर्वप्रदेशान् इति साधु ।

४८. गमनेऽन्तर्भवन्तीत्यधिकरणविवक्षैव नियता ।

४९. अशिक्षिता इत्यजातशिक्षा इत्यर्थे इतचि तद्धिते तपःशब्दार्थे इति सप्तमी साध्वी । तपःशब्दार्थमशिक्षितवन्त इति वा वक्तव्यम् ।

५०. अत्यन्तसंयोगे द्वितीया तु न्याय्या । तेन चिरकालायेत्यपशब्दः । चिरकालमिति शब्दः ।

५१. **भीत्रार्थानां भयहेतुरिति** अनभिमतार्थोदयात् इति वक्तव्यम् ।

५२. अधिकरणे शिवके सप्तमी युक्ता ।

५३. यावान् इति ग्रन्थविशेषणत्वेनान्वेति, क्रियाविशेषणं चेष्यते । तेन यावदित्येव साधु । **क्रियाविशेषणानां क्लीबत्वं कर्मत्वमेकत्वं चेष्यत** इति द्वितीयैकवचनं साधु ।

५४. **संस्कृतेनेति** तृतीयान्तमेव साधु । प्रकृत्यादिभ्य इति तृतीया ।

---

१. स्पृ प्रीतिपालनयोः स्वादिः २. कीलकेन । ३. प्रसक्तः, व्यापृतः ।

५५. विज्ञापयामि पठकप्रवरांस्ते[1] मां पुस्तकान्तर्गताभिस्त्रुटिभिः सूचयिष्यन्तीति ।

५६. यथा यथा हि पुरुषः शास्त्रं समधिगच्छति । तथा तथा विजानाति विज्ञानं चास्य रोचते (मनु० ४।२०) ॥

५७. यावन्मार्जारलिङ्गिनो बकवृत्तयो वा लोकस्यार्चिता भवन्ति न तावद् विद्याया धर्मस्य वाभ्युत्थानं भवितुं शक्यते ।

५८. सभां वा न प्रवेष्टव्यं वक्तव्यं वा समञ्जसम् (मनु० ८।१३) ।

५९. निसर्गत एवेन्द्रियाणि भुक्तपूर्वानर्थान् प्रवणानि[2] भवन्ति । तेभ्यस्तानि प्रत्याहर्तव्यानि ।

६०. भावितात्मानं[3] हि पुरुषं धर्माधर्मौ हस्तामलकवद् भासेते ।

---

५५. पुस्तकान्तर्गताः त्रुटीरिति द्वितीयान्तमेव साधु । सूचनमिह बोधन उपचर्यते । तेन कर्मत्वमव्याहतम् । वस्तुतस्तु सूचयतेः शुद्धे बोधनेऽर्थे वृत्तिर्न । अहं त्रुटीः सूचयामीत्यस्य त्रुटीर्जानामीति नार्थः, इत्यणौ कर्तुर्णौ कर्मत्वमपि न । अथावश्यं सूचयतिः प्रयोक्तव्य इति ग्रहः, मामप्रतीति वाच्यं षष्ठी वा प्रयोज्या ।

५६. रोचते दीप्यत इत्यर्थः । तेन **रुच्यर्थानां प्रीयमाणः** इति सम्प्रदानता नेत्यस्येति षष्ठी साध्वी ।

५७. **क्तस्य च वर्तमाने** इति लोकस्येति षष्ठ्यन्तं साधु । शक्यत इति शक विभाषितो मर्षणे इति दैवादिकस्योभयपदिनो लटि रूपम् । तेनाभ्युत्थानमिति प्रथमान्तं साधु ।

५८. कर्मणि तव्यप्रत्ययेनाऽभिहितत्वात्कर्मणि द्वितीया नोपपन्नेति चेत् । उच्यते — उद्दिश्येत्यध्याहार्यम् । तत्कर्मेदम् । पदसंस्कारे कर्मणोऽविवक्षायां भावे तव्यप्रत्ययः । उत्तरकालं कर्मसम्बन्धे द्वितीयेति कश्चित् । तन्न । षष्ठीप्रसङ्गादिति दुर्घटवृत्तिकारः । मेधातिथिस्तु सभा वा न प्रवेष्टव्येति ऋज्वेव पपाठ ।

५९. अर्थान् प्रतीति वक्तव्यम् । कारकविभक्ते द्वितीयाया अप्रसङ्गात् ।

६०. भावितात्मनः पुरुषस्येति वक्तव्यम् । प्रतिः कर्मप्रवचनीयो वा प्रयोक्तव्यः । भासति ह्यकर्मकः ।

---

१. पठतीति पठः, स एव पठकः । २. निम्नानि अभिमुखानीत्यर्थः ।
३. पूतमनसम् ।

६१. यो हि विरक्तो नाम[1] भूत्वा स्वैरनुरज्यते स लोकमतिसन्धत्ते ।
६२. ईश्वरः सर्वेषु चेतनाचेतनेष्वर्थेषु समं व्याप्तः ।
६३. सुखं वा दुःखं वा स्वस्य कर्मणां विपाक इति जीवेभ्यः प्रतिपद्यते ।
६४. साकारो हि परमेश्वरो देशकालवस्तुषु परिच्छिन्न इति व्यापकता विहन्यते ।
६५. ब्रह्म हि विश्वरूपे विवर्तते[2] न तु परिणमत इत्यद्वैतिनः शाङ्कराः ।
६६. तत्राधिवासिनामार्य्याणामनार्यसङ्गमात् परिवृत्तः समुदाचारः ।
६७. परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम् (हितोप०) ।
६८. यो दुष्टे वर्त्मनि संचरते स आत्मनि शत्रूयते ।
६९. इदं चौपनिषदेभ्यो वचनेभ्यो विरुध्यत इति नेक्षितं भवता ।

---

६१. अनुरज्यत इति कर्मकर्तरि लटि रूपम् । वैषयिकेऽधिकरणे स्वेष्विति वक्तव्यम् ।
६२. आप्लृ व्याप्तौ सकर्मकः । कर्माविवक्षायामर्थेष्वित्यधिकरणे सप्तमी सूपपन्ना ।
६३. प्रतिपद्यते गच्छतीत्यर्थः । तेन जीवानित्यनभिहिते कर्मणि द्वितीयैव साध्वी ।
६४. देशकालवस्तुभिरिति परिच्छेदक्रियाकरणे तृतीयैव युक्ता ।
६५. विश्वरूपेणेति तृतीयान्तं साधु । उपपत्तिस्तु पूर्वमुदाहृता ।
६६. **'उपान्वध्याङ्वसः'** इत्यधिपूर्वस्य वसेराधारस्य कर्मसंज्ञायां तदधिवासिनामित्युपपदसमासेन वक्तव्यम् ।
६७. खलर्थप्रत्ययेन योगे षष्ठीनिषेधात् सर्वेषामिति न युक्तम्, सर्वैरिति तु युक्तम् । शैषिकी वा षष्ठी व्याख्येया ।
६८. **समस्तृतीयायुक्तात्** (१।३।५४) इति लिङ्गात्तृतीयैव साध्वी । दुष्टेन वर्त्मनेति वक्तव्यम् । क्वचित्पथा संचरते घनानामिति (रघु० १३।१९) कालिदासप्रयोगाच्च ।
६९. औपनिषदैर्वचनैरिति कर्तर्यनुक्ते तृतीयया भवितव्यम् । उक्ते तु प्रथमा स्यात् । इदं (कर्म) औपनिषदानि वचनानि विरुन्धन्ति ।

---

**१. नामेत्यलीकेऽव्ययम् । मिथ्या विरक्त इत्यर्थः । २. अतत्त्वतोऽन्यथा प्रथा विवर्तः ।**

७०. अस्मभ्यं तु श्रीशङ्करप्रभृतयोऽधिकप्रज्ञानाः प्रतीयन्ते ।
७१. संयतांश्च[1] विविधाः सेवाः कारयन्ति, मुञ्जं कुट्टयन्ति, रज्जुं वर्तयन्ति धान्यं च पेषयन्ति ।
७२. अनिच्छताऽपि यजमानेन पुरोहितं दापयन्ति धेनुं बान्धवाः ।
७३. शिष्या[2] दुर्जनाः, चौराश्च चोरितकं[3] दाप्या नृपेण ।
७४. इयं हाटकेन निर्मिता मूर्तिरियं च रजतेन ।
७५. तेन चौरेणैकदा चोरिकायां किमपि नापि ।
७६. मौहम्मदस्य मतस्य मूलमेव कपटानृताभ्यां निबद्धम् ।
७७. चिरं वियुक्तोऽस्मि प्रियवयस्यैः, तेनामी समुत्कण्ठन्ते मयि ।

---

७०. अस्माकमिति शैषिकी षष्ठी । क्रियाग्रहणमपि कर्तव्यमित्यनेन तु सम्प्रदानताया नावकाश इत्यस्माकमित्येव साधु ।
७१. **हृक्रोरन्यतरस्याम्**इत्यणौ कर्तुर्णौ वैकल्पिके कर्मत्वे संयतानिति साधु । वृतु वर्तनेऽकर्मकः । मुञ्जो वर्तते आवर्तते आवृत्तो गुणितो भवति । संयतान्मुञ्जं वर्तयन्ति इति तत्प्रयोगेऽपि कर्मत्वं सुस्थम् । कुट्टेः पिषेश्च प्रयोगे तु कर्मत्वेऽसत्यनुक्ते कर्तरि तृतीयया भवितव्यम् । तेन संयतैरिति वक्तव्यम् । तैरिति सर्वनाम्ना वा प्रत्यवमर्शः कार्यः ।
७२. पुरोहितायेत्येव साधु । हेतुर्विस्पष्टः ।
७३. शिष्टव्यवहारे दापिर्द्विकर्मको दृष्टः । प्रसिध्यन्ति च **वितथेन ब्रुवन्दर्पाद्दाप्यः स्याद्द्विशतं दमम्** (८।२७३) इत्यादयो मन्वादिप्रयोगाः ।
७४. हाटकं रजतं वा मूर्त्तिनिर्माणे करणं न । तथापि प्रकृतिभूते तस्मिन्विकारं प्रति करणत्वेन विवक्षणात्तृतीया नाऽसंगता । अन्यत्रापि कर्मणि करणत्वविवक्षा दृश्यते । अश्वमेधेन यजत इत्यत्र यथा ।
७४. करणतृतीयया चोरिकयेत्येव साधु । चोरिका चुरा चौर्यमित्यनर्थान्तरम् ।
७६. करणत्वविवक्षायां कपटानृताभ्यामिति तृतीया निर्दुष्टा ।
७७. **अधीगर्थदयेशां कर्मणी**त्यनेन शेषे षष्ठ्या समुत्कण्ठन्ते ममेति वक्तव्यम् ।

---

१. बद्धान् बन्दीरिति यावत् ।
२. शासनीया दण्ड्या इति वा ।
३. लोप्त्रम्, चौर्यप्राप्तं धनम् ।

७८. न खलु व्याकरणेऽभिज्ञोऽसि, यदेवमन्यथा व्युत्पादयसि पदानि मिथ्या[1] च कारयसे[1]।
७९. वधूं नवे वाससी परिधाप्य विवाहमण्डपे संनिधापयन्ति ऋत्विजः।
८०. न हि निपुणोऽपि स्वस्कन्धे समारोढुं क्षमः।
८१. मूढधियां सेवित एष पन्थाः। तस्मादिमं माऽऽस्थाः[2]।
८२. दुराचारो हि पुरुषो नार्हति भवार्णवादुत्तरीतुम्।
८३. तरुफलशातनाय[3] निषिद्धा अमी दुर्वृत्ता बटवो न चापलं विरमयन्ति।
८४. नृशंसास्ते बालेष्वपि मनागपि नादयन्त।
८५. अनूबन्धं[4] विजानन्नहमेतदकरवम्। नाहमेनेनाऽनुशये[5]।

---

७८. कृद्योगलक्षणया षष्ठ्या व्याकरणस्येति स्यात्।
७९. परिधापयतिप्रयोगेऽणौ कर्तुः कर्मत्वाभावे वध्वेत्यनुक्ते कर्तरि तृतीयैव साध्वी। संनिधात्र् अकर्मकोऽपि प्रयुज्यते इति ण्यन्ते कर्मत्वे वधूमिति साधु। तेन वध्वा नवे वाससी परिधाप्य तामित्यादिरुपन्यास आश्रेयः।
८०. आरुहिर्नित्यं सकर्मक इति स्कन्धमारोढुमित्येवं वक्तव्यम्।
८१. क्तेन योगे कृद्योगलक्षणायाः षष्ठ्या निषेधान्मूढधीभिरिति कर्तर्यनुक्ते तृतीयया भवितव्यम्।
८२. उत्तरतिः सकर्मक इति भवार्णवम् इत्येव साधु।
८३. '**वारणार्थानामीप्सितः**' इति तरुफलशातनादिति पञ्चम्येव न्याय्या।
८४. बालानां बालान्वेति साधु। हेतुस्तु पूर्वत्र विततं गदितः।
८५. अनुपूर्वः शीङ् स्वप्ने इति धातुः पश्चात्तापे वर्तमानः सकर्मकोऽकर्मकश्चापि दृष्टः। यथा **दत्तमिष्टमपि नान्वशेत सः** इति माघे (१४।४५)। **पुरानुशेते तव चञ्चलं मन** इति च किराते (८।८)। तेन नात्र कश्चिद्दोषः।

---

१. असकृद् अन्यथोच्चारयसि। २. आङ्पूर्वात्तिष्ठतेर्लुङि।
३. शातनं निपातनं भवति। ४. उदर्कम् उत्तरं फलम्।
५. पश्चात्तप्ये।

८६. न जाने केन कारणेन (गुरूणां) शिष्या हिन्दूनां रक्तस्य पिपासवः ।
८७. मिथ्यातापसाः केचिद् बालान् सान्त्ववचनेन मृष्टान्नेन च प्रेर्य कुटुम्बिभ्यो वियोजयन्ति ।
८८. सर्वशक्तिरीशो यस्मै कामयते तमुग्रं करोति, तमृषिं तं सुमेधसम् ।
८९. यदयं देवदत्तस्य कार्यसिद्धिं प्रतिहन्ति[1], एतेन स तस्माद्वैरं निर्यातयति ।
९०. ऐन्द्रजालिको हि सत्त्वरूपे विपरिणमयत्यसत्त्वं च सत्त्वरूप इति भाति ।
९१. य आतृणत्ति[2] कर्णावमृतं च सिञ्चति कस्तस्मा अभिद्रुह्येदमूढः ।
९२. यन्मनुष्यादिप्राणिजातस्यान्नोदकादि प्रयच्छति तद्विधातुर्विधातृत्वम् ।
९३. वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे (उत्तर० २।४) ।
९४. न जातु संकटे पतिता विमुह्यन्ति धीराः, तेन नेदं वैक्लव्यं संभाव्यते युष्मादृशेभ्यः ।

---

८६. **न लोकाव्यये**ति सूत्रेण रक्तमिति द्वितीयान्तं साधु ।
८७. अणौ कुटुम्बिनो बालान् वियुञ्जते (त्यजन्तीत्यर्थः) इति वाक्यम् । णौ तु कुटुम्बिभिर्वियोजयन्तीत्यनुक्ते कर्तरि तृतीयैव साध्वी । अणौ वियुज्यन्ते इति चेत्कर्मकर्तरि प्रयोगः, न कश्चिद्दोषः । तदा कुटुम्बिभ्य इति पञ्चमी ज्ञेया ।
८८. यं कामयते इत्येव साधु । **स्पृहेरीप्सित** इत्यत्रार्थग्रहणाभावात् ।
८९. तस्मै वैरं निर्यातयतीति वक्तव्यम् । निर्यातनमिह प्रत्यर्पणे वर्तते । तथा च भारते प्रयोगः—**निर्यात्य वैरं सफलं सपुष्पं तस्मै नरेन्द्राधमपूरुषाय** (वन० १७६।१०) ।
९०. असत्त्वरूपेण चेति वक्तव्यम् । हेतुः पूर्वमसकृदुक्तः ।
९१. **क्रुधद्रुहोरुपसृष्टयोः कर्मे**ति तस्मा इत्यसाधु । तमिति प्रयुञ्जीत ।
९२. प्राणिजातायेति सम्प्रदाने चतुर्थ्या भवितव्यम् ।
९३. अधिकरणत्वेन विवक्षितत्वात्सिद्धमिति **तदस्मिन्वृद्ध्यायलाभशुल्कोपदा दीयते** (५।१।४५) इति सूत्रे **चतुर्थ्यर्थ उपसंख्यानमि**ति वार्तिकं निराकुर्वता वृत्तिकृतोक्तम् । तेन प्राज्ञे जडे इति सप्तम्यौ साध्व्यौ ।
९४. युष्मादृशेषु सम्भाव्यते इत्येव साधु । न हि युष्मादृशा अपादानम् ।

---

१. विहन्ति, तत्र विघ्नं करोति । २. विवरं करोति ।

९५. दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते (मनु०)।
९६. आध्यादीनां विहर्तारं धनिने दापयेद् धनम् (याज्ञ० २।२६)।
९७. किमिति वृथा प्रकुप्यसि मयि ? नाहं ते किमप्यपाकरवम्।
९८. इदानीमहमीर्ष्यामि स्त्रीणां जनक नो पुरा (बौ.ध.सू. २।२।३४)।
९९. न केनचिद् द्वेष्टि न स्निह्यति कस्यचित्।
१००. यदि वयमेवात्र न प्रणिदध्मस्तदा[1] कोऽन्यः प्रणिधास्यति।
१०१. विदेशाधिपतयो भारतं युद्धभयं दर्शयन्ति। मिथ्याविभीषिकेयमिति च स्वयं विजानन्ति।
१०२. दिष्ट्या मासत्रयात्प्रवृत्तस्य विवादस्याद्य निर्णयो जातः।

---

९५. भीत्रार्थानां धातूनां प्रयोगे भयहेतोरपादानसंज्ञा विहिता। तेनात्र तदभावात्षष्ठ्यां न दोषः। पञ्चमी भयेनेति समासविधानाल्लिङ्गात्तु भयशब्दप्रयोगेऽप्यपादानता सूत्रकारस्येष्टेति ज्ञायते। तदत्र विद्वांसो निर्णयं ब्रुवन्तु। अपि नाम **ज्ञापकसिद्धं न सर्वत्रेति** समाधिर्युक्तः स्यात्।

९६. प्रकुप्यसिप्रयोगे चतुर्थी पाणिनीयानां नेष्टा। कोपक्रोधयोर्भेदात्। न ह्यकुपितः क्रुध्यतीति ब्रुवता भाष्यकारेण तद्भेदस्योक्तत्वात्। तेनाधिकरणविवक्षायां मयि इति साधु। शेषे षष्ठी वा प्रयोक्तव्या।

९८. स्त्रीणामिति द्वितीयार्थे षष्ठी सूत्रकारप्रयोगात्। ईर्ष्यामि सहे इत्यर्थाद् यं प्रति कोप इत्यस्य चाभावाद् भार्यामीर्ष्यतीति वद् द्वितीयैव साध्वी।

९९. न किञ्चिद्द्वेष्टि न स्निह्यति कस्मिंश्चिदिति शोभनो न्यासः। द्विषिः सकर्मकः स्निहिश्चाकर्मकः। कस्यचिदिति सम्बन्धषष्ठ्यामपि न दोषः। सप्तमी तु श्रेयसी।

१००. प्रणिदधातिर्नित्यं सकर्मक इति मन इत्याद्यध्याहार्यम्। कामं प्रणिधानं केवलमपि मनःप्रणिधानमाह।

१०१. **हृक्रोश्चेति** वार्तिकेनाणौ कर्तुः कर्मत्वे भारतमिति द्वितीयान्तं साधु।

१०२. अत्यन्तसंयोगे द्वितीयैव साध्वीति मासत्रयमित्येव साधु।

---

१. **चिन्तयामः**।

१०३. देवदत्तो नाम[1] विदुषामनुरागी नित्यं च वृद्धोपसेवीति प्रशस्यते लोकेन ।

१०४. संस्कृतशब्दव्यवहारो हिन्दुजात्यै न सुपरिहरः ।

१०५. शास्त्रविस्तरो महति परिमाणे यथा स्यात्तथा यतितव्यं सुधीभिः ।

१०६. यः पुराणकथाभिरपरिचितः स वेदार्थं कथमुपबृंहयेत् ।

१०७. को नाम प्रतिनिविष्टजनचित्तमाराधयेत् ? केवलं परमेश्वरः सुमतये सम्प्रार्थनीयः ।

१०८. अथ ब्राह्मणैः स्वस्ति वाचयति ।

१०९. यवनेभ्यः स्वमतान्धेभ्यः को नाम संभावयेत् परमतमर्षणम् ?

११०. आर्याः परमेश्वरं प्रत्यहरहः प्रार्थयन्ते शं नो भवतु द्विपदे शं चतुष्पद इति ।

---

१०३. विद्वत्स्वनुरागीति सप्तम्येव साध्वी ।

१०४. **भावकर्मणोरेव खलर्थाः प्रत्यया भवन्तीति** कर्तर्यनुक्ते हिन्दुजात्या इत्येव साधु । कृद्योगलक्षणा षष्ठी तु न लोकाव्ययेत्यादिना निषिद्धा ।

१०५. महता परिमाणेनेति प्रकृत्यादित्वात्तृतीया युक्ता ।

१०६. अस्थानेऽपरिचितशब्दप्रयोगः । अपरिचितो ह्यविदितो भवति । कर्मण्यत्र क्तः । इष्यते तु कर्तरि प्रत्ययः । तेन यः पुराणकथानां परिचेता परिचायकः) नेति वक्तव्यम् । पुराणकथासु परिचयवान्नेति वा वाच्यम् ।

१०७. परमेश्वरः सुमतिं प्रार्थनीय इत्येवं वक्तव्यम् । **गौणे कर्मणि दुह्यादेरिति** वचनात्प्रधानं कर्मानुक्तमिति सुमतिशब्दे द्वितीया साध्वी । चतुर्थी तु नितान्तं दुरुपपादा ।

१०८. वाचयतिः शब्दकर्मा । स्वस्तिशब्दः कर्म । स्वस्तीत्यव्ययम् । तेन ब्राह्मणानिति द्वितीयैव साध्वी ।

१०९ यवनेष्वित्यादि वक्तव्यम् ।

११०. परमेश्वरं प्रतीत्यत्र प्रतिशब्दस्त्याज्यः । परमेश्वरो हि प्रार्थयतेः कर्म ।

---

१. नामेति प्राकाश्येऽभ्युपगमे वाऽव्ययम् । अयमर्थो लोकस्य प्रकाशः (विदितः) तेनाभ्युपगतो वा ।

१११. नाटिका हि प्रायेण चतुर्ष्वङ्केषु पूर्यते ।
११२. वेदादिषु ग्रन्थेषु विद्विषन्तोऽनार्य्यास्तेष्वनार्यमाचरन् तत्कृतं लोकस्य ज्ञानविपरिलोपं च नापश्यन् ।
११३. अनक्षरप्रायेभ्यो भिक्षुकेभ्यो विद्योपादित्सा गगनकुसुमेभ्यः सौरभ्यजिघ्रासेव ।
११४. अनुच्छित्ति[1] धर्माऽयमात्मेति न भरतवर्षीयेभ्यो बोधनीयं भवति ।
११५. इदानीं सर्वनाशे स्वल्प एव समयोऽवशिष्यते । अद्यापि न जाग्रति लोका इति चित्रम् ।
११६. विबुधभारत्याः प्रणयिन इह मनागवदधताम् ।
११७. संस्कृतज्ञा लोकव्यवहारेण नितरामनभिज्ञा इति दूषणं न तु भूषणम् ।
११८. अपरिचिता एव लोकवृत्तान्तेभ्यो भवन्ति कुमारा यावद् वृद्धान्नोपासते ।

---

१११. चतुर्भिरङ्कैरित्यनुक्ते कर्तरि तृतीया तु न्याय्या । यथा जलबिन्दुनिपातेन क्रमशः पूर्यते घट इत्यत्र । **न ह्यङ्का अधिकरणं येन सप्तमी सुप्रयोगा स्यात्** ।
११२. वेदादीन् ग्रन्थान् इति द्वितीया साध्वी । द्विषिः सकर्मकः ।
११३. अनक्षरप्रायाणां भिक्षुकाणां विद्याया उपादित्सेति वक्तव्यम् । **कर्मणि चेति** कर्मणि षष्ठीसमासनिषेधाद् विद्योपादित्सेति न युक्तम् । **अकाराकारयोः स्त्रीप्रत्यययोः प्रयोगे ने**ति उभयप्राप्तौ कर्मणीति नियमो न । तेन भिक्षुकाणामिति कर्तरि षष्ठी निरवद्या । गगनकुसुमेष्विति च वक्तव्यम् ।
११४. भरतवर्षीया बोधनीया भवन्तीत्ययमेव न्यासो निर्दुष्टः । भरतवर्षीया इति प्रयोज्यं कर्म । वाक्यार्थश्च प्राकृतं कर्म ।
११५. सर्वनाशस्येति शेषे षष्ठी प्रयोज्या । सप्तम्या नार्थः ।
११६. भारत्यां प्रणयिन इति तु साधीयः । षष्ठ्यपि न वार्यते ।
११७. लोकव्यवहारस्येति कृद्योगलक्षणा षष्ठीष्यते ।
११८. परिचितशब्दे क्तः कर्मणीति विस्मरति प्रयोक्ता । तथा सति कुमारा अपरिचिता अविदिताः सन्तीत्यनिष्टार्थोदयो दुर्निवारः । तेन अपरिचितवन्तो लोकवृत्तान्तान् इति शोभनं वचः स्यात् ।

---

१. **उच्छित्तिर्नाशः । तदभावोनुच्छित्तिः । सा धर्मः स्वभावोऽस्येति विग्रहः ।**

११९. पुराकालस्य तु परमेश्वरो विजानीयात्, अद्यत्वे तु वाङ्मात्रेण न धर्मे समादरो लोकस्य ।

१२०. इदं च संस्कृतं पिपठिषून् सर्वप्रथमं बोद्धव्यं कृशा हि नो वृत्तिरिति ।

१२१. यावच्छक्यं सन्मार्गपथिकता लोकान्नेतव्या श्लक्ष्णैर्वचोभिः[1] ।

१२२. नहि शुकवच्छक्यते पाठयितुं बालान् ।

१२३. यादृशी प्रवचनशैली[2] साम्प्रतं प्रचरति सैवास्माभिश्छात्रेभ्यः शिक्षणीया ।

१२४. परोपकाराय नियुक्तचेतसां यत्सुखं न तत् स्वार्थपरायणानाम्[3] ।

---

११९. **सा लक्ष्मीरुपकुरुते यया परेषामिति**वदत्रापि कर्मणः शेषत्वविवक्षायां भवन्ती पुराकालस्येत्यत्र षष्ठी न दोषाय ।

१२० पिपठिषुभिरिति वक्तव्यम् । व्यक्तो हेतुः ।

१२१. नयतेः प्रयोगे लोका इति प्रधानं कर्म । सन्मार्गपथिकतेति च गौणम् । प्रधाने नीहृकृष्वहामिति नियमात्प्रधाने **कर्मणि प्रत्ययः**। तेन **सन्मार्ग**पथिकतां लोका नेतव्या इति निर्दुष्टं वचः । कृत्यैर्योगे कर्तरि वैकल्पिकी षष्ठी विहिता न तु कर्मणीति सन्मार्गपथिकतातः षष्ठी न ।

१२२. बाला इति कर्म । तच्च शक्यते इति प्रधानक्रियायाः कर्मवाचिन्याः कर्मेत्यङ्गीकारे शक्यन्ते पाठयितुं बाला इति वक्तव्यं स्यात् । अप्रधानक्रिययानुक्तत्वेपि प्रधानक्रिययोक्तत्वाद् बालात् प्रथमा । शक्यत इत्यत्र भावे चेत्प्रत्ययः, न कश्चिद्दोषः । **भावे** तुमुन् इति तेनानुक्तत्वाद् बालानिति द्वितीया सूपपन्ना ।

१२३. छात्रान् शिक्षणीयेति साधु । तां छात्राः शिक्षणीयाः इत्येवं वा वक्तव्यम् । शिक्षिर्ण्यन्तो बोधनार्थकः । **बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छ**येति वचनात्प्रधानाप्रधाने कर्मणी स्वेच्छया लादिभिरुच्येते ।

१२४. परोपकारे नियुक्तचेतसामिति साधु । उपपत्तिर्विस्पष्टा ।

---

१. मसृणैः, चिक्कणैः, कोमलैरिति यावत् । २. अध्यापनविधिः ।

३. स्वार्थः परं प्रधानमयनं येषां ते स्वार्थपरायणाः, तेषाम् ।

१२५. ब्रूहि सुग्रीवं वानरानाहूय सर्वासु दिक्षु विदिक्षु च ते प्रेष्यन्ताम् इति ।

१२६. सखीजनादात्मवञ्चनावृत्तान्तं श्रुत्वा सा परं विषसाद ।

१२७. सापराधे ग्रहिले शिष्ये भृशं कुप्यन्ति गुरवः ।

१२८. न्यग्भूतस्य योधस्य मुखं भूमौ स्पर्शयति प्रतियोधः ।

१२९. अस्माकं पूर्वजानां पुस्तकानि पठितुं न प्राप्यन्ते स्म ।

१३०. अहो बत महत्कष्टम् । य एव दुःस्मरः कालस्तमेव स्मारिता वयम् ।

१३१. अनृतं हि पतनीयेषूत्तमम् इतीदं बलवज्जुगुप्सन्ते शास्त्रकाराः ।

१३२. किमिति बद्धलक्ष्यो भवानिमां स्थालीं होराभिर्बह्वीभिर्निध्यायति ।

---

१२५. वानरा आहूय प्रेष्यन्तामिति न्यासो निर्दुष्टः । प्रेष्यन्तामिति प्रधानक्रियया कर्मण उक्तत्वाद् वानरा इति प्रथमान्तं साधु ।

१२६. बाढं सखीजन आख्याताऽस्ति । उपयोगस्तु नास्ति । उपयोगो नियमपूर्वकं विद्याग्रहणमिति वृत्तावुक्तम् । तेनाख्यातुरपादानत्वाभावे शेषे षष्ठ्येव साध्वी ।

१२७. कोपः क्रोधो नेति मतेऽत्र सम्प्रदानता नास्तीति चतुर्थी नोपपन्नेति वैषयिकी सप्तमी साध्वी । अथ मतं क्रोधस्य पूर्वरूपमपि कोपः क्रोध इत्युपचर्यते तदा सम्प्रदानतायां चतुर्थ्यपि न न युक्ता ।

१२८. अणौ मुखं भूमिं स्पृशतीति वाक्यम् । स्पर्शो हि निरन्तरमुपगूहनं भवति, तेन णौ स्पर्शस्य गतिविशेषत्वाद् गत्यादिसूत्रेण मुखमिति कर्मणि द्वितीया युक्ता ।

१२९. पूर्वजैरिति वक्तव्यम् ।

१३०. ज्ञानसामान्यार्थानामेव (गत्यादिसूत्रे) ग्रहणं न तु तद्विशेषार्थानामिति दीक्षितमते तु स एव स्मारितोऽस्माभिरित्येवं न्यसनीयम् । उत्तरे रामचरितेऽयं प्रयोगः ।

१३१. अत्र जुगुप्सन्त इति केवलायां निन्दायां प्रयुक्तिन तु निन्दापूर्विकायां निवृत्तावित्यपादानता नास्तीत्यवदातं वचः ।

१३२. होरा बह्वीरित्यत्यन्तसंयोगे द्वितीया प्रयोज्या ।

१३३. दिशि दिशि परीतास्य विदुषः कीर्तिराचन्द्रदिवाकरं स्थास्यति ।
१३४. यदि कल्पस्य कलिती कश्चिद् गृह्योक्तानि कर्माणि संशोधये-त्संक्षिपेच्च तदा लोकस्यानल्पमुपकुर्यात् ।
१३५. अयं श्रुतपूर्वी भारतं तेनास्य विदिता वृत्तान्ताः कुरुपाण्डवानाम् ।
१३६. अत्रावसरे सहानुभूतिं निवेदयामः संस्थितस्य[1] कुटुम्बकेन ।
१३७. न वाचि स्वातन्त्र्यं ददति लोकं प्रति शासितारः ।
१३८. इह भारते पतिमन्वारोहणमप्यकारि स्त्रीभिः साध्वीभिः ।
१३९. मन्ये मूर्तिमदस्य पापजातं समुदस्थीयत ।
१४०. शयनमुज्जिहान एवासौ प्रथमं मातुश्चरणयोर्नमति ततः पितुः ।
१४१. न तेन गणिकासुता चरणसेवया हापिता[2] ।

---

१३३. दिशं दिशं परीता (परिगता) इत्येवं वक्तव्यम् । गत्यर्थत्वात् कर्तरि क्तः ।
१३४. कल्पे कलितीत्येव साधु । **क्तस्येन्विषयस्येति** कर्मणि सप्तमी ।
१३५. पूर्वं श्रुतमनेनेति श्रुतपूर्वी । इनिस्तद्धितः । तेनानुक्तत्वाद्भारत-मिति कर्मणि द्वितीयान्तं साधु ।
१३६. अत्र वाक्ये सहानुभूतिरित्येकं पदम् । तेन कुटुम्बेन नास्य सहशब्दस्य योगः । तस्मात् **क्रियाग्रहणमपि कर्तव्यमिति** वार्तिकेन कुटुम्बायेति चतुर्थ्यन्तं साधु । कुटुम्बस्य निवेदन-क्रिययाऽभिप्रेयमाणत्वात् । **सहानुभूतिरित्याधुनिकी शब्दक्लृप्तिः ।** समवेदनेति तु प्रयोज्यम् ।
१३७. **उपपदविभक्तेः कारकविभक्तिर्बलीयसीति** लोकायेति वक्तव्यम् प्रतिशब्दश्च परिहार्यः ।
१३८. अन्वारोहणमित्येकं पदमिति कृद्योगलक्षणया षष्ठ्या पत्युरिति वक्तव्यम् ।
१३९. मूर्तिमता पापजातेनेति साधु । समुदस्थीयतेति भावे तप्रत्ययः ।
१४०. कर्मणोऽधिकरणत्वविवक्षायां चरणयोरिति सप्तमी साध्वी ।
१४१. अणौ गणिकासुता चरणसेवां जहातीति वाक्यम्, णौ तु गणिकासुतया चरणसेवां हापयति इति भवति । कर्मवाचिनि क्ते तु गणिकासुतया चरणसेवा हापितेति साधु ।

---

१. मृतस्य ।
२. त्याजिता ।

१४२. इदं नो वाचकेभ्यः सानुरोधमभ्यर्थनम् ।
१४३. असकृद् व्याख्यातमपीदं पद्यं नास्माकं मतावुपारोहति ।
१४४. मध्यरात्रमपि प्रजागरे नयन्तस्ते नाप्तकामा अभूवन्निति चित्रम् ।
१४५. संस्कृतभाषायाः सर्वसाधारणे कियानादर इति न विदितं ते ।
१४६. दारिद्र्यदुःखदग्धाय स्वदेशाय तस्य हृदये कापि वेदना नाभूत् ।
१४७. लोका लोभाय धर्मस्य बलिं ददति प्रायेण, तेन[1] न्यञ्चन्त्यहरहः ।
१४८. अहं हि भवतां छायेवानुगत इति परिपाल्यो भवद्भिः ।
१४९. तस्मिन्समये धर्मशास्त्रनिबन्धा अपि तस्मिन्नेव रागे रञ्जिता अभूवन् ।
१५०. मूलस्य रक्षणमविगणय्य न जातु शाखानां समृद्धिर्भवितुं शक्या ।

---

१४२. वाचकेष्विति साधु । ईदृशे विषये चतुर्थ्या नावसरः । **याच्ञा मोघा वरमधिगुणे** इति मेघे कालिदासप्रयोगः ।
१४३. मतिमुपारोहतीति वक्तव्यम् । आरोहतेर्नित्यं सकर्मकत्वात् ।
१४४. प्रजागरेणेति इत्थम्भूतलक्षणे तृतीया वक्तव्या **काव्यशास्त्रविनोदेन कालो गच्छति धीमतामि**त्यत्र यथा ।
१४५. संस्कृतभाषायां जनस्य (जनसामान्यस्य) कियानादर इत्येवं वक्तव्यम् । सर्वेषां साधारण इति सर्वसाधारणः । सर्वसाधारण इति नापेक्ष्यते जनशब्देन गतार्थत्वात् । संस्कृतभाषा ह्यादरस्य विषय इति तत्र युक्ता सप्तमी । कस्यायमादर इत्याकाङ्क्षायां जनस्येत्युच्यते । जनस्य (जनसामान्यस्य) इत्यनुक्त्वा सर्वसाधारण इत्येवोच्यताम् । सर्वसाधारण आदर इत्यन्वयः । सर्वेषां साधारण इति षष्ठीसमासः ।
१४६. दारिद्र्यदुःखदग्धस्य देशस्य कारणात् तस्येत्येवं वाक्यं प्रणेयम् ।
१४७. **धर्मं** बलिमित्येव साधु । धर्मो बलित्वेन रूप्यते इति **धर्मं** बलिमिति व्यस्तरूपकेणाभिधाने रूप्यरूपकयोः सामानाधिकरण्यम् ।
१४८. अनुगत इति कर्तरि क्तः । **भवतश्छायामिवानुगत** इति वक्तव्यम् ।
१४९. तेनैव रागेण रक्ता इत्येवं वक्तव्यम् । **तेन रक्तं रागात्**(४।२।१) इति लिङ्गाद्रागस्य करणतेष्टा । रञ्जिता इत्यत्र व्यर्थो णिच् परिहार्यः ।
१५०. शक्येति भावे कृत्यः । तेन समृद्ध्या भवितुं शक्यम् इत्येवमुपन्यसनीयम् ।

---

१. **अधो गच्छन्ति ।**

१५१. शिवादयः शब्दाः शवादिषु परिवर्त्य लिख्यन्ते कैश्चिदानुपूर्व्यामनादृतै[1] लिपिकरैः ।
१५२. सायन्तनं सवनकर्म सम्प्रवर्तयिष्याम इति सलिलेऽवगाहन्ते मुनयः ।
१५३. गुरुजनमनुसरन्तश्शिष्या अवतीर्णा निम्नगायामभिषेकाय ।
१५४. विद्यायाः सहचारी विनयो यवनेभ्यो नतरां संभाव्यते ।
१५५. भीतो बाल आगन्तुकं क्व मेऽम्बेति क्षीणतरे स्वरे पप्रच्छ ।
१५६. भद्र ! कां कलां वेत्थ, किं वा शिल्पम्, का च ते भृतिर्जिघृक्षिता ।
१५७. केचित्प्रजासु प्रकोपमिच्छवो वर्तमानावस्थितेरसन्तुष्टा विधित्सन्ति तम् ।
१५८. इहाऽपां पूर्णानि पात्राणि यत्र तत्र निहितानि वन्ह्युत्पातशमनाय ।
१५९. कृतज्ञो हि स्वस्योपकारिणं स्निह्यति, प्रत्युपचिकीर्षति च ।

---

१५१. शवादिभिः शवादिरूपेण वेति साधु । प्रकृत्यादित्वात्तृतीया ।
१५२. गाहू अवलोडने इति सकर्मको धातुः । तथा च कवीनां प्रयोगाः प्रथन्तेः—**सलिलमवगाढो मुनिजन** इति स्वप्नवासवदत्तायाम् । **पूर्वापरौ तोयनिधी वगाह्य स्थितः पृथिव्या इव मानदण्ड** इति कुमारे । तेन सलिलमित्येव साधु ।
१५३. तरतेः सकर्मकत्वाद् अवतीर्णा निम्नगामित्येव साधु ।
१५४. यवनेष्विति साधु । यवना हि संभावनाया आधारभूता विषयः ।
१५५. क्षीणतरेण स्वरेणेति वक्तव्यम् । स्वरः शब्दः । स च प्रश्नस्य (जिज्ञासायाः) करणमिति करणे तृतीया साध्वी स्यात् ।
१५६. त्वयेत्यनुक्ते कर्तरि तृतीयया भाव्यम्, क्तयोगे षष्ठीनिषेधात् ।
१५७. **वर्तमानावस्थिति** ह्यसन्तोषस्य विषय इति तत्र सप्तमी युक्ता ।
१५८. अपामिति षष्ठी व्यवहारानुगता । तथा च काशिकायां प्रयोगः—**ओदनस्य पूर्णाश्छात्रा विकुर्वत** इति । उदाहरणान्तराणि वाग्व्यवहारादर्शे द्रष्टव्यानि ।
१५९. स्निह्यतिरकर्मकः, तत्प्रयोगे उपकारिणि इति सप्तमी युक्ता । प्रत्युपचिकीर्षति च तमिति वक्तव्यम् ।

---

१. कर्तरि क्तः । अकृतादरैः ।

१६०. न वयमनृतिकस्य ते वचसि श्रद्दध्मः, कदाचिद्वञ्चयेथा[1] नः।
१६१. पुरा धनिका विदुषां पुरस्कारेण विद्यायै स्वं प्रेमाणं प्रकटयन्ति[2]।
१६२. हिन्दवोऽधुनापि मौहम्मदेभ्यो मैत्रीं मृगयन्ते।
१६३. एधानामाहारका ग्रामीणा वनानि प्रस्थिताः।
१६४. शूद्राः स्वकर्मनिरतास्त्रीन् वर्णानुपचारिणोऽभवन्।
१६५. व्यवसायस्याश्रिता सम्पद् इति लौकिकाः परीक्षकाश्च।
१६६. कुतो वा कस्माद्वा सोऽभिभूत इति जिज्ञासते जनः।
१६७. प्रद्वेषैकप्रयुक्ता यवनाः सोमनाथमूर्तिं प्राहार्षुः।
१६८. संस्कृतावहेलनं भारतवास्तव्येभ्यो न शोभते।

---

१६० वचः श्रद्दध्म इत्येव। वक्तरि तु द्वितीयाचतुर्थीसप्तम्यो दृश्यन्ते। **श्रदस्मै धत्त स जनास इन्द्रः** (ऋ० २।१२।५) इति चतुर्थ्या उदाहरणम्। श्रत्ते दधामि प्रथमाय (ऋ० १०।१४७।१) इति च। कारकत्वाविवक्षायां षष्ठ्यपि दृश्यते—**यतरो विवदमानयोराहाहमनुष्टया चक्षुषाऽदर्शमिति तस्य श्रद्दधति** (ऐ० ब्रा० २।४०)।
१६१. विद्यायामिति वक्तव्यम्। विद्या हि प्रेम्णो विषयः।
१६२. मौहम्मदशब्दात् सहार्थे तृतीया वा विषयसप्तमी वा प्रयोक्तव्या।
१६३. **अकेनोर्भविष्यदाधमर्ण्ययोः**रिति षष्ठीनिषेधे एधानाहारका इति वक्तव्यम्। एधानाहरिष्याम इति प्रस्थिता इत्यर्थः।
१६४. कृद्योगलक्षणा षष्ठी प्रयोक्तव्या। त्रयाणां वर्णानामिति। उपचारिण **उपसर्गेऽप्युपपदे ताच्छील्ये णिनिर्भवतीति दीक्षितः**।
१६५. व्यवसायमाश्रितेति साधु। क्तयोगे षष्ठीनिषेधात्।
१६६. कस्य हेतोः केन वेति साधु। कर्तरि क्तः।
१६७. ईदृशेषु स्थलेषु प्रहरतेः प्रयोगे कर्मणोऽधिकरणत्वविवक्षा लौकिकी प्रसिद्धेति सोमनाथमूर्ताविति वक्तव्यम्। **अगृहीतहेतिष्वशिक्षितो मे भुजः प्रहर्तुमिति** हर्षचरिते।
१६८. भारतवास्तव्यानामिति शेषे षष्ठी साधुः। विषयसप्तमी वा प्रयोक्तव्या।

---

१. गृधिवञ्च्योः प्रलम्भन इत्यात्मनेपदम्।
२. पुरि लुङ् चास्मे इति लट्।

१६९. विदेशात् परावृत्तं भ्रातर प्रति तत्तद्विषयकान्कांश्चित्प्रश्नानकार्षम् ।
१७०. वसुमित्रो मत्तः काशिकाविवरणं न्यासमग्रहीत्, तत्परिवर्ते च शब्दकौस्तुभं प्रादात् ।
१७१. न जाने जीवननौका केन घट्टेन सह प्रह्रियेत ।
१७२. ममैव हृदयं तावत्स्वार्थपरतायै प्रमोदासक्त्यै च मां धिगकार्षीत् ।
१७३. इमे सुधियः पद्यगुम्फने न तथाऽभ्यस्ता यथा गद्यनिबन्धने ।
१७४. करुणानिधे प्रभो ! अहं हि ते शरणमागतोऽस्मि । किमिति नाभ्युपपद्यसे[1] माम् ?
१७५. मासस्यावकाशमादाय स गृहं गतो बन्धून्द्रक्ष्यामि तैः संवत्स्यामि चेति ।

---

१६९. भ्राता प्रश्नविषयो न । प्रतिशब्दप्रयोगे तु तथा (विषय इति) नियतं प्रतीयते । इष्यते च सामीपिकमधिकरणम् । तेन भ्रातरि प्रश्नानिति साध । अस्ति भवत्सु मे प्रश्न इत्यस्य भवतः पृच्छामीत्यर्थात् । **तवैव पितरि प्रश्न** इत्युपनिषत्सु बहुलं प्रयोगदर्शनाच्च ।
१७०. तत्परिवर्ते इत्यपनीय तस्मात् प्रति इति प्रयोज्यम् । प्रतिशब्दः कर्मप्रवचनीयः प्रतिदानमाह । तद्योगे च **प्रतिनिधिप्रतिदाने च यस्मादिति** सूत्रेण पञ्चमी ।
१७१. प्रह्रियेत प्रहृता भवेदिति कर्मकर्तरि प्रयोगे सहशब्दयोगे तृतीया साध्वी । शुद्धे कर्मणि तु सहशब्देन नार्थः । अनुक्ते कर्तरि तृतीययाऽभीष्टार्थावगतेः ।
१७२. हेतौ तृतीयापञ्चम्यौ साधू स्यातामिति स्वार्थपरतया स्वार्थपरताया वेत्यादि वक्तव्यम् । प्रकृते तादर्थ्यं नास्तीति चतुर्थी दुर्लभा ।
१७३. अभ्यस्ता इत्यत्र कर्तरि क्तो दुर्लभः । शिष्टानुग्रहाभावात् । सकर्मकश्चाभिपूर्वोऽसिः । तेन पद्यगुम्फनमभ्यस्तवन्त इत्यादि वक्तव्यम् ।
१७४. त्वां शरणमित्येव । शरणं रक्षितारमाह न तु रक्षाम् । बाढं शरणे साधुः शरण्य इत्यत्र शरणं रक्षणमाह । **गत्यर्थकधातूनां प्रयोगे शरणशब्दस्त्रातारमेवाह न त्राणम् ।**
१७५. मासमवकाशमित्येव । अत्यन्तसंयोगे द्वितीया ।

---

१. अनुगृह्णासि ।

१७६. प्रतिपाद्यतया हि सर्वो लोक उपनिषदामन्तर्निविष्टः ।
१७७. वैधस्यामस्यां[1] सृष्ट्यां नानर्थकं किञ्चिदस्ति । अर्कपत्त्राण्यपि तीव्रविषाण्युपयोगे नीयन्ते का कथेतरेषाम् ।
१७८. अद्यत्वे सर्वत्र कृतकता लक्ष्यते । यत्सत्यं मानव्य इमाः प्रजाः सहजाच्चरिताद् दूरं वियुक्ताः ।
१७९. व्यसनिनो मूढाः कुलाङ्गाराः[2] कुमारकुलटाभिर्मनोमृगं बध्नन्ति ।
१८०. पुस्तकभारवहनेऽपि जिह्रियतीदानीन्तनाश्छात्राः ।
१८१. दिष्ट्या मत्पतिः साम्प्रतिकेभ्य एभ्यो व्यवहारेभ्यो विरुद्धोऽस्ति ।
१८२. इदानीं वयं पदाति गन्तुं न प्रभवामः । महान्नोऽध्वखेदः ।
१८३. आचार्यस्य भगवतः पाणिनेः सूक्ष्मेक्षिकायां सर्वज्ञकल्पतायां च परं विस्मये ।
१८४. यदीच्छसि वशे कर्तुं जगदेकेन कर्मणा । परापवादसस्येषु गौश्चरन्ती निवार्यताम् ॥

---

१७६. उपनिषत्स्वन्तर्निविष्ट इत्येव । एष व्यवहारः ।
१७७. उपयोगं नीयन्त इति नयतेर्द्विकर्मकत्वान्नियता वाक्सरणिः ।
१७८. वियुक्ता इत्यत्र कर्मकर्तरि क्त चरितादिति पञ्चमी साध्वी । शुद्धे कर्मणि तु क्तेऽनुक्ते कर्तरि तृतीयया चरितेनेति स्यात् ।
१७९. कुमारकुलटासु बन्धनाधारभूतास्विति सप्तमी साधुः । यथा शिवके बध्नाति गाम् । करणत्वविवक्षायां तु क्व बध्नन्तीत्याकाङ्क्षा न शाम्यति ।
१८०. पुस्तकभारवहनेनेति हेतौ तृतीया प्रयोक्तव्या । हेतुविवक्षा चात्र व्यवस्थिता शिष्टानामिति यत्र तत्र तत्प्रयोगाः प्रमाणम् ।
१८१. विरुद्ध इत्यत्र कर्तरि क्तो दुर्लभः । साम्प्रतिकैरेतैर्व्यवहारैः समं विरोधवानित्येवमुपन्यासः कार्यः । एतान्व्यवहारान् विरुणद्धीत्येवं वा न्यसनीयम् ।
१८२. पदातयः (सन्तः) इति प्रथमाबहुवचनं प्रयोक्तव्यम् । **स्वयं ह रथेन याति, उपाध्यायं च पदाति गमयतीति** काशिकायां प्रयोगः।
१८३. सूक्ष्मेक्षिकया सर्वज्ञकल्पतया चेति हेतुतृतीयया वक्तव्यम् ।
१८४. **वारणार्थानामीप्सित** इति परापवादस्येभ्य इति पञ्चम्या निर्देशः साधुः । भवति च पाठान्तरम्—परापवादसस्येभ्यो गां चरन्तीं निवारयेति ।

---

१. वेधस इयमिति वैधसी, तस्याम् ।
२. कुमारी चासौ कुलटा च । कुमारः श्रमणादिभिरिति समासः ।

१८५. अयाचितारं नहि देवदेवमद्रिः सुतां ग्राहयितुं शशाक (कु०) ।

१८६. सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन् ।
द्विजावलिव्याजनिशाकरांशुभिः शुचिस्मितां वाचमवोचदच्युतः ।।
(शिशु० १।२५)

१८७. अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ।

१८८. स तैराक्रमयामास शुद्धान्तं शुद्धकर्मभिः (कु० ६।५२) ।

१८९. साम्प्रतमुत्तरभारताद् हिन्दूराज्यमेकान्ततो विलुप्तम् ।

१९०. पयःपानं भुजङ्गानां केवलं विषवर्धनमिति जानन्तोऽपि हिन्दव-स्तेभ्यः पयः पाययन्त्येव ।

---

१८५. देवदेवमित्यत्र द्वितीयानुपपन्ना । न हि ग्राहिर्द्विकर्मकः । कालिदासोऽप्यन्यत्र रघुवंशे (२।१) **जायाप्रतिग्राहितगन्धमाल्यामि**त्यत्रास्य द्विकर्मकतां नेच्छति । तेन स्थितस्य गतिश्चिन्तनीयेति ग्राहयितुमुद्वाह्यत्वेन बोधयितुमित्यर्थस्य विवक्षणात् समाधिमाहुः ।

१८६–अत्र गत्युपसर्जना प्राप्तिर्लभेरर्थः । तेन गत्यादिसूत्रेणाणौ कर्तुर्णौ कर्मत्वं न । सितिमा सितं मुनेर्वपुर्लभत इत्यणौ वाक्यम् ।

१८७-क्रियाग्रहणमपि कर्तव्यमिति सम्प्रदानसंज्ञायां चतुर्थी न्याय्या । प्रतिभातियोगे प्रायेण द्वितीया दृश्यते यथा **त्रितं कूपेऽवहितमेतत् सूक्तं प्रतिबभा**वित्यत्र निरुक्ते । सा **ततोऽन्यत्रापि दृश्यत** इति वचनेन समाधेया ।

१८८-गत्यर्थत्वाभावात्तैरित्यत्र कर्मसंज्ञा नेति मल्लिनाथः । तन्न संगच्छते । क्रमेर्गत्यर्थत्वस्यापह्नवायोगात् । प्रकृते प्रवेशयामासेत्यर्थः । स च न गतिव्यतिरिक्तः । इदं च निरस्तसमस्तदोषं पाठान्तरं दृश्यते—स तानाक्रमयामास शुद्धान्तं शुद्धकर्मण इति ।

१८९-विलुप्तमिति नष्टमित्यर्थे कर्तरि क्त । अविवक्षितकर्मा लुपिरकर्मकः । उत्तरभारताद् इत्यपादाने पञ्चमी । सा नष्टा बाणपुरात्तदेति भारते प्रयोगः ।

१९०-तान्पाययन्तीत्येव साधु, प्रत्यवसानार्थत्वात्पिबतेः ।

१९१. नगरवर्णनमपि सिद्धगवीनां[1] कवीनां प्रतिभापरीक्षायै निकषः परिगण्यते ।

१९२. नाहमन्येषां सम्राजामिव स्वं जीवितं विषयोपभोगे क्षपयितुमीह इति सुतं प्रत्यवरङ्गजीवस्य हृदयोद्गारः ।

१९३. दुर्जनः सर्वैरविशेषेण विश्वासघातं करोति । स तस्य स्वो भावः ।

१९४. कौसल्यया रामो जातः सुमित्रया च लक्ष्मणः, तथाविधं च तयोः सौभ्रात्रमिति[1] चित्रीयते[2] लोकम् ।

१९५. इदं तु भवतां विदितचरमेव संस्कृताधीत्यामनुरक्तोऽहं न किमप्याभीलमगणयम्[3] ।

१९६. फलैर्नानारसैः शुद्धैः स्वादुशीतैश्च वारिभिः । तृप्तास्तां[4] भ्राजथुमतीमपृच्छन्कस्य पूरियम् (भट्टि०) ॥

---

१९१-प्रतिभापरीक्षायै निकष इति साधु । तादर्थ्ये चतुर्थी ।

१९२. अन्येषां सम्राजामित्यत्र षष्ठी सुतरामनुपपन्ना । उपमानोपमेययो सामानाधिकरण्यस्य नियमात् । वस्तुतस्त्वत्र क्रियातौल्ये वतिः प्रयोक्तव्यः । अन्यसम्राड्वदिति । विषयोपभोगेनेति च वक्तव्यम् ।

१९३. सर्वेषामिति साधु । इह सहार्थो नाम कश्चिन्नास्ति, येन तृतीया प्राप्नुयात् । सर्वेषां विश्वासः, तस्य घातः । विश्वासघात इत्यसमर्थसमासः ।

१९४. कौसल्यायां सुमित्रायामिति च वक्तव्यम् । **अधिकरणत्वविवक्षैवात्र लौकिकी प्रसिद्धे**ति सप्तम्येव व्यवहारमनुगता ।

१९५. विदितचरमित्यत्र भूतपूर्वे चरट् । तेन वर्तमानार्थता नास्ति । चरट् च तद्धित इति क्तेन कृत्प्रत्ययेन भवच्छब्दस्य साक्षाद्योगोऽपि नास्तीति षष्ठ्यप्राप्तेरनुक्ते कर्तरि तृतीयैव साध्वी ।

१९६. अत्र भट्टिप्रयोगे फलशब्दे तद्विशेषणेषु च षष्ठी प्रायो व्यवहारानुपातिनी स्यात् । **पूरणगुणसुहितार्थे**ति सूत्रे सुहितार्थग्रहणाल्लिङ्गाज्ज्ञापकात्तद्योगे वाक्ये षष्ठी साध्वी । ज्ञापकसिद्धं न सर्वत्रेति तृतीयाप्रयोगोपि क्वाचित्को नासाधुरिति वाग्योगविदः ।

---

१. सिद्धा गौः वाग् येषाम्, तेषाम् । सिद्धगूनाम् इति सु युक्तम् । बहुव्रीहौ टचो दौर्लभ्यात् । १. शोभनो भ्रातऽस्येति सुभ्राता । वन्दिते भ्रातुः कबभावः । तस्य भावः सौभ्रात्रम् । २. चित्रीकरणं विस्मयनं विस्मापनं च । तेन लोकमित्यत्र द्वितीयोपपन्ना । ३. आभीलं कष्टम् । ४. दीप्तिमतीम् ।

१९७. एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ।
१९८. विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् (कु०) ।
१९९. धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि । आह चायमिमं दीर्घ मन्ये धातुर्विभाषितः ( पा० ३।१।२७ सूत्रे श्लोकवार्तिकम्) ।।
२००. पक्वौदनो भुज्यते ।
२०१. वक्ष्यति कर्मणि द्वितीया (काशिकायां वृत्तौ) ।
२०२. एतद् देशजा दासवदनुकुर्वन्त्याङ्ग्लानाम् ।
२०३. वदन्त्यपर्णामिति तां पुराविदः (कुमारे ५।२८) ।
२०४. रावणस्येह रोक्ष्यन्ति[1] कपयो भीमविक्रमाः (भट्टौ ८।१२०) ।
२०५. अपि सिञ्चेः कृशानौ त्वं दर्पं मय्यपि योऽभिकः (भट्टौ ८।९२ ।

---

१९७. विद्यादित्यस्य कर्मत्वे त्वङितमिति साधु स्यात् । भवतीत्यध्याहार्यम्, आतमिति प्रथमया विपरिणमनीयम् इति वा ।
१९८. असाम्प्रतमिति निपातेनाभिहितत्वाद् विषवृक्षे कर्मणि कर्मविभक्तिर्न ।
१९९. मन्य इत्यस्य धातुर्विभाषित इति वाक्यार्थः कर्म । न तु धातुः । द्वितीया च ङ्याप्प्रातिपदिकाद्विधीयते इति तदप्राप्तिः स्फुटा ।
२००. भुज्यते इति प्रधानक्रिययोक्तत्वाद् ओदने द्वितीया न ।
२०१. कर्मणि द्वितीयेति सूत्रम् । तस्येदमनुकरणं वृत्तौ । अनुकार्यानुकरणयोरभेदविवक्षायामर्थवत्त्वाभावात्प्रातिपदिकत्वासत्त्वाद् द्वितीयाशब्दादनुक्ते कर्मणि द्वितीया न ।
२०२. कर्मणः शेषत्वविवक्षायां षष्ठी स्थाने ।
२०३. पुराविद इत्यस्मादनन्तरमितिशब्दो द्रष्टव्य इति दुर्घटवृत्तिः ।
२०४. रावणं रोक्ष्यन्तीति वाच्यम् । भीमविक्रमाः कपयो रुजः कर्तार इति भाववचनत्वाभावाद्रावणस्येत्यत्र षष्ठी दुर्लभा ।
२०५. **अनुकाभिकाभीकः कमितेति** (५।२।७४) कर्तरि कन्प्रत्ययान्ता निपात्यन्ते । कना तद्धितेन कर्मणोऽनुक्तत्वात्तत्र द्वितीयैव साध्वी । तथा च पदमञ्जरीकार उदाहरति—**अनुको भार्याम् । अभिको दासीमिति ।**

---

1. रुजो भङ्गे इत्यस्माल्लृटि ।

२०६. प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् । चरणौ रञ्जयन्त्व-
स्याश्चूडामणिमरीचिभिः (कुमारे ६।८१) ॥

२०७. मुनित्रयं नमस्कृत्य गुरून् ध्यात्वाथ भक्तितः । शब्दापशब्दयोरेष
विवेकः प्रवितन्यते ॥

२०८. न पठेद्यावनीं भाषां प्राणैः कण्ठगतैरपि ।

२०९. धन्यास्ते ये मनसा वाचा कर्मणा च हिंसावृत्तेर्विवर्जिताः ।

२१०. मुच्यते सर्वपापेभ्यो विष्णुलोकं च गच्छति ।

२११. सर्वैः पापैः प्रमुच्यते ।

२१२. पुरा प्रजाः प्रजेशानन्वरज्यन्[1] विरलमेव च तानद्रुहन् ।

२१३. इतः कान्यकुब्जो नाम विशालो जनपदः, यत्राङ्गपालो नामावनि-
पतिरीष्टे स्म ।

---

२०६. शितिकण्ठायेत्यत्र **क्रियाग्रहणमपि कर्तव्यमिति** चतुर्थी सूपपन्ना ।
क्रियार्थोपपदस्येति वा चतुर्थी समर्थनीया । अर्थस्तु हृदयंगमो न
भवति ।

२०७. **उपपदविभक्तेः कारकविभक्तिर्बलीयसीति** कारकविभक्तिर्द्वितीयेति मुनित्रयमिति साधु ।

२०८. **इत्थम्भूतलक्षणे** तृतीयेति प्राणैरित्यादि साधु । **प्राणैः** कण्ठगतै-
रुपलक्षित इत्यर्थः ।

२०९. हिंसावृत्त्येति तृतीयैवानुक्ते कर्तरि साध्वी । त्यक्ता हीना इत्यर्थः ।

२१०. मुच्यत इति कर्मकर्तरि लट् । मुक्तो भवतीत्यर्थः । अवधिभा-
काङ्क्षायां सर्वपापेभ्य इति पञ्चमी ।

२११. मुच्यत इति शुद्धे कर्मणि लटि रूपम् । तेन पापैरित्यतानुक्ते
कर्तरि तृतीया साधुः ।

२१२. **अनोर्लक्षणेत्थम्भूतेति** (१।४।९०) सूत्रेण कर्मप्रवचनीयत्वे तद्योगे
प्रजेशानिति साधु । तेभ्योऽद्रुहन्निति च वक्तव्यम् ।

२१३. यमीष्टे यस्य वेति वक्तव्यम् । ईशेः सकर्मकत्वात् । पक्षेऽ**धीगर्थ-
दयेशां कर्मणीति** शेषत्वविवक्षायां षष्ठी ।

---

१. **कुषिरञ्जोः प्राचां श्यन्परस्मैपदं चेति कर्मकर्तरि परस्मैपदम् ।**

२१४. ततः स राजा कांचिद् वृद्धां धात्रीवेषे शत्रो राजधानीं प्रजिधाय[1] ।
२१५. इमे शिशवः सद्यो निद्रायाः प्रबुद्धाः प्रमार्जन्त्यक्षीणि ।
२१६. परार्थघटकः श्रेष्ठी दुर्गतोद्धारे बहुधनं व्ययं करोति ।
२१७. न जाने मया किं करिष्यति नृशंसो दुरात्मा ।
२१८. तदा शासिता निद्रयेवाजागः,[2] भयं चोपस्थितमदर्शत् ।
२१९. बिल्हणः किल काश्मीरेभ्यः प्रपलाय्य कर्णाटेषु शरणं प्रपेदे ।
२२०. राष्ट्ररक्षाप्रयुक्ता राष्ट्रिया लघुवेतन एव सेनास्वङ्ग-भावमभजन् ।
२२१. धिक् तं हताशं यस्मान्न पिता प्रसीदति न च गुरुः ।
२२२. क्षीरौदनं गन्धयुतं विधाय समादयत् किञ्चित् तत्तनूजम् ।

---

२१४. धात्रीवेषेणेति प्रकृत्यादित्वाद् **इत्थम्भूतलक्षणे** वा तृतीयया भवितव्यम् ।
२१५. निद्राया इत्यत्र पञ्चमी दुरुपपादा । **ल्यब्लोपे कर्मणीति** चेन्न । अर्थासंगतेः । निद्रां परित्यज्य प्रबुद्धा इति नार्थवद्वचः । निद्रापरित्यागस्य प्रबोधस्य चाविशेषात् । तेन निद्राणप्रबुद्धाः सुप्तप्रबुद्धाः शयनोत्थिता इति वा भङ्ग्यन्तरेण वक्तव्यम् ।
२१६. बहुधनस्य व्ययं करोतीति वा बहुधनं व्यययतीति वा साधु । व्यय वित्तसमुत्सर्गे इति चुरादिषु पठ्यते ।
२१७. मयेत्यस्थाने । करणतृतीयाविवक्षाविरोधात् । किं मां करिष्यतीत्येव शिष्टैरादृतः प्रकारः । तथा च भारते प्रयोगः—क्रुद्धः किं मां करिष्यति (वन० २०६।२४)। क्वचित्षष्ठ्यपि । तेन किं ममेत्याद्यप्यदुष्टम् ।
२१८. निद्रयेति तृतीया दुर्लभा । उन्निद्र (विनिद्रः) इवाभूत्, अजागरीदिवेति वक्तव्यम् ।
२१९. कर्णाटानित्येव साधु । यस्मात्कर्णटास्तस्य शरणम् ।
२२०. लघुवेतनेनैवेति वक्तव्यम् ।
२२१. यस्मिन्निति वैषयिकी सप्तमी युज्यते ।
२२२. **आदिखाद्योर्नेति** निषेधात्तनूजेनेति वक्तव्यम् ।

---

१. प्रहितवान् । २. जागृ निद्राक्षये इत्यस्माल्लङ ।

२२३. विरतिशून्यपुंसां पीतवेषान्न लाभः ।
२२४. हिन्दीति भाषा संस्कृताद् विकृतेत्यभ्युपगमः ।
२२५. सकृत्पतिता न शेकुरात्मानमवनत्या अवटाद्[1] उद्धर्तुम् ।
२२६. रजकाय वस्त्राणि ददातीमानि निर्णिज्य[2] रज्यन्तामिति[3] ।
२२७. खण्डिकोपाध्यायः शिष्याय चपेटां ददाति पदानि मिथ्या कारयमाणाय[4] ।
२२८. पुत्रात्प्रमोदो जायते ।
२२९. अहिंसा परमो धर्म इति शास्त्रडिण्डिमेन वर्तमानहिन्दूनां हृदयेभ्यो युयुत्सागुण एव विनाशितः ।
२३०. रत्यादिः स्थायिभावो विभावादिभिर्व्यक्तो दध्यादिन्यायेन रूपान्तरं परिणतो रसो भवति ।

---

२२३. पीतवेषेणेति तृतीया स्यात्, सिध्यतीति क्रियापदमत्र गम्यते । **विभाषा गुणेऽस्त्रियामित्यत्र** विभाषेति योगविभागाद्वा हेतौ पञ्चमी समाधेया ।
२२४. संस्कृतस्येति षष्ठी साध्वी शैषिकी । संस्कृतस्य विकृतं रूपम्, संस्कृतस्य विकार इति वा वक्तव्यम् ।
२२५. अवनत्या इति यदि षष्ठी तदा दोषः, न ह्यवटो नामावनतेर्भिन्नः कश्चिदर्थोऽस्ति । यदि च पञ्चमी तदाऽदोषः । अवनत्यवटयोः सामानाधिकरण्यं ह्यभीष्यते । अवनतिरूपादवटादित्यर्थः ।
२२६. रजकायेति भाष्यकारमतेन साधु । स हि भगवान्ददातिकर्मणाऽभिसम्बध्यमानमात्रस्य सम्प्रदानतामिच्छति । न तु स्वस्वत्वनिवृत्तिपूर्वकं परस्वत्वापादनमेवेह दानं विवक्षितम् इति मनुते ।
२२७. इदमनवद्यम् । उक्तो हेतुः ।
२२८. **जनिकर्तुः प्रकृतिरिति** सूत्रे प्रकृतिशब्देन कारणमात्रस्य ग्रहणं न तूपादानकारणस्यैवेति न्यासकारमतम् । तन्मतेन पुत्रादिति पञ्चमी साध्वी ।
२२९. हृदयेष्विति सप्तम्यैव साध्वी, अवधिभावानुपपत्तेः । विनाशितो निःसारित इत्यर्थे तु यथास्थितं पञ्चम्यपि स्थाने ।
२३०. रूपान्तरेणेति साधु । उक्तो हेतुः । रूपान्तरं गत इति वा वक्तव्यम् ।

---

**१. गर्तात् । २. संशोध्य । ३. वर्ण्यन्ताम् । ४. असकृद् अन्यथोच्चारयते ।**

२३१. परीक्षोपयोगिषु लेखेषूपेक्ष्य न शक्यमस्याः पत्रिकायाः सर्वप्रियत्वं सम्पादयितुम् ।
२३२. बर्तमानायां बहुदैवतार्चायामुपहसन्ति केचित् । अपरे नात्रोपहास्यं किंचित्पश्यन्ति ।
२३३. सनातनधर्माणः कथं नामान्त्यजान् मन्दिरप्रवेशाय निषेधन्तु ।
२३४. तेजस्विने ब्रह्मचारिणे वरायाग्निशब्दप्रयोगो युज्यत एव ।
२३५. सर्वमहान्[1] विष्णुः स्वं यशो देवर्षिणा नारदेन गापयामास ।
२३६. जयोदाहरणं[2] बाह्वोर्गापयामास किन्नरान् । (रघौ० ४।७८) ।
२३७. सुहृदो भोजनाय निमन्त्रयते तदर्थं च महतः संभारान्कुरुते ।
२३८. माठरकौण्डिन्यौ भोजनमेषां ब्राह्मणानां परिवेविषाताम् ।

---

२३१. परीक्षोपयोगिनो लेखानिति साधु । उपेक्षतेः सकर्मकत्वात् ।
२३२. दैवतार्चामिति कर्मणि द्वितीया प्रयोज्या । हसतेः सकर्मकत्वात् । तथा च मेधदूते कविकुलपतेः प्रयोगः— **गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः** ।
२३३. मन्दिरप्रवेशात् इति **वारणार्थानामिति** पञ्चमी युक्ता ।
२३४. वरे (सविशेषणे) ऽधिकरणे सप्तम्येव युक्ता, तादर्थ्याभावाच्चतुर्थी तु न ।
२३५. अत्र गायतिः शब्दकर्मा न, शब्दक्रियोस्तीति देवर्षिणेति तृतीया निर्दुष्टा ।
२३६. अत्र जयोदाहरणं जयप्रख्यापकः प्रबन्धविशेष इति गायतिः शब्दकर्मेति गत्यादिसूत्रेणाणौ कर्तुर्णौ कर्मत्वे किन्नरानिति द्वितीया सूपपन्ना ।
२३७. भोजनेनेति हेतौ तृतीया प्रयोक्तव्या । तथा च व्यवहारः ।[3]
२३८. विष्लृ व्याप्ताविति धातुः परिपूर्वो भोजनायां वर्तते स्वार्थपुरस्कारेण, न केवलः । भोजनेन कश्चिद्भोज्यः परिविष्यते न तु तस्य भोजनं परिविष्यते । प्रकृते प्रयोगो धात्वर्थाज्ञानमूलकः । तेन ब्राह्मणान् भोजनेन परिवेविषातामिति वक्तव्यम्[4] ।

---

१. सर्वेभ्यो महत्तर इति सर्वमहान् । गुणात्तरेण तरलोपश्चेति समासः ।
२. जयप्रख्यापकं प्रबन्धविशेषम् । ३. विस्तरस्तु वाग्व्यवहारादर्शे द्रष्टव्यः ।
४. अत्रार्थे शिष्टप्रयोगा वाग्व्यवहारादर्शे द्रष्टव्याः ।

२३९. पश्य कियता यत्नेन सशर्करेस्मिन्क्षेत्रे कृषति हलं कृषीवलः ।
२४०. पितरि शुश्रूषितव्यम् (भाष्ये) ।
२४१. आषाढस्य प्रथमे दले देहल्यामध्यविशद् घर्मसङ्घः ।
२४२. एते वयं सुधातिशायिनं कविसूक्तिरसं वाचकानास्वादयितु-मिच्छामः ।
२४३. प्रकामं विशदोयमर्थः । नात्र सन्देहो भवितुं शक्यः ।
२४४. नित्यं त्राता च हन्ता च धर्माधर्माश्रितान् नरान् ।
२४५. सहस्रमेतस्यां वाचि दद्मः (जनकोक्तिः) ।
२४६. कौसल्यातोतिरिक्तं च मम शुश्रूषते बहु (रा० २।४।१८) ।
२४७. खड्गी बाणी शरासनी स राजा प्रातस्तरामेवाखेटं निर्जगाम ।

---

२३९. क्षेत्रं कृषति हलेनेति वक्तव्यम् । प्रचरद्भाषया हृतमना अन्यथा प्रयुङ्क्ते ।

२४०. भाष्यकारप्रयोगात् कर्मणोऽधिकरणत्वविवक्षया पितरीत्यादि साधु ।

२४१. अधिपूर्वस्य विशेर्विरलः प्रयोगः । उपपूर्वस्तु प्रयोज्यः । देहल्यामि-त्यत्र सप्तम्यां न कश्चिद्दोषः ।

२४२. आस्वादयितुमित्यस्य पाययितुमित्यर्थ इति प्रत्यवसानार्थत्वाद् गत्यादिसूत्रेण वाचकानिति द्वितीया साध्वी ।

२४३. शक्य इति भावे कृत्यः । तेन सन्देहेन भवितुं शक्यमिति वक्त-व्यम् । भावश्च क्रिया, तेन नपुंसकत्वम् ।

२४४. त्राता हन्तेति च तृन्प्रत्ययान्ते पदे । तेन **न लोकाव्ययेत्यादिना** षष्ठीनिषेधाद् द्वितीया ।

२४५. एतस्यामिति निमित्ते[1] सप्तमी साध्वी । इदमौपनिषदं वचः । सहस्रं गा इत्यर्थः ।

२४६. ममेति कर्मणोऽविवक्षायां शेषे षष्ठी साध्वी ।

२४७. आखेटमुद्दिश्येति क्रियान्तराध्याहारेण समाधेयम् ।

---

१. निमित्ते सप्तमीं व्यवहरन्ति शिष्टा इति विषयेऽस्मत्कृतौ व्याकरणचन्द्रोदये प्रथमखण्डे कारकप्रकरणानुबन्धो द्रष्टव्यः ।

२४८. आलाने गृह्यते हस्ती वाजी वल्गासु गृह्यते (मृच्छ० १।५० )।
२४९. दद्यात्कृष्णाजिनं पृष्ठे गां पुच्छे करिणं करे।
केसरेषु तथैवाश्वं दासीं शिरसि दापयेत् ॥
२५०. समवायान्समवैति (पा० ४।४।४३)।
२५१. द्रव्ये गुणाः समवयन्ति।
२५२. न प्रमत्ताय भीताय विरथाय प्रयाचते।
व्यसने वर्तमानाय प्रहरन्ति मनस्विनः ॥
२५३. वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयन्ति हि (भा० पु० १०।४५।६)।
२५४. भोजितं परमान्नेन संविष्टं कशिपौ सुखम् (भा० पु० १०।४६।१५)।
२५५. कादम्बरीरसज्ञानामाहारोऽपि न रोचते।

---

२४८. आलाने वल्गासु चेत्युभयत्र औपश्लेषिकेऽधिकरणे सप्तमी व्यवहारानुगता। गृहीत इव केशेषु मृत्युना धर्ममाचरेदित्यत्र यथा। अनुगृह्णाति चात्राधिकरणविवक्षां भगवान्सूत्रकारो यदाह **तत्र तेनेदमिति सरूपे** (२।२।२६)।

२४९. पृष्ठे इत्यादिषु पूर्वोक्तानुसारेणैवाधिकरण विवक्षा।

२५०. समवैति आगत्य तदेकदेशी भवतीत्यर्थः, तेनाधिकरणविवक्षा युक्ता। अत्राह पदमञ्जरीकारः—**गुणभूतसमागमापेक्षया समवायानिति द्वितीयानिर्देशः। लोके तु प्रायेण सप्तमी प्रयुज्यते द्रव्ये गुणाः समवयन्तीति।**

२५१. इदं साधु। उक्तो हेतुः।

२५२. प्रहरतिरत्र प्रासने उद्यमनेऽवगोरणे वा वर्तते। यथा **इन्द्रो वृत्राय वज्रं प्राहरद्** (तां० ब्रा० १५।४।५) इत्यत्र। तेन प्रमत्ताय इत्यादिषु **क्रियार्थोपपदस्य च कर्मणि स्थानिनः** (२।३।१४) इति शास्त्रेण चतुर्थी साध्वी। प्रमत्तादिकं हन्तुं न प्रहरन्ति शस्त्रं नोद्यच्छन्तीत्यर्थः। अस्त्रं वा न प्रास्यन्ति।

२५३. **आदिखाद्योर्न** इति अणौ कर्तुः कर्मत्वनिषेधात् तेन स्वमांसं खादयन्तीति वक्तव्यं कारकदुष्टिप्रहाणाये।

२५४. भोजयतिरत्र भोजनाद्वारके तर्पणे वर्तते। यथाऽऽशित इति तृप्तिं गतो गमितो वोच्यते। तस्मात्परमान्नेनेति करणे तृतीयाऽनवद्या।

२५५. कादम्बरीरसज्ञेभ्य इति **रुच्यर्थानां प्रीयमाणः** इति सम्प्रदाने चतुर्थी साध्वी।

२५६. दापयेद् धनिकस्यार्थमधमर्णाद् विभावितम् (मनु० ८।४७)।
२५७. यश्च वेदेषु देवेषु गोषु विप्रेषु साधुषु।
धर्मे मयि च विद्वेष्टि स वै आशु विनश्यति (भा० पु०)॥
२५८. विदेशात्प्रत्यागतं सुतं मुक्ताहारं धापयत्यम्बा।
२५९. प्रणयादहीनमात्मनीनं तद्वचो निशम्य स परं प्राहृषत्।
२६०. इन्द्रियारीनलं छित्त्वा तीर्णो भव भवार्णवात् (महोपनिषदि ५।८४)।
२६१. अस्य वचनस्य पूर्ववचनाद् विरोधो नाशङ्कनीयः।
२६२. द्वेष्टि प्रायो गुणेभ्यो यत् (भट्टि० १८।९)।
२६३. स्वर्गतस्य च तस्य महात्मनः शाश्वतशान्तिलाभायेश्वरं प्रार्थयामहे।

---

२५६. ददातिकर्मणा सम्बन्धाद् धनिकशब्दाच्चतुर्थी प्राप्ता। सा त्वपूर्णत्वात्सम्प्रदानस्य न कृता। इहोभयोः स्वत्वस्य भावादुभयोः स्वत्वस्याभावादपरिपूर्णो ददात्यर्थ इति **मेधातिथिः**।

२५७. द्विषेः सकर्मकत्वात्सप्तम्यसाम्प्रतम्। द्वितीयैव तु साम्प्रतम्।

२५८. सुतेन मुक्ताहारं धापयतीत्येवं विपरिणमनीयम्। ण्यन्तस्य धाञः प्रयोगेऽणौ कर्तुर्णौ कर्मत्वं न क्वचिच्छिष्टम्।

२५९. प्रणयेनाहीनम् इति तु वक्तव्यम्। अनुक्ते कर्तरि तृतीयया भाव्यम्।

२६०. तरतिः प्लवनेऽकर्मकः, पारगमने तु सकर्मकः। **तरति शोकं तरति ब्रह्महत्यां योऽश्वमेधेन यजते** इत्यादिषु तथा दर्शनात्। तेन भवार्णवम् इति द्वितीयान्तं प्रयोक्तव्यम्।

२६१. पूर्ववचनेनेति वक्तव्यम्। सहार्थे तृतीया व्याख्येया कर्तरि वा। विरोध इति घञन्तः। अस्य वचनस्येति कर्मणि षष्ठी। **उभयप्राप्तौ कर्मणीति** नियमात्। पूर्ववचनमिदं वचनं विरुन्ध इत्यर्थात्।

२६२. द्विषिः सकर्मक इत्यसकृत् पूर्वमुक्तम्। चतुर्थ्या अप्रसङ्गात्तां विहाय गुणशब्दाद् द्वितीया व्यवहार्या।

२६३. दुहियाच्यादीनां या द्विकर्मकता सार्थनिबन्धनेति अर्थयतेरपि द्विकर्मकत्वाच्छान्तिलाभम् इत्येवं शोभनं वचः स्यात्।

२६४. न स्वदन्ते सुतृप्तस्य यथा प्रतिविषा रसाः (यो० वा० ४।३३।६८)।
२६५. लोकायते शास्त्रे पदार्थान्नयते उपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयति (काशिका० १।३।३६)।
२६६. बहुव्रीहिरिवान्यपदार्थप्रधानैरर्थवादैर्नार्थः।
२६७. स्वामिस्त्वत्प्रसादेन उत्तीर्णोऽहं भवाब्धेः (यो० वा० ६ (उत्तर०) २१६।२४)।
२६८. नोद्विजन्ते स्वकार्येषु जना अध्यवसायिनः (यो० वा० ६ (पूर्व०) ८८।१९)।
२६९. तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् (बृ० उ० ३।५।१)।
२७०. यत्नयुक्तिविहीनस्य गोष्पदं दुस्तरं भवेत् (यो० वा० ५।७५।५३)।

---

२६४. स्वदिरत्र रुच्यर्थक इति तत्प्रयोगे सुतृप्तस्य सम्प्रदानता सिद्धेति सुतृप्तायेति वक्तव्यम्।

२६५. प्रापयत्यर्पयति ददातीत्यनर्थान्तरम्, तेन सम्प्रदानता सिद्धेति शिष्येभ्य इति चतुर्थी नातिशङ्कनीया।

२६६. बहुव्रीहिणेवान्यपदार्थप्रधानैरिति वक्तव्यम्। उपमानोपमेययोः सामानाधिकरण्यात्।

२६७. उत्तीर्णः=उद्गतः, निष्क्रान्तः। यथाऽभिषेकोत्तीर्ण इत्यत्र। तेनापादाने पञ्चमी स्थाने। पारगमनेऽर्थे तु भवाम्बुधिम् इति स्यात्। तथा च पुरस्तादुक्तम्।

२६८. विजिर्भयेऽर्थे वर्तते, तेन स्वकार्येभ्य इति पञ्चमी प्रयोक्तव्या। **सम्मानाद् ब्राह्मणो नित्यमुद्विजेत विषादिवेति** मनुवाक्ये यथा।

२६९. निर्विद्येति निःपूर्वाद् विद्लृ लाभे इत्यस्य ल्यपि रूपम्। **अव्ययकृतो भाव** इति ल्यब्भावे। तेन कर्मणोऽनुक्तत्वात् पाण्डित्यमित्यत्र द्वितीया।

२७०. दुस्तरमिति खल्प्रत्ययान्तम्। खलर्थैः प्रत्ययैर्योगे षष्ठ्या निषेधादनुक्ते कर्तरि तृतीयया भवितव्यम्। यत्नयुक्तिविहीनेनेति वाच्यम्।

२७१. अवश्यंकारी कटस्य ।

२७२. देवतायतनस्य प्रदक्षिणं कुर्वन्ति प्रणताः ।

२७३. ग्रामं गन्तुमनसोऽपि वयं परवन्त इति प्रतिहतगतयः ।

२७४. तान्मन्त्रोपदेशं विधाय यतिवराः क्षिप्रं प्रतिप्रतस्थिरे ।

२७५. न्यायाद्रिकूटमधिरूढगिरां गुरूणां चरणौ नमामि (श्रीकेशवदिग्-विजयसारे १०।५) ।

२७६. य उदास्ते दोषहान्यै प्रेक्षावत्सु न गण्यते ।

---

२७१. आवश्यकाधमर्ण्ययोर्णिनिरिति अवश्यंकारीत्यत्र णिनिः । **अकेनो-र्भविष्यदाधमर्ण्ययोरि**ति निषेधस्य नायं विषयः । आवश्यकेऽत्र णिनिः, न भविष्यति । तेन कटस्येति षष्ठी साध्वी ।

२७२. देवतायतनं प्रदक्षिणं कुर्वन्तीत्येवं न्यसनीयम् । प्रदक्षिणमित्यव्ययम् । अन्यत्रानव्ययं चापि । यदानव्ययं तदा देवतायतनं प्रदक्षिणी कुर्वन्तीति शोभनो न्यासः । षष्ठ्यास्तु नोभयत्र प्रसङ्गः । च्वेरभावे देवतायतनानि प्रदक्षिणानि कुर्वन्तीत्येवमपि शक्यं वक्तुम् ।

२७३. **पदं हि पदान्तरेणान्वेति न तु तदेकदेशेन** इति गन्तुमनस इत्येतदेकदेशेन गन्तुम् इत्यनेनानन्वयाद्ग्रामम् इत्यत्रानुक्ते कर्मणि द्वितीयाऽयोगाद् ग्रामे गन्तुमनसः (गमनेच्छावन्तः) इति वैषयिकेऽधिकरणे सप्तमी प्रयोगमर्हति । कवयस्तु एकदेशेनान्वयमभ्युपेत्य बहुलं द्वितीयां प्रयुञ्जाना दृष्टाः—**मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा** (उत्तरमेघे) ।

२७४. तेषां मन्त्रोपदेशं विधायेति शैषिकी षष्ठी प्रयोज्या, तादर्थ्ये वा तेभ्य इति चतुर्थी व्यवहार्या । द्वितीया तु कथमप्युपपत्तिमती न ।

२७५. अधिरूढगिराम् (अधिरूढा गीर्येषां तेषाम् कर्तरि क्तः) इत्येतदेकदेशेनाधिरूढशब्देनानन्वयान्न्यायाद्रिकूटमित्यत्रानुक्ते कर्मणि द्वितीया न संभविनी । तेनान्वयाय सामर्थ्यलाभाय न्यायाद्रिकूटाधिरूढगिरामित्येवं समासेन वक्तव्यम् ।

२७६. दोषहानाविति विषयसप्तम्या वक्तव्यम् ।

२७७. पुत्रदारस्य वाप्येनं शिरांसि स्पर्शयेत्पृथक् (मनु० ८।११४)।

२७८. न द्रुह्येद् वंशमशकान् हिमवांस्तापसो भवेत् (बौ० ध० ३।३।३।१६)।

२७९. यथाकथंचिल्लोकोऽयं दिनान्येतानि यत्नतः।
मयातिवाहितः सर्वो न च लोको व्यपद्यत (राज० २।३४)।

२८०. सारेतरान्तरविचारचणान् प्रतीर्ष्य न्(अमरोद्घाटनोपक्रमे क्षीरस्वामी)।

२८१. न च स्निह्यति कस्यचित् (भट्टि० १८।१९)।

२८२. वैरायते महद्भिश्च (भट्टि० १८।६)

२८३. संस्कृत्या सभ्यता जायते इति केचित्।

---

२७७. अण्यन्तावस्थायामेष पुत्रदारस्य शिरांसि स्पृशतीति वाक्यम्। स्पृशिर्गतिपूर्वके संश्लेषणे वर्तते। तेन गत्यर्थत्वाद् गत्यादिसूत्रेण णावेनमिति कर्मणि द्वितीयोपपन्ना भवति। पुत्राश्च दाराश्चेति पुत्रदारम्। सर्वोऽपि द्वन्द्वो विभाषैकवद्भवतीत्येकवद्भावः।

२७८. **क्रुधद्रुहेर्ष्यादिसूत्रेण** सम्प्रदानतायां दंशमशकेभ्य इति चतुर्थी भाव्यमिति पाणिनीयाः।

२७९. दिनान्यतिव्रहेन्त्यतिक्रामन्ति। लोको दिनान्यतिवाहयति भूते लोको दिनान्यतिवाहितवान्। राजा लोकेन दिनान्यतिवाहितवान् इति ण्यन्ताण्णौ वाक्यम्। मया (राज्ञा) लोकेन दिनान्यतिवाहितानीति स्यात्। अणौ कर्तुर्णौ कर्मत्वमुक्तं न तु णौ कर्तुरिति लोकः प्रयोज्यंकर्म न भवति।

२८०. सारेतरान्तरविचारचणेभ्य इति तु निर्दुष्टं स्यात्। क्रुधद्रुहोरेवोपसृष्टयोः प्रयोगे यम्प्रति कोपस्तस्य कर्मत्वम्, न तु प्रतीर्ष्यतेरपि।

२८१. स्निह्यतिरकर्मकः। विषये सप्तमी वक्तव्या कस्मिंश्चिदिति।

२८२. महद्भिरिति सहार्थे तृतीया व्याख्येया। वैषयिकेऽधिकरणे सप्तमी तु श्रेयसी स्यात्।

२८३. 'संस्कृत्याः' इति **जनिकर्तुः प्रकृतिरिति** शास्त्रेणापादाने पञ्चमी साध्वी स्यात्। तृतीया तु न शास्त्रशिष्टिमनुपतति न च लौकिकं व्यवहारम्।

२८४. संस्कारैराचारा व्यवहाराश्च जायन्ते ।

२८५. श्रीमण्डनेन शाङ्करसम्प्रदायान्मनाग्विरुद्धोऽद्वैतमार्गानतिवर्ती ब्रह्मसिद्धिरिति नाम्ना ग्रन्थोऽग्रन्थि ।

२८६. इमं माणवकं वासः परिधापयत (अथर्व० २।१३।२ भाष्ये सायणः) ।

२८७. उच्यतां शकटदासः—यथा परिधापिताः कुमारेणाभरणानि वयम् (मुद्रा० ५) ।

२८८. देवी साम्प्रतमेव मां परिणाययिष्यति तामेव चिरन्तनब्राह्मणीम् (विद्धशाल०) ।

२८९. कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति च ।

२९०. कौतूहलं मां प्रच्छयति ।

२९१. विश्वासमागतं सन्तं प्रायो द्रुह्यन्त्यसाधवः (का० नी० सा० ११। १५।३४) ।

२९२. इदं ज्ञेयमिदं ज्ञेयमिति यस्तृषितश्चरेत् ।
असौ कल्पसहस्रेषु नैव ज्ञानमवाप्नुयात् ।।

---

२८४. अत्रापि पूर्वोक्तैव व्याक्रिया निराक्रिया च प्रत्येतव्या ।

२८५. शाङ्करसम्प्रदायेन मनाग् विरुद्ध इत्येव साधु । विरुद्ध इति कर्मणि क्तः । सम्प्रदायेनेत्यनुक्ते कर्तरि तृतीया वेद्या ।

२८६. अनेन माणवकेनेति तृतीया प्रयोज्या । शास्त्रेण धात्रो ण्यन्तस्य द्विकर्मकता क्वचिदपि नोक्तेत्यसकृत्पुरस्तादवोचाम ।

२८७. उक्तं वक्तव्यं नेहाम्रेड्यते ।

२८८. **नीवह्योर्न**ेति प्रतिषेधान्मया चिरन्तनब्राह्मणीं परिणाययिष्यतीति वक्तव्यम् ।

२८९. **भीत्रार्थानां भयहेतुः**रिति अपादाने कान्तशब्दात्पञ्चमीष्यते । **स्पृहेरीप्सितः** इति सूत्रेण च कान्तायेति युज्यते वक्तुम् ।

२९०. अविवक्षितकर्मा प्रच्छिरिहाकर्मकः । तेनाणौ कर्तुर्णौ कर्मत्वं सुस्थम् ।

२९१. विश्वासमागताय सते इत्येवं चतुर्थ्या वक्तव्यम् । हेतुरसकृदुक्तचरः ।

२९२. कल्पसहस्रैरित्यपवर्गे तृतीया प्रयोक्तव्या । अपवर्गे तृतीया कारकविभक्तिर्न ।

२९३. सा राज्ञा भार्याभावाय प्रार्थिता ।
२९४. उन्नतेऽध्वनि । शरीराण्येव करभाः स्वानि भाराय मेनिरे (शि० भा० २०।३४) ।
२९५. 'येदिलस्या', पकाराय प्रतिजज्ञे प्रतापवान् (शि० भा० १३।४) ।
२९६. आह्वायकान् भूमिपतेरयोध्यां व्यसर्जयत् (भट्टि २।४३) ।
२९७. तौ दम्पती त्रिः परिणीय वह्निम् (कु० ५।८०) ।
२९८. प्राक् केकयीतो भरतस्ततोऽभूत् । (भट्टि० १।१४) ।
२९९. मुमूर्षूणां तु सर्वेषां यत्पथ्यं तन्न रोचते (रा० ३।५३।१७) ।
३००. कथं चित्रगतो भर्ता मयाऽसूयितः (माल० ४) ।

---

२९३. सा राज्ञा भार्याभावं प्रार्थितेति साधु स्यात् । प्रार्थिता याचितेत्यनर्थान्तरम् ।
२९४. स्वस्मिन् भारबुद्धिरित्यनादरो गम्यत इति **मन्यकर्मण्यनादरे विभाषाऽप्राणिष्विति** कर्मणि चतुर्थी साध्वी ।
२९५. अपकारं प्रतिजज्ञे इत्येवं साधूकरणीयम् । प्रतिजानातिः सकर्मकः ।
२९६. आह्वायक इति **तुमुण्ण्वुलौ क्रियायां क्रियार्थायामित्यनेन** ण्वुला व्युत्पादितः । आह्वास्यन्तीत्याह्वायका इति भविष्यत्यत्र ण्वुल् । **अकेनोर्भविष्यदाधमर्ण्ययोरित्यनेन** षष्ठीनिषेधे भूमिपतिम् इति द्वितीया प्रयोज्या । **आश्चर्यं वैयाकरणो भट्टिरप्यत्र विषये प्रमदिष्यति ।**
२९७. पुरोधाः कर्ता । नयति द्विकर्मकः परिणयतिश्चापि । दम्पती इति प्रधानं कर्म । वह्निश्च गौणम् । श्रीरामायणेपि द्विकर्मकतया प्रयोगः परिणयते:—**अगृह्णां यच्च ते पाणिमग्निं पर्यणयं च यत्** (२।४२।८) । त्वामिति शेषः ।
२९८. केकयीत इत्यत्र तसिः सप्तम्यर्थे ज्ञेयः । जायमानं प्रति मातुरधिकरणता नियता, विभक्त्यन्तरस्यादर्शनात् ।
२९९. रुच्यर्थानां प्रयोगे प्रीयमाणस्यार्थस्य सम्प्रदानत्वे मुमूर्षुभ्य इत्येव निर्दिष्टं वचः ।
३००. चित्रगतायै भर्त्रे मयाऽसूयितम् इत्येवं परिवर्तनीयम् । **क्रुधद्रुहे**-त्यादिशास्त्रेण भर्तुः सम्प्रदानता स्थिता ।

३०१. तत्र च गृहस्थो वैदिकैः कर्मभिरधिक्रियते नेतरः (बौ० ध० सू० २।६।११ इत्यत्र गोविन्दस्वामिकृतं विवरणम्) ।
३०२. हा हतदैव ! केलिकदलीकन्दली मत्तकरिशुण्डावेष्टनं साह्यते ।
३०३. कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे (रा० १।१।४) ।
३०४. अभियोगं कमेतस्य विरुद्धं मनुजस्य भोः ! उपस्थापयथ…(३०।७)
३०५. मह्यं किन्त्वपवर्गसर्गसमये…दयस्व द्रुतम् (करुणा० १६) ।
३०६. श्रुत्यन्तमुल्लङ्घकः (करुणा० ३६) ।
३०७. राघे मज्जनुषां निषूदनचणः (कटाक्षः) (करुणा० ४२) ।

---

३०१. वैदिकेषु कर्मस्विति वाच्यम् । तृतीयां प्रयुञ्जानः स्वामी तु व्यवहारमुच्चरते ।
३०२. अण्यन्तावस्थायां केलिकदलीकन्दली (कर्त्री) मत्तकरिशुण्डावेष्टनं (कर्म) सहते इति वाक्यम् । ण्यन्तावस्थायां दैवं (प्रयोजकं कर्तृ) केलिकदलीकन्दल्या (अनुक्ते कर्तरि तृतीया) मत्तकरिशुण्डावेष्टनं साहयति इति । कन्दल्याः प्रयोज्यकर्मता न । अविधेः । कर्मवाचिनि तिङि दैवेन केलिकदलीकन्दल्या मत्तकरिशुण्डावेष्टनं साह्यत इत्येवं रूपम् । अत्र वेष्टनमित्युक्ते कर्मणि प्रथमा । अयमेवावदातः प्रकारो वाचः, प्रकारान्तरं नास्ति ।
३०३. **भीत्रार्थानां भयहेतुरिति** कस्मादिति तु पाणिनीयाः प्रयुयुक्षन्ते ।
३०४. विरुध्यते स्मेति विरुद्धम् । भूते निष्ठा । कर्तृकर्मणोः कृतीति कृद्योगे कर्तरि षष्ठ्याः प्रसङ्गे **न लोकाव्ययनिष्ठे**त्यादिना शास्त्रेण निषेधेऽनुक्ते कर्तरि तृतीयया भाव्यम् । न चात्र नपुंसके भाव क्तो येन शैषिकी षष्ठी सूपपन्ना स्यात् ।
३०५. मह्यं दयस्वेत्यत्र चतुर्थ्या अप्रसङ्गः । दयतिः सकर्मकः । तेनानुक्ते कर्मणि द्वितीया स्यात् । **अधीगर्थदयेशां कर्मणीति** कर्मणि शेषत्वेन विवक्षिते षष्ठी वा स्यात् । मां दयस्व मम वा दयस्वेत्येवमेव शक्यं वक्तुम् ।
३०६. श्रुत्यन्तम् इत्यत्र द्वितीया दुरुपपादा । कृद्योगलक्षणा षष्ठी प्राप्नोति न च सा ण्वुला कृता योगे निषिद्धा शास्त्रेण । तेन श्रुत्यन्तस्येत्येव साधु ।
३०७. मज्जनुषां निषूदनचणः । अत्र मज्जनुषामिति षष्ठी दुष्यति । कृद्योगे कर्मणि षष्ठीविधेः । **तद्धितयोगे तु यथाप्राप्तं द्वितीया**

३०८. लोके तन्मुखलोकनं न च भवेद् विद्वद्वरेभ्यः प्रियम् (करुणा० ६६)।

३०९. कान्तस्यास्यविधुं निरीक्षणपराम् (करुणा० १०३)।

३१०. काममायां जिज्ञासमानहृदयः (मोह० ६।१८)।

३११. त्वयि प्रपन्नाश्च विशुद्धशीलाः (मोह० ८।२)

३१२. कथमहं त्यजेयं विपत् (मोह० ७।२०)।

---

स्यात्। **सपूर्वाच्चेति** सूत्रे वृत्तौ कृतपूर्वी कटम् इत्युदाहृतौ यथा। अत्र व्यामूढः कविः। अन्यत्रास्यामेव कृतौ मोहध्वान्तमपचिकीर्षणचरण इति प्रयुञ्जानस्त्वंसंमूढः।

३०८. विद्वद्वरेभ्य इत्यत्र चतुर्थी प्रदुष्यति। प्रिय इति कृत्प्रत्ययान्तम्। प्रीणातीति प्रियः। कर्तरि कृत्। तद्योगे षष्ठी शिष्यते **कर्तृकर्मणोः कृतीति**।

३०९. आस्यविधुम् इत्यत्र द्वितीया नोपपत्तिमती भवति। निरीक्षणपरामिति बहुव्रीहिः। निरीक्षणं परं प्रधानं यस्यास्ताम्। एकदेशान्वये सत्यपि कृद्योगे षष्ठी स्यान्न द्वितीया। सर्वथा दुष्प्रयोग एवायम्। दोषपरीहाराय आस्यविधुनिरीक्षणपरामिति समासेन वक्तव्यम्, आस्यविधोर्निरीक्षणे तत्पराम् इति वा व्यासेन।

३१०. काममायां जिज्ञासमान इत्येव निर्दुष्टो वाक्यन्यासः। यदि हृदयशब्दप्रयोगेऽभिनिवेशस्तदा सप्तमी वैषयिकी प्रयोक्तव्या। जिज्ञासमानहृदय इति जिज्ञासावद्धृदय इत्यनर्थान्तरम्। असामर्थ्येपि गमकत्वात्समासो देवदत्तस्य गुरुकुलमिति तु न शक्यमाश्रयितुम्। **अत्र जिज्ञासा काममायाकर्मिका स्यादर्थान्तरकर्मिका वेति नैयत्यं नास्ति।**

३११. त्वयि इति सप्तम्यस्थाने। प्रपद्यतेः सकर्मकत्वात्त्वामिति वक्तव्यम्। **शिष्यस्तेहं शाधि मां त्वां प्रपन्नमि**त्यादिषु सर्वत्र द्वितीयादर्शनाच्च।

३१२. विपदिति त्यजेयम् इत्यस्य कर्म। तेनानुक्ते कर्मणि द्वितीयैव साध्वी। तेन विपदमिति वक्तव्यम्। विपदिति स्त्रीलिङ्गं प्रातिपदिकम्।

३१३. रागादिभिर्निःस्पृहः (मोह०—८।३२)।

३१४. स्फुटमनभिमतं प्रौढवाराङ्गनाभिः (मोह० २।४२)।

३१५. युग्मं युग्मं दम्पतीनां तदानीं लाजाहोमः कारितो वेदविद्भिः (मोह० ४।३५)।

३१६. ··वृन्दारकाः कुसुमोत्करैः। शिरसि भवतो हर्षाद्वर्षन्ति···॥ (नारा० ५०।५)।

३१७. एतानि याचकमिह द्विजवेषगूढं मा लब्धकाममराधिपतिं कृथास्त्वम् (चम्पू० ५।८४)।

---

३१३. रागादिभिरिति तृतीया दुष्यति। कर्तृकरणयोस्तृतीया भवति हेतौ वा, क्वचित् प्रकृत्यादित्वाच्च। अत्र कर्त्रादीनामभावात् तृतीयाया अत्यन्तमप्रसङ्गः। विषयेऽधिकरणे सप्तमी वक्तव्या।

३१४. प्रौढवाराङ्गनाभिरिति तृतीयाप्यप्रसक्ता। शास्त्रविरोधिनी चेयम्। अनभिमतमित्यत्र वर्तमाने क्तः। **क्तस्य च वर्तमान** इति षष्ठी प्रयोक्तव्या।

३१५. युग्ममित्यादिः सर्वो न्यासः शास्त्रं विरुन्धे। **हृक्रोरन्यतरस्यामिति** करोतेरणौ कर्तुर्णौ पाक्षिकं कर्मत्वं विधीयते। तदिदं प्रयोज्यं कर्म भवति। तेनाणौ कर्तुः कर्मत्वपक्षे युग्मं युग्मं (प्रथमान्तं) लाजाहोमं (द्वितीयान्तं) कारितमिति वा वक्तव्यम्। **प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मता** इत्युक्तेः। वेदविद्भिर्युग्मेन युग्मेन (अनुक्ते कर्तरि तृतीया) लाजाहोमः कारित इति वा। गत्यन्तरं नास्ति।

३१६. अस्थाने तृतीया। वर्षतेः सकर्मकत्वात्कुसुमोत्करानिति तु साधु स्यात्। अपि वा कुसुमोत्करैरभि वर्षन्ति शिर इति वक्तव्यम्। एवं हि व्यवहारोऽनुसृतो भवति।

३१७. एतानीति कर्मणि द्वितीया। कृद्योगलक्षणा षष्ठी कुतो न। अत्र टीकाकृदाह—याचकं याचिष्यमाणम्। **अकेनोर्भविष्यदाधमर्ण्ययोः** (२।३।७०) इति षष्ठीनिषेध इति। तन्न विचारसहम्। क्रियायां क्रियार्थायामुपपदे सत्येव भविष्यत्ताप्रतीतेर्नायमकेनोरिति प्रतिषेधस्य विषयः। महात्मानं दर्शको व्रजति, केदाराँल्लावको यातीत्यादिष्वेव षष्ठीनिषेध उपपन्नो भवति।

३१८. ज्येष्ठं प्रति यथा राज्यं न देयं मे कथंचन (भा० आदि० ८५।-२१)।

३१९. स सत्यवादी वितथाद् विरुद्धः (तुलसी० १।३२)।

३२०. यद्वै यज्ञेऽकुशला ऋत्विजो भवन्त्यचरितनो ब्रह्मचर्यम् (गो० ब्रा० पू० १।१३)।

३२१. प्रेक्षागारं जगामाशु मञ्चानामवलोककः (हरि० २।२८।५)।

३२२. स मया द्वादशसुवर्णभारेण दण्ड्यः (दूत० १)।

---

३१८. **उपपदविभक्तेः कारकविभक्तिर्बलीयसीति** वैयाकरणाः परिभाषन्ते। अयं तु सम्प्रदाने कारकविभक्तिं चतुर्थीमकृत्वा प्रतियोगे द्वितीयामाश्रयति, तद् वैयाकरणा न सहन्ते।

३१९. वितथं विरुन्धे इति वक्तव्यम्। रुधिः सकर्मकः तेनाऽस्थाने तृतीया।

३२०. **कर्तृस्थेन्विषयस्य कर्मण्युपसङ्ख्यानम्** इति ब्रह्मचर्यं इति वक्तव्यम्।

३२१. मञ्चानवलोकिष्य इति जगामेत्यर्थः। तेन **अकेनोर्भविष्यदाधमर्ण्ययोरिति** मञ्चानवलोकक इत्येव वक्तव्यम्।

३२२. दण्डिग्रहणार्थको द्विकर्मकः। **गौणे कर्मणि दुह्यादेरिति** गौणे कर्मणि लादयः। ण्यता कर्मण उक्तत्वात्ततः प्रथमा। प्रधाने कर्मणिऽनुक्ते द्वितीयैव तेन सुवर्णभारम् इति साधु स्यात्।

**इति कारकविभक्तिविवेचनं समाप्तम्।**

## उपपदविभक्त्यधिकारो द्वितीयः ।

१. ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवोः (अमरकोषे) ।
२. मणिबन्धादाकनिष्ठं करस्य करभो बहिः (अमरकोषे) ।
३. उत्तरं यत्समुद्रस्य हिमाद्रेश्चैव दक्षिणम् । लोकः स भारतं वर्षम् ।
४. परितः पतन्ति दुष्कृतां विपदः ।
५. नान्यत्ते क्षमं मन्येन्तरेण प्रसादनाद् गुरोः ।
६. इदं च मां भाति न[1] ह्युपधिसमाश्रयेणात्यन्ताय प्रैधते नरः ।
७. न ऋते पुरुषकारं सिध्यन्ति मनोरथाः ।
८. यदत्र मामभिस्यात्[2] तन्मे देहि । नाहं ततोऽधिकं मार्गामि ।

---

१. **अन्तरान्तरेण युक्ते** इति भ्रुवाविति द्वितीया युक्ता । भ्रुवो-रित्यपपाठः ।
२. बहिर्योगेऽपपरिबहिरञ्चवः पञ्चम्या इति सूत्रज्ञापिता पञ्चमी प्रायेण दृश्यते । ज्ञापकसिद्धं न सर्वत्रेति क्वचिन्नेति करस्येति षष्ठी समाधेया ।
३. समुद्रादिति दिक्छब्दयोगलक्षणा पञ्चमी प्रयोक्तव्या । उत्तरं दक्षिणं इत्यत्र नपुंसकत्वमपि दुःखाक्रमम् । एवं तर्हि पाठः परि-वर्तनीयः—उत्तरो यस्समुद्राच्च हिमाद्रेश्चैव दक्षिणः इत्यादि ।
४. **अभितः परितः** इत्यादिवचनेन परितोयोगे द्वितीयैव साध्वीति दुष्कृत इति वाच्यम् ।
५. प्रसादनमिति वक्तव्यम् । अन्तरेणेत्यस्य स्थानेऽन्यत्रेति वा प्रयो-क्तव्यम् ।
६. भातिरकर्मक इति ममेति वक्तव्यम् ।
७. अत्र द्वितीयाऽपाणिनीया । कातन्त्रकारस्तु ऋतेयोगे द्वितीये-त्यसुसूत्रत् इति तन्मतेन साधु ।
८. **अभिरभागे** इति भागेर्थेऽवस्थितोपसर्गसंज्ञा । तेन कर्मप्रवचनीय-त्वाभावात्तन्निमित्ता द्वितीया नोपपद्यते । उपसर्गनिमित्तं षत्वं चोपपद्यते । तेन ममाभिष्यादिति वक्तव्यम् ।

---

१. उपधिः कपटम् ।   २. अभिरत्र भागे वर्तते ।

९. धिगस्तु मम वीर्यस्य यत्त्वं जीवसि रावण ।
१०. सूर्यादयो ग्रहास्तापप्रकाशादिनान्यत् किमपि कर्तुं नालमिति केचित्प्रतिपन्नाः[1] ।
११. दुर्जनैः पृथक् तिष्ठन्तु सज्जनाः ।
१२. यो दरिद्रान् बिभर्मीति तान्प्रति धनं ददाति स आत्मन एवोपकरोति ।
१३. केचिदाहुर्भरतवर्षादधः पातालम् अद्यत्वेऽमेरिकेति संज्ञायते ।
१४. जानुभ्यामुपरि शरीराङ्गं सक्थीत्युच्यते ।
१५. अस्मभ्यं तु न किञ्चित् प्रतिभाति ब्रह्मणो विनेति रूढिसाधवः ।
१६. नैतद्युक्तं बिम्बेन विसंवदेत्[2] प्रतिबिम्बमिति ।

---

९. **उभसर्वतसोः कार्या** वचनाद् धिग्योगे द्वितीया युक्तेति वीर्यमित्येव साधु ।
१०. प्रकाशादेरन्यद् इति पञ्चम्येवा**न्याराद्** इति सूत्रविहिता युक्ता ।
११. **पृथग्विनानानाभिस्तृतीयान्यतरस्याम्** इति पृथग्योगे तृतीया साध्वी पक्षे द्वितीयापञ्चम्यौ ।
१२. **उपपदविभक्तेः कारकविभक्तिर्बलीयसी**ति सम्प्रदाने चतुर्थी प्रयोज्या, प्रतिशब्दश्च त्याज्यः ।
१३. अध इत्यस्तातेरर्थेऽसिप्रत्ययान्तः । तद्योगे **षष्ठ्यतसर्थप्रत्ययेने**ति षष्ठ्येव युक्ता न पञ्चमी ।
१४. उपरीति **उपर्युपरिष्टात्** (५।३।११) इत्यस्तातेरर्थे निपातितम् । तेनात्रापि षष्ठ्येव युक्ता । जान्वोः, जानुनोरिति वा वक्तव्यम् ।
१५. **ततोऽन्यत्रापि दृश्यत** इति दृशिग्रहणस्य प्रयोगानुसारित्वात्प्रतिभातियोगे द्वितीया । भातिना युक्त एव प्रतिः सर्वत्र दृश्यते न चायुक्तो व्यवहितो वेति नायं स्वतन्त्रोनुपसर्गो निपातो न वा कर्मप्रवचनीयः । यथा **न साम्परायः प्रतिभाति बालम्** इति कठोपनिषदि । **त्रितं कूपेऽवहितमेतत्सूक्तं प्रतिबभावि**ति च निरुक्ते ।
१६. विसंवादो भेदः । **तेनान्याराद**िति सूत्रेण बिम्बशब्दात् पञ्चमी युक्ता । **कमलानां मनोहराणां रूपाद् विसंवदति शीलमि**ति कविवाक्ये यथा ।

---

१. कर्तरि क्तः । व्यवसितादिषु क्तः कर्तरि चकारादिति वामनसूत्रम् ।
२. विसदृशं स्यात् ।

१७. दन्तमूलादुपरिष्टादुच्छूनः प्रदेशो वर्त्स इत्युच्यते ।
१८. सन्ततेः परिणयननिर्वृत्तिमेव तस्याः प्रति स्वस्य परं कृत्यं प्रपश्यन्ति प्रायशो लोकाः ।
१९. न च बहवो वैयाकरणास्तुलामारोहन्ति दाधिमथैस्तत्रभवद्भिः श्रीशिवदत्तैर्महामहोपाध्यायैः ।
२०. महाकविभ्यः पश्चात्कवयः, ततः कविपाशा[1] अजायन्तेति क्रमिको ह्रासः कवितायाः ।
२१. अनु रोगिमरणं प्रदिश्यमानं महौषधं किंफलकं भवेत् ?
२२. दक्षिणतो विद्याशालाददूरे[2] शिल्पशालेति प्रशमभङ्गाय कल्पते ।
२३. जलदा अपि ज्वलदङ्गारवृष्टिसृष्टौ प्रभवन्ति कामुकानाम् ।
२४. इदं देवदत्ताय हितकरं भवतीति नैतावता यज्ञदत्तायाऽपि हितं भवेत् ।

---

१७. दन्तमूलस्येति साधु । उक्तो हेतुः ।
१८. ताम्प्रतीति वक्तव्यम् ।
१९. **सदृशार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्**इत्यत्रोपमातुलाशब्दौ सदृशपर्यायौ पर्युदस्तौ । सादृश्येऽर्थे वर्तमानयोस्तयोर्योगे तृतीया स्यादेवेति सर्वमनवद्यम् ।
२०. पश्चादित्यस्तातेरर्थे निपातितम् । **षष्ठ्यतसर्थप्रत्ययेनेति** तद्योगे षष्ठ्येव न्याय्या ।
२१. **लक्षणेत्थम्भूताख्याने**त्यादिसूत्रेणानोः कर्मप्रवचनीयता न । **अनुर्लक्षणे** इत्यनेनापि न । लक्षणाद्यर्थस्याभावात् । तेन शेषे षष्ठ्याऽनु रोगिमरणस्यैति वक्तव्यम् ।
२२. अतसर्थप्रत्ययेन योगाद् विद्याशालस्येति वक्तव्यम् । **दक्षिणोत्तराभ्यामतसुच्** (५।३।२८) इत्यनेन अतसुच् ।
२३. प्रभवतेरलमर्थत्वात्सृष्टये इति साधु ।
२४. समासगतेनापि हितशब्देन देवदत्तस्य योगोऽस्तीति चतुर्थी नानुपपन्ना ।

---

१. कुत्सिताः कवयः । याप्ये पाशप् ।
२. विभाषा छायासुराशालानिशानम् इति तत्पुरुषो वा नपुंसकम् ।

२५. तस्याधस्ताद्राजमार्गस्योभयतो य आपणास्तेष्वयं श्रेष्ठी स्वामी ।
२६. अतोऽस्माभिस्तथा स्थेयं यथा द्वात्रिंशतो दन्तानामन्तरा सेयं जिह्वा ।
२७. शिरोरेखायाः शून्या इमा अक्षरपङ्क्तयः शिरोवेष्टनविरहिताः कुलाङ्गना इव न शोभन्ते ।
२८. रामस्य वनं प्रति प्रस्थानस्योत्तरं[1] विश्वस्तेवाभूदयोध्या ।
२९. तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः (ईश० उ० ५) ।
३०. गुरोः प्रणामादनु स नीचैरासनमध्यास्त ।
३१. अध्यापकेन सर्वत्र समं वर्तितव्यम्, नैकेनच्छात्रेण सह पक्षपातो युक्तः ।
३२. माता सुताभिर्मधुरं व्यवहरति, तथाऽपि तास्तस्यामुद्धतं[2] वर्तन्ते ।
३३. कार्यार्थमुपेतो दूतो गां[3] गतेन मौलिना प्रभुपादपङ्कजयोः प्रणम्य सिंहासनमधोऽतिष्ठत् ।

---

२५. राजमार्गमुभयत इति वक्तव्यम् । तेष्वित्यत्र **स्वामीश्वराधिपति-दायादे**त्यादिना स्वामिशब्दयोगे सप्तमी साध्वी ।
२६. दन्तानिति द्वितीया साध्वी । उक्तो हेतुः ।
२७. **पूर्वसदृशसमोनार्थे**त्यादिना समाससूत्रेण ऊनार्थयोगे तृतीया ज्ञापिता, तेन शिरोरेखयेति वक्तव्यम् ।
२८. प्रस्थानादुत्तरमित्येव साधु ।
२९. सर्वस्येति शैषिकी षष्ठी । बहिर्योगे पञ्चमी उपपदविभक्तिरुक्ता, इह तु बाह्यत इति पदं श्रूयते ।
३०. प्रणामस्यानु इति वक्तव्यम् । उक्तो हेतुः ।
३१. अत्रोत्तरार्द्धे साहचर्यस्यानभिप्रेतत्वाच्छात्रेण सहेत्ययुक्तो न्यासः । नैकस्मिंश्छात्रे इति विषयसप्तमी प्रयोक्तव्या ।
३२. सुताभिरित्यत्र सहार्थे तृतीया शक्योपपादयितुम् । सप्तमी वाऽश्रेया । सप्तम्येव च श्रेयसी । **कार्यविनिमयेन मयि व्यवहरत्यनात्मज्ञे** इति मालविकायां कालिदासप्रयोगः ।
३३. सिंहासनस्याध इति वक्तव्यम् । अस्तातेरर्थेऽसिप्रत्ययान्तोधः-शब्दः ।

---

१. विश्वस्तेव । २. सदर्पम् । ३. भूमिम् ।

३४. हा कष्टं किं करोमि प्रियतमविरहे कामदूतो वसन्तः ।
३५. हा पितः क्वासि हे सुभ्रु बह्वेवं विललाप सः (भट्टि०) ।
३६ उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः (जातकमालायाम्) ।
३७. तुलां यदारोहति दन्तवाससा (कुमारे) ।
३८. पूर्वं कायस्येति पूर्वकायः । एवमपरं कायस्येत्यपरकायः ।
३९. उत्तरेऽस्य भारतस्य त्रिविष्टपम् ।
४०. द्विविधं हि कारणम् । उपादानकारणं सहकारिकारणं च । तत्र यत्कार्येणाभिन्नदेशं तदुपादानकारणम् ।
४१. यदि वेदाः प्रमाणमिति वदन्नेव भट्टकुमारिलः पर्वतशिखराद-धोऽपतत् ।
४२. सूर्यं परितः पृथिवी तस्याश्च परितश्चन्द्रः परिक्रमं करोति ।
४३. अद्य प्रभृत्यवनताङ्गि तवास्मि दासः (कु० ५।८६) ।

---

३४. **हाप्रतियोगेष्वपि** दृश्यत इति कष्टमित्यत्र द्वितीया ।
३५. हाशब्दोऽयं शोकवचनः । तेन कान्तारे पित्रादिः सम्बोध्यते । तत्र सम्बोधनप्रथमायां प्राप्तायां हाप्रतियोगेष्वपीत्यस्यारम्भेऽपिशब्द-स्य व्यभिचारार्थत्वात्सम्बोधने प्रथमापि भवतीति **दुर्घटवृत्तिः** ।
३६. **द्वितीयाऽऽम्रेडितान्तेष्विति** बुद्धीरिति युक्तम् । **उपर्यध्यधसः सामीप्ये** (८।१।७) इत्यनेनात्राम्रेडनं न, सामीप्यानवगमात्, किं तर्हि वीप्सायामिति चेत् षष्ठ्यपि समाहिता भवति ।
३७. तौल्येऽत्र तुलाशब्दः । **तुल्यार्थैरिति** सूत्रे तु तुल्यार्थस्य तस्य प्रयोगासत्तेर्तीया ननिष्पन्नेति **मल्लिनाथः** ।
३८. **दिक्छब्दयोगेऽन्यारादिति** पञ्चमी विहिता । तस्य परमाम्रेडि-तम् (८।१।१२) इति निर्देशादवयववाचिना दिक्छब्देन योगे षष्ठ्यपि भवतीति रक्षित इति दुर्घटवृत्तिः ।
३९. उत्तरमस्माद् भारतात् त्रिविष्टपमित्येव न्यसनीयम् ।
४०. कार्येणाभिन्नदेशमित्यत्र सहार्थे तृतीया वेद्या ।
४१. पर्वतशिखरस्याध इति साधु । असाधुत्वे हेतुः पूर्वमसकृदुक्तः ।
४२. तां च परित इत्येव साधु ।
४३. कार्तिक्याः प्रभृतीति भाष्यकारवचनप्रामाण्यात्प्रभृतियोगे पञ्चमी भवति । अद्यशब्दस्त्वधिकरणशक्तिः । इह तु पञ्चम्यर्थं लक्षय-तीति नात्र किमपि वाच्यमस्ति ।

४४. आदाय मार्गशीर्षाच्च द्वौ द्वौ मासावृतुः स्मृतः (अमरोद्घाटने कात्यवचनम्)

४५. तस्य परमाम्रेडितम् (पा० ८।१।२)।

४६. बाल्योपरि कौमारं तस्योपरि च यौवनमित्यवस्थाक्रमः।

४७. इड् दीर्घश चिण्वदिड् लत्वढत्वे द्वित्वत्रिकं तथा। इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम् (सि० कौ० भाव-कर्म-प्रक्रियायां दीक्षितः)।

४८. आ परमाणोरा च भूलोकम् (उदयनकृतकिरणावल्याम्)।

४९. नानादेशसमुत्पन्ना ब्राह्मणाः क्षत्रिया विशः।
चक्राङ्किन्ता प्रवेष्टव्या यावदागमनान्मम॥

५०. सत्यन्यस्मिन्यस्य पूर्वो नास्ति स आदिः (पा० १।१।२१ सूत्रे भाष्ये)।

---

४४. **आरभ्यशब्दवद् आदायशब्दोऽपि प्रभृतिपर्याय** इति तद्योगे पञ्चमी साध्वी।

४५. अवयववृत्तिभिर्दिक्शब्दैर्योगे षष्ठी नासाध्वी। तत्रावध्यवधिमद्भावाभावात्।

४६. बाल्यस्योपरीत्येवं वक्तव्यम्। उक्तो हेतुः।

४७. अधिकयोगे सूत्रकारस्य पञ्चमी सप्तम्यावेवेष्टे इति तृतीया दुर्लभा। **यस्मादधिकं यस्य चेश्वरवचनम्** (२।३।९) इति सूत्रकारप्रयोगः पञ्चम्या ज्ञापकः। **तदस्मिन्नधिकमिति दशान्ताड्ड** (५।२।४५) इति च सप्तम्याः।

४८. आ च भूलोकादिति साधु स्याद् व्यासे। **आङ्मर्यादाभिविध्योरिति** सूत्रेणाव्ययीभावे तु आभूलोकमिति। **वाचि शिथिला नैयायिका ज्यौतिषिकाश्च**।

४९. यावद्योगे द्वितीया **ततोऽन्यत्रापि दृश्यत** इति वचनात्। द्वितीयैव तु प्रयोगेषु यत्र तत्र दृश्यते।

५०. यस्य पूर्व इत्यादिरनवधानकृता कस्यचिदुक्तिः। अपपाठ एषः। भाष्ये तु सत्यन्यस्मिन् यस्मात्पूर्वं नास्तीत्यादिः पाठः स्थितः। तत्र दिक्छब्दयोगे पञ्चमीति नात्र किमपि वक्तव्यमस्ति।

५१. अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् (रा० ४।३२।१७)।
५२. (क) अनन्या हि मया सीता भास्करस्य प्रभा यथा (रा.६।११८।१८)।
(ख) भूतेष्वभयदानेन नान्या चोपकृति र्मम (कथा० २७।२४)।

## केवलविभक्त्यधिकारस्तृतीयः।

१. अद्य स्वतन्त्रं भारतं वर्षं वर्षादधिक. कालो गतः।
२. तस्योपस्थिते सत्येव समृद्धानि[1] नः कार्याणि।
३. आपस्तु परमाः पूताः पेयाः स्नानीयाश्च भवन्ति।
४. वर्षद्वयाद्रुज्यतेऽयं वराकः, न जाने कदा कल्यो[2] भविष्यति।
५. अद्यत्वे त्रिषु जातिसहस्रेषु विभक्ता हिन्दव ऐक्यमनङ्गवानाः परैः सहेलं शक्या आस्कन्तुम्[3]।
६. य आत्मानं व्यकत्थन्त तेऽध्वंसन्त।

---

५१. **अन्तरान्तरेण युक्त** इति प्रसादनमन्तरेणेति वक्तव्यं प्रसादन-शब्दाद् द्वितीयैवानुज्ञायते शास्त्रेण। पञ्चमीप्रयोगस्त्वनक्षरेण लिपिकरेण कृतः स्यात्।
५२. (क) अत्र **अन्याराद्** (२।३।२९) इत्यादिनोपपदविभक्तिः पञ्चमी कुतो न। उच्यते। इह अनन्येत्यभिन्नार्थे प्रयोगः। सहार्थे तृतीया साध्वी। तेन सहाभेदमापद्यत इत्यादिषु तृतीयादर्शनात्।
(ख) अत्रापि पूर्वोक्त एव समाधिः।

### इत्युपपदविभक्तिविवेचनम्।

१. स्वतन्त्रस्य (सतः) भारतस्य वर्षस्येति शेषे षष्ठी साध्वी। कर्मणोऽभावात्कर्मणि द्वितीयाया अत्यन्तमप्राप्तेः।
२. **यस्य च भावेनेति** तस्मिन्नुपस्थिते इत्येवं न्यसनीयम्। उपस्थानमुपस्थितिरिति भावक्तान्ते तु तस्येति शैषिकी षष्ठी साम्प्रतम्।
३. परमम् इति क्रियाविशेषणमिष्यते।
४. (अद्य) वर्षद्वयमिति वक्तव्यम्। अत्यन्तसंयोगे द्वितीयायाः प्रसङ्गो न पञ्चम्याः।
५. त्रिषु जातिसहस्रोष्विति साधु। वैषयिकेऽधिकरणे सप्तमी।
६. कत्थ श्लाघायामित्यकर्मको दृष्टः। तेन य आत्मना व्यकत्थन्तेति हेतुतृतीया प्रयोक्तव्या। अर्थान्तरे तु सकर्मकोऽपि दृश्यते। तथा च भारते प्रयोगः—**सदा भवान्फाल्गुनस्य गुणैरस्मान्विकत्थते** (वि० ३९।४०) इति। गर्हते इत्यर्थः।

---

१ फलितानि। २. वार्तः; स्वस्थः। ३. आक्रमितुम्।

७. प्राड्विवाकमतानुसारं व्यवहारान्व्यवस्थापयेन्नृपो न तु स्वमतेन केवलेन ।

८. एतावत्पर्यन्तं समासतो[1] वर्णिता वर्णधर्माः, आश्रमधर्मान्सम्प्रति वर्णयिष्यामः ।

९. गुणकर्मस्वभावेषु यः सर्वेभ्यः सत्तमः स नाम नृतमः ।

१०. विदेशस्थो देवदत्तश्चिरस्य दृष्टाया अम्बायाः संजानाति[2] ।

११. नक्तं दिनं च परप्रतारणादन्यत् तेषां कृत्यं नास्ति ।

१२. अयं साधुरयं चानेन साधुतर इति कथं जानीमः ।

१३. किमिति वेदनिन्दाया न लज्जसे, गुरुजनापवादेन वा नाऽपत्रपसे ? अतीन्द्रियेष्वप्यर्थेषु स्वमनीषिकामेव प्रमाणी करोषीति हा हतोऽसि !

१४. जन्मना जायते शूद्रः संस्कारैर्द्विज उच्यते ।

१५. त्वं ह्यो नोपातिष्ठथाः । तत्कस्य हेतोः ।

---

७. प्राड्विवाकमतानुसारेणेति वक्तव्यम् । प्रकृत्यादित्वात्तृतीया च बोध्या । द्वितीया तु सर्वथाऽनुपपन्नेति हेया । मतस्यानुसारो मतानुसार इति षष्ठीसमासः ।

८. एतावत्पर्यन्तमिति बहुव्रीहिः क्रियाविशेषणत्वेन प्रयोगः । तेन द्वितीया साध्वी ।

९. गुणकर्मस्वभावैरिति हेतौ तृतीयया वक्तव्यम् । निर्धारणे षष्ठीसप्तम्यौ भवत इति सर्वेषां सर्वेष्विति वा प्रयोक्तव्यम् ।

१०. अम्बाया इत्यधीगर्थदयेशां कर्मणीति कर्मणि शेषत्वेन विवक्षिते षष्ठी ।

११. नक्तमित्यधिकरणवृत्ति दिवेत्यपि । तेनाहर्निशमिति वा नक्तंदिवमिति वा प्रयोज्यम् ।

१२. पञ्चमी विभक्ते इत्यस्मात्साधुतर इत्येव साधु ।

१३. वेदनिन्दयेति हेतौ तृतीयेष्यते ।

१४. जन्मनेति प्रकृत्यादित्वात्तृतीया ।

१५. सर्वनाम्नस्तृतीया चेति सूत्रेण किमः सर्वनाम्नः षष्ठी, तत्र सामानाधिकरण्याद्धेतुशब्दादपि षष्ठी । चतुर्थी तु व्यवहारानभिज्ञस्य शोभते ।

---

१. संक्षेपेण । २. आध्यायति, उत्कण्ठापूर्वकं स्मरति ।

१९३. मिथोऽबोधाद् विवदति मैत्रीं भजति बोधतः (यो० वा० ६ (२) ४५।६१)।
१९४. भृत्याः प्रियाः किल तथा सन्तिष्ठति स भिक्षुकः (यो० वा० ६ (१) ६६।११)।
१९५. चिदेवेयं शिलाकारमवतिष्ठति बिभ्रती (यो० वा० ६ (२) ७०।२१)।
१९६. राम शुश्रूष भद्रं ते सुमित्रानन्दवर्धन (रा० ६।११९।२८)।
१९७. तमाचक्ष्व प्रदद्यान्मे यो हि युद्धं युयुत्सतः (रा० ४।११।१९)।
१९८. अण्डभक्षणकर्मैतत् तव वाचमतीयते (भा० सभा० ४१।४०)।
१९९. देवशुनीन्द्रेण प्रहिता पणिभिरसुरैः समूद इत्याख्यानम् (नि० ११।५१।१)।
२००. अर्बुदेन गवां ब्रह्मन् मम राज्येन वा पुनः।
नन्दिनीं सम्प्रयच्छस्व.........(भा० आदि)॥
२०१. असिभ्यां सम्प्रजह्राते परस्परमरिन्दमौ (भा० द्रोण० १४२३७)।

---

१९३. **भासनोपसंभाषे**त्यादिसूत्रेण विमतावर्थे आत्मनेपदेन भवितव्यम्।
१९४. सन्तिष्ठते इत्येव साधु। हेतुरसकृदुक्तपूर्वः।
१९५. अवतिष्ठते इत्येव साधु। अवपूर्वस्तिष्ठतिरकर्मकः।
१९६. शुश्रूषस्वेत्यात्यात्मनेपदं प्रयोज्यमिति पाणिनीयाः। **ज्ञाश्रुस्मृदृशां सन** इति हि शासनम्।
१९७. युयुत्समानस्येति तु पाणिनीयाः।
१९८. अतीयते इति ईङ् गतौ दिवादेर्लटि तशब्दे रूपम् इति नात्र किञ्चिदवद्यम्।
१९९ सम्पूर्वस्य वदेरात्मने पदं प्रयुयुजिरे प्रायेण पूर्वाचार्या इति नात्र किमपि दूषणं पश्यामः। अत्र विषये पूर्वत्र प्रपञ्चेनोक्तम् इति नेह वितन्यते।
२००. सम्प्रपूर्वाद् दाणस्तृतीयायुक्तादात्मनेपदं भवति सा चेत्तृतीया चतुर्थ्यर्थे भवति। इह च तादृशी तृतीया नास्तीत्यात्मनेपदस्यानवकाशः। (गवाम्) अर्बुदेन राज्येन चेत्यत्र करणे तृतीया। अर्बुदेन राज्येन च विनिमितेन द्वारीभूतेनेत्यर्थः।
२०१. **न गतिहिंसार्थेभ्य** इत्यनेन निषिद्धमात्मनेपदं हरतेरप्रतिषेध इति वचनात् प्रतिप्रसूतं परस्परोपपदाच्चेति वार्तिकेन पुन र्निषिध्यते। इति परस्परं सम्प्रजह्राते इत्यत्रात्मनेपदं पाणिनीया न सहन्ते।

२०२. भुजौ दीर्घौ विकुर्वाणम् (रा० ३।७४।१८)।
२०३. इत्युक्त्वा मैथिलीं भर्तुरङ्के निविशतीं भयात् (रघु० १२।३८)।
२०४. मातुं न क्षमते ततः प्रवहते (करुणा० ४०)।
२०५. मनो ज्ञाने निर्विशते (करुणा० ४५)।
२०६. मनो मुररिपो दिव्यं रसं प्राप्नुते (करुणा० ५५)।
२०७. प्रायौक्षीत् सोपि नैजं चित्त विलासे (मो० १।३१)
२०८. विनश्यतां तेनं जनुर्मदीयम् (मोह० ७।३२)।
२०९. गर्हन्ति देहं गृहे (मोह० ८।२३)।
२१०. मतिमतां मतिर्भ्रश्यते (मोह० ८।१३)।
२११. समाप्तिमधिगंस्यते किमथ कामनानां शती (मोह० ७।१२)।
२१२. एतेषामपि पञ्चानां पृथक् संशृणु लक्षणम् (स्कन्द० मा० कौ० (२) ५५।२१)।

---

२०२. विकुर्वाणम् इत्यत्र कृञो ञित्त्वात्कर्तृगामिनि फलेऽऽत्मनेपदम्। विकुर्वाणं वितन्वानम् इत्यर्थः।
२०३. **नेर्विश** इत्यात्मनेपदेन भवितव्यम्। **स्खलनधर्माणो मनुष्या इति महाकविरपि स्खलति।**
२०४. प्रवहत इति दुष्टम्। **प्राद्वह** इति नित्यं परस्मैपदेन भवितव्यम्।
२०५. निर्विशत इत्यसाधु। **विश** प्रवेशने परस्मैपदी। निरत्रोपसर्गो न निः। तेन **नेर्विश** इत्यनेनात्मनेपदं न।
२०६. प्राप्नुते इति किमपि तुदति शाब्दिकमशाब्दिकं च समम्। प्राप्नोतीत्येव प्रयोज्यं वाग्भ्रंशश्च परिहार्यः।
२०७. प्रायौक्षीत् इत्यत्र **प्रोपोभ्यां युजेरयज्ञपात्रेष्विति** शासनं लङ्घितम् शासनमलङ्घमानेन प्रायुक्तेति लुङि प्रयोक्तव्यम्।
२०८. विनश्यतामिति तु गर्हितं स्खलितम्। आत्मनेपदं केन। **अन्तर्गतं शास्त्रमिति मन्ये।**
२०९. गर्ह गल्ह कुत्सायामिति भ्वादिष्वात्मनेपदी। तेन गर्हन्त इत्येव **साधु**
२१०. भ्रश्यत इत्यसाधु। दिवादिष्वयं धातुः परस्मैपदी।
२११. अधिगंस्यते इति कर्तरि गमेरात्मनेपदं केन। अधिगमिष्यतीत्येव साधु।
२१२. अतिश्रुविदिभ्यश्चेत्यकर्मकादेव सम्पूर्वस्य शृणोतेरात्मनेपदं विहितम्। प्रकृते तु संशृणोतिः सकर्मकः, तेन यथास्थितं परस्मैपदं साधु।

२१३. हाहाकारं सुराः सर्वे विचक्रुर्गमने स्थिताः (ब्रह्मवै० ४।११।३३)।
२१४. स संयुनक्ति भूतानि स एव वियुनक्ति च (भा०पु० ११३।४०)।
२१५. विनानुमानेन पराभिसन्धिमसंविदानस्य तु नास्तिकस्य (स्याद्वाद० ३०)।

---

२१३. वेः शब्दकर्मणः (१।३।३४) इत्यत्रात्मनेपदेन भवितव्यम्।
२१४. वियुनक्तीत्यपशब्दः। प्रोपाभ्यां युजेरयज्ञपात्रेषु (२।३।३४) इत्यात्मनेपदेन भवितव्यम्। वियुङ्क्त इति प्रयोक्तव्यम्।
२१५. संविदेरकर्मकादेवात्मनेपदं विहितम्। इह तु स सकर्मकः, तेन संविदेः शत्रा भवितव्यम्। असंविदत इति च वक्तव्यम्।

## इत्युपग्रहविवेचनम्

## रूपाधिकारस्तृतीयः

१. यत्त्वं प्रास्तौषीस्तन्नाहमनुमोदे[1]।
२. श्वोऽहं भ्रात्रे पत्त्रं लिखितास्मि।
३. वामनजयादित्यौ काशिकां वृत्तिं सम्भूयारीरचेतामित्यनुश्रूयते।
४. सम्प्रति प्रासादेषु निवस्यते पङ्कजसुरभिषु दीर्घिकासु च स्नायते।
५. वसुरातस्य सखाऽस्य यज्ञे न संनिदधे ततः सोऽनुमिमाय कुपितोऽसौ मह्यमिति।

---

१. **स्तुसुधूञ्भ्यः परस्मैपदेष्विति** सिचि परस्मैपदे परतो नित्यमिडागमः। तस्मिन् सति इट ईटीति सिचो लोपे प्रास्तावीद् इत्येव साधु।
२. लिख विलेखने इति कुटादिरिति भ्रमः। तेन लुटि डाप्रत्यये तासि गुणे लेखितास्मीत्येव साधु।
३. रच प्रतियत्ने चुरादिष्वदन्तः। तेनाग्लोपित्वात्सन्वद्भावो नेत्यररचेतामित्येव लुङि चङि रूपम्।
४. वसेर्यजादित्वाद्**वचिस्वपियजादीनामिति** यकि सम्प्रसारणे न्युष्यत इति रूपं साधु।
५. अनुमिमायेति च्युतसंस्कृतिकम्। माङ् माने जुहोत्यादिः। तस्य लिटि अनुममे इति रूपम्। **मिनोतेस्तु मीनातिमिनोतिदीङां ल्यपि चे**त्यात्वेऽनुममावित्येव।

---

[1] अभिनन्दामि, समर्थये इति यावत्।

६. अभ्युदीयादयं देशः स्वे महिम्नि च जागृयादिति नित्यमाशास्महे।
७. केचिद्रक्ता अनुसरन्ति श्रियम्, श्रिया च केचिद्विरक्ता अनुसर्यन्ते ।
८. राजान्नं तेजो जरयतीति नेदं प्रत्यगृह्णन् द्विजाः ।
९. किं मुधा विभ्रमयसि मुग्धान् स्वानुगान् ।
१०. नहीदानीं वेत्थ । कालेन कियतापि वेत्स्यसि सारमस्य ।
११. यज्ञदत्तः षोडशवर्षां गुण्यामात्मसदृशीं[1] कन्यामुपायत[2] ।
१२. अतिश्रमः खलु जारयति तेज इन्द्रियाणाम् ।
१३. ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन्सर्वाणि भूतानि यन्त्रारूढानि मायया (गीता १८।६१) ।
१४ स तीर्थाटनव्यपदेशेन वृथा भुवमानट ।
१५. गां बध्नीहि रज्ज्वा शिबके, नो चेद्व्रजान्निष्क्रामेत् स्वैरं च विचरेत् ।
१६. को नाम सृक्ष्यति विचित्रमिदं जगदन्यत्र विधेः ।

---

६. **एतेर्लिङीत्यार्धधातुके लिङि उपसर्गात्परस्य इणोऽणो ह्रस्वेऽभ्युदियात् इत्येव साधु । **जाग्रोऽविचिण्णल्ङित्सु** (७।२।८५) इत्यार्धधातुके लिङि यासुटि गुणे जागर्यात् इत्येव साधु ।
७. **रिङ् शयग्लिङ्क्षु** इति सरतेर्ऋकारस्य रिङादेशेऽनुस्रियन्त इत्येव साधु ।
८. **जनीजृष् क्नसुरञ्जोऽमन्ताश्चे**ति मित्त्वे ह्रस्वे जरयतीति साधु ।
९. अमन्तत्वान्मित्त्वे ह्रस्वे विभ्रमयसीति साधु ।
१०. विद् ज्ञाने सेट् । तेन वेदिष्यसीत्येव साधु ।
११. **विभाषोपयमने** इति विभाषा सिचः कित्त्वादनुनासिकलोपे उपायतेति साधु । पक्षे उपायंस्तेति भवति ।
१२. जनीजृष्—इत्यत्र दिवादेर्ग्रहणात् क्र्यादेर्निरनुबन्धकस्य जॄ वयोहानावित्यस्य ग्रहणं नेति मित्त्वाभावाद्ध्रस्वाभावे जारयतीति साधु ।
१३. अमन्तत्वान्मित्त्वे ह्रस्वत्वे भ्रमयन्नित्येवेति पाणिनीयाः ।
१४. **तस्मान्नुड् द्विहल** इत्यस्याप्राप्तेर् आटेत्येव साधु ।
१५. **हलः श्नः शानज्झाविति** शानजादेशे हेर्लुकि च बधानेत्येव साधु ।
१६. **सृजि दृशोर्झल्यमकिती**ति अमागमे स्रक्ष्यतीत्येव साधु ।

---

१. गुणवतीम् । २. ऊढवान् पर्यणयत् ।

१७. प्रज्वालय प्रदीपम्, उपस्थितः प्रदोषः ।
१८. प्रतीहि[1] वा न वा । अहमस्य क्षोदिष्यामि जानू, भञ्जिष्यामि चोरू ।
१९. विप्राः शापेन शत्रूनपरेधू[2] राजन्याश्च चापेन ।
२०. यो हि मन्दः परुषाक्षरैस्सन्तक्ष्णोति सुहृदः स विस्मरति न वाक्-क्षतं संरोहतीति ।
२१. वनमक्षिकाः खलु गर्हितं दंशन्ति, मक्षिकान्तराणि तु न तथा तुदन्ति ।
२२. केचित्पुरातत्त्वरत्नानि महता यत्नेनान्वसन्दधुरनुसन्दधति चापरे साम्प्रतम् ।
२३. प्रचुरा अत्राशुद्धयो मातृकायाम्[3] । तथाऽपि यथामति यत्नेना-परिष्करवम् । तस्य सदसत्त्वे सुधियः प्रमाणम् ।
२४. यो हि शादयति[4] गा इति वक्तव्ये शातयति गा इति ब्रूयाद् बाढं[5] दुष्येत्[6] स मन्दधीः ।

---

१७. **ज्वलह्वलेत्यादिना** घटादित्वान्नित्या मित्संज्ञाऽनुपसर्गस्य ज्वले-र्विकल्पिता, न तु सोपसर्गस्येति प्रज्वलयेत्येव साधु ।
१८. क्षुदिर् सम्पेषणे भञ्जो आमर्दने इति रौधादिकौ धातू अनिटौ । तेन लृटि क्षोत्स्यामि, भङ्क्ष्यामीति च साधुनी रूपे ।
१९. **राधो हिंसायाम्** (६।४।१२३) इत्यनेन एत्वाभ्यासलोपयोः 'अप-रेधुः' इति साधु । अपोपसर्गश्च हिंसाद्योतकः प्रयुज्यते ।
२०. **तनूकरणे तक्ष** इति तनूकरणेऽर्थे शपः श्नुर्विहितः । प्रकृते तु भर्त्सनमर्थ इति तस्याप्रसङ्गः । तेन सन्तक्षतीत्येव साधु ।
२१. **दंशसञ्जस्वञ्जां शपीति** दंशेरनुनासिकलोपे दशन्तीत्येव युक्तम् ।
२२. **लावस्थायामेवाडाटाविति**त्यभ्युपगमादुपसर्गयोगात् पूर्वमेवाटि 'अनु-समदधुः' इति लङि रूपम् ।
२३. अत्रापि पूर्वमटि तत उपसर्गयोगे सुट् कात्पूर्व इति नियमात् ककारात्पूर्वं सुटि **सिवादीनां वाड्व्यवायेऽपीति** वैकल्पिके मूर्धन्या-देशे पर्यष्करवम्, पर्यस्करवमिति लङ्युत्तमे रूपे ।
२४. **शदेरगतौ त** इति गतिव्यतिरिक्ते निसूदने पातने वार्थे तोऽन्तादेशो विधीयते । असमञ्जसं ब्रुवन् दोषेण लिप्यत इति किमाश्चर्यम् ।

---

१. विश्वसिहि । २. हिंसितवन्तः । राधो हिंसायामित्येत्वाभ्यासलोपौ ।
३. ग्रन्थादर्शे । ४. कालयति प्रचोदयति इत्यर्थं विवक्षति । ५. ध्रुवम् ।
६. दोषवान् भवेत् ।

२५. यदि दुर्जनसंसर्गान्नोद्वेजिष्यसे नियतमात्मानं पातयिष्यसे ।
२६. वत्स ! त्रातारं मामुपस्थितोऽसि । अवेहि मां भुवः परिवृढम्[1] । मा स्म शुचः ।
२७. एतावतीभिरद्भिर्न शोधिष्यन्ति नो वस्त्राणि ।
२८. केकयान्प्रति दूतानप्रैषयन्राजमन्त्रिणो भरत आनीयतामिति ।
२९. यदि त्वं तस्मिन्प्रेष्यसे[2] सोऽपि त्वयि प्रीतिं करिष्यति ।
३०. यदि खलैः संजिगमिष्यसे तदा नरकाय रात्स्यसि ।
३१. न हि क्रोधः क्रोधेन शाम्यति यथा विषेण विषमिति सत्यमेवावोचि तापसेन ।
३२. परिवर्ती लोकः । ये पूर्वत्र समृद्धिमच्छंस्ते सम्प्रति व्यृद्धाः ।
३३. हनुमताऽधिष्ठिता वानरा अनेकानि काननानि पर्यटन् न च सीतामासीदन् ।

---

२५. विज इट इतीडादिप्रत्ययस्य ङिद्वद्भावाद् गुणाभावे उद्विजिष्यसे इत्येव साधु ।
२६. **सेह्यपिच्चे**ति हेरपित्त्वे गुणाभावे आद् गुण इति गुणैकादेशेऽवेहि इति साधु ।
२७. शुध शौचे दिवादिरनिट् । तेन शोत्स्यन्तीत्येव साधु ।
२८. प्रैषयन्निति तु युक्तम् । उपसर्गयोगात्पूर्वमाडागमे **आटश्चेति** वृद्धौ पुनरुपसर्गयोगे वृद्धिरेचीति वृद्धौ प्रपूर्वाद् दिवादेरिषेर्ण्यन्ताल्लङि रूपमिष्टम् ।
२९. प्रीङ् प्रीतौ दिवादिरनिट् । तस्मात् प्रेष्यस इति लृटि साधु ।
३०. **गम्यृच्छिभ्यामि**ति सम्पूर्वाद् गमेरात्मनेपदम् । **गमेरिट्परस्मैपदे-ष्वि**ति परस्मैपदे सकारादेरार्धधातुकस्य इड् विहितः । तेनात्मनेपदे सन इण्नेति संजिगंसिष्यसे इत्येव साधु । सन्नन्तस्य तु स्ये भवत्येवेट् । धातोरनेकाच्त्वात् ।
३१. **वच उम्** इत्यङि भवति न तु चिणि । तेनावाचीत्येव साधु ।
३२. ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु तुदादिषु पठ्यते । तस्येदं लङि झौ रूपम् । आटश्चेति वृद्धिः । आर्च्छन्निति साधु ।
३३. आडजादीनामित्याटि वृद्ध्येकादेशे यणि पर्याटन्नित्येव साधु ।

---

१. ईश्वरम् । स्वामिनम् ।
२. प्रीङ् प्रीतौ इत्यस्माल्लृटि रूपम् । प्रीङ् अकर्मकः ।

३४. केचन ग्रामवृद्धाः कथं कथमप्या शतात् संख्यान्ति ।
३५. शाखिनोऽस्य शाखां चालयति शाखामृगः ।
३६. कुणि[1] वा खञ्जं वा खलतिं[2] वा दृष्ट्वा मोपहासीः ।
३७. यदि साधुषु साधु वर्त्स्यसि[3] तर्हि वर्त्स्यसि[4] ।
३८. शर्करिल एष पन्थाः । स्खालयति नः पदे पदे ।
३९. न कितववचसि विश्वसेत् । कितव[5] इति पर्यायः शठस्य ।
४०. किमेवं धृष्णोषि ? धर्षयसि गुरूनिति किं शोभते ते ?
४१. प्रवासादागतश्चैत्रः परिगृहीतीं कण्ठे बलवत्समाश्लिषत् ।
४२. न हि ज्योतिरन्तरेणातिशीयते विवस्वान् ।
४३. तेन सम्यगभ्यूह्यतेऽध्येतुं ग्लायति ममानुज इति ।
४४. अन्वतापि पापेन कर्मणा पापकृदित्यनुशासनायाभूल्लोकस्य ।

---

३४. सम्पूर्वस्य ख्यातेः तिङि प्रयोगो नेति न्यासकारः । तेन संचक्षत इत्येव प्रयोक्तव्यम् ।
३५. **'कम्पने चलिः'** इति गणसूत्रेण मित्त्वे ह्रस्वत्वे चलयतीत्येव साधु ।
३६. **ह्म्यन्तक्षणश्वसेत्या**दिना वृद्धिनिषेधे हसेर्लुङि माङ्युपपदे 'मोपहसीः' इत्येव रूपम् ।
३७. प्रथमं वर्त्स्यसीति रूपं वृतु वर्तन इत्यस्य लृटि । द्वितीयं वृधु वृद्धावित्यस्य लृटि । **'वृद्भ्यः स्यसनोः'** इति वा परस्मैपदम् । **न वृद्भ्यश्चतुर्भ्यः** इति तङानयोरभाव इण्निषेधः । तेनोभयं साधु ।
३८. स्खल सञ्चलने इति घटादिः । तेन स्खलयतीत्येव साधु ।
३९. श्वस प्राणनेऽदादिः । तेन शपो लुकि विश्वस्यात् इत्येव साधु ।
४०. धृष्णोषीति ञिधृषा प्रागल्भ्ये इत्यस्य स्वादेर्लटि रूपम् । धर्षयसीति च धृष प्रसहने इत्यस्य चुरादेः ।
४१. **श्लिष आलिङ्गने** इति क्से समश्लिक्षत् इत्येव साधु ।
४२. **अयङ् यि क्ङिति** (७।४।२२) इति शीङोऽयङि अन्तादेशेऽतिशय्यते इति कर्मणि यकि रूपं साधु ।
४३. **'उपसर्गाद्ध्रस्व ऊहतेः'** इति यकि कित्प्रत्यये ह्रस्वेऽभ्युह्यते इत्येव साधु ।
४४. **तपोऽनुतापे चे**ति चिण्निषेधः । तेन सिचि अन्वतप्तेत्येव साधु ।

---

१. कुकरम् । २. खल्वाटम् । ३. वर्तिष्यसे । ४. वर्धिष्यसे । ५. दुरोदरः, द्यूतकरः ।

४५. समारन्त ममाभीष्टाः संकल्पास्त्वय्युपागते (भट्टेः)।
४६. विद्याशालं गच्छन्नहं गृहात्त्वामाह्वयिष्यामि।
४७. सुव्रतेयं[1] गौः स्वयमेव दुग्घे।
४८. सर्वस्वर्णमयी लङ्का न मे लक्ष्मण रोचते। पितृक्रमागताऽयोध्या निर्धनाऽपि सुखायते (रा०)॥
४९. एवं प्रोत्साहितास्ते कमपि निगूढं स्वं महिमानं प्राचीकटन्।
५०. अहो बत नक्तंदिवं श्राम्यन्नपि देवदत्तः परीष्टिं नापीपरत्[2]।
५१. एतावता कतकचूर्णेनात्यर्थं मलीमसान्यपि परिधेयानि नेनेजानि।
५२. आवेशनेषु कर्मकरा वेतनवृद्धिं तदीश्वरानप्रार्थयन्त।
५३. ये राष्ट्रियमिदं विधानं व्यतिक्रमिष्यन्ति ते बन्धिष्यन्ते।

---

४५. **सर्तिशास्त्यर्तिभ्यश्चे**त्यङ् आत्मनेपदेऽपि भवति, पृथग्योगकरणादिति वृत्तिः। अयं चाङ् इयर्तेरेव न त्वर्तेः। **समो गम्यृच्छिभ्यामि**त्यात्मनेपदविधौ तूभयोर्ग्रहणमिति समारन्तेति साधु।
४६. **आदेच उपदेशेऽशिती**त्यात्वे आह्वास्यामीत्येव साधु। ञित्त्वेऽपि फलस्याकर्त्रभिप्रायत्वविवक्षायां परस्मैपदम्।
४७. **न दुहस्नुनमां यक्चिणावि**ति यगभावे दुग्धे इति कर्मकर्तरि लटि साधु।
४८. सुखयतीत्येव साधु। भृशादिषु सुखदुःखादयो द्रष्टव्या इति चेत्, सिध्यति रूपमर्थस्तु नोपपत्तिमश्नुते। क्यङि सति असुखिनी सुखिनी भवतीत्येवार्थः। स च प्रकृते न संगच्छते।
४९. प्रकटशब्दात् तत्करोति तदाचष्टे इति णिचि लुङि चङि प्राचकटन् इत्येव रूपम्। इष्ठवद्भावे 'टेः' इति टिलोपेन अग्लोपित्वात्सन्वद्भावो दीर्घश्च न भवतः।
५०. पार तीर कर्मसमाप्तावदन्तश्चुरादिः। तेनाग्लोपित्वादुपधाह्रस्वो न, सन्वद्भावश्च नेत्यपपारद् इत्येव साधु। पॄ पूरणे चुरादेस्तु लुङि अपीपरद् इति रूपम्।
५१. **नाभ्यस्तस्याचि पिति सार्वधातुक** इत्युपधागुणनिषेधे नेनिजानीत्येव।
५२. प्रार्थयन्तेत्येव साधु। उक्तो हेतुः पूर्वत्र।
५३. बन्ध बन्धने इत्यनिट्। तेन भन्त्स्यन्त इत्येव कर्मणि लृटि साधु।

---

१. सुखसन्दोह्या। २. पार तीर कर्मसमासौ इत्यस्माल्लुङि प्रामादिकं रूपम्।

५४. क्षिप्रमारभसे कर्म न दीर्घयसि राघव (रा० २।१००।१९)।
५५. यो मामस्थाने स्तुवीति भृशं तस्मा अभ्यसूयामि।
.५६ स्फुरति तेऽधरः। मन्ये किमपि पिप्रच्छिषसि।
५७. चर्मरत्नं च धनमित्रमेव प्रतिभजिष्यति (दशकु० पृष्ठे ११३)।
५८. समये तिष्ठ सुग्रीव ! मा वालिपथमन्वगाः (रा० ४।३९।८१)।
५९. एवं कदर्थिताः प्रजा अपरक्तारः[1] प्रकोपं चानल्पं जनयितार इति कः सन्दिग्धे।
६०. राजान्नं तेज आदत्त इति तत् प्रत्याचचक्षुः पूर्व तपःप्रधाना द्विजातयः।
६१. चिरन्तनो मे सखा यज्ञदत्तोऽद्य मया पथि[2] समार्तेति नन्दामि।
६२. केचिदविप्रकृता अप्यनाक्रान्ता अपि व्याला गर्हितं दंशन्ति।

---

५४. दीर्घशब्दात्तत्करोति **तदाचष्टे** इति णिचि **प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति** इष्ठवद्भावेन दीर्घस्य द्राघादेशे द्राघयसीत्येव साध्विति पाणिनीयाः। इष्ठनि **प्रियस्थिरे**त्यादिना सूत्रेण दीर्घस्य द्राघभावो विधीयते।
५५. तिपि ईटि गुणे स्तवीतीत्येव साधु।
५६. **किरश्च पञ्चभ्य** इतीटि **रुदविदमुषे**त्यादिना सनः कित्वे तदाश्रये सम्प्रसारणे च पिपृच्छिषसीत्येव साधु।
५७. भज सेवायामित्यनिट्। तेन प्रतिभक्ष्यतीत्येव साधु।
५८. न माङ्योग इत्यडाटो निषेधाद् अनुगा इत्येव साधु।
५९. रञ्जेर्नलोपस्याप्राप्तेः कर्मकर्तरि लुटि अपरङ्क्तार इत्येव साधु।
६०. चक्षिङ आत्मनेपदित्वात् प्रत्याचचक्षिरे इति वक्तव्यम्। पक्षे ख्याञादेशे तु प्रत्याचख्युः प्रत्याचख्यिर इति च रूपे।
६१. सम्पूर्वादर्तेर्लुङ्यात्मनेपदे तशब्दे सिज्लोपस्यासिद्धत्वाद् **आटश्चेति** वृद्धौ कृतायां **ह्रस्वादङ्गादिति** सिज्लोपाप्रवृत्त्या समार्ष्टेति रूपमिष्यत इति **तत्त्वबोधिनीकारः**। लावास्थायामेवाडिति भाष्योक्तसिद्धान्तादाटि कृते सर्वतोन्तरङ्गत्वाद्वृद्धौ ह्रस्वाभावान्न सिज्लोप इति समार्ष्टेत्येव रूपमिति च **दाधिमथाः**। तेन दीक्षितोक्तं समार्तेति रूपं चिन्त्यम्।
६२. दशन्तीत्येव साधु। उक्तो हेतुः पूर्वत्र।

---

१. अपपूर्वाद् रञ्जेः कर्मकर्तरि लुटि प्रामादिकं रूपम्। अपरक्ता भविष्यन्तीत्यर्थः। २. सम्पूर्वादर्तेर्लुङि रूपम्।

६३. ये प्राणात्ययेऽप्यनृतं नोदीरयन्ति ते धीरा इति चक्ष्यते विचक्षणैः ।
६४. नहि प्रकरणमविज्ञाय श्लोकार्थः साध्ववदायते[1] ।
६५. यो दीनमार्तं जनं प्राणव्ययेनापि गोपयति स गोपाः ।
६६. प्रवृद्धः काञ्चनो वृक्षः फलकाले निकृन्त्यते ।
६७. आरिरात्सामि परार्थं शक्तश्चेत्स्यां न तु प्रतिरित्सामि ।
६८. निश्चिनुहि सौम्य ! अनुच्छित्तिधर्माऽयमात्मेति । माऽत्र विचिकित्सीः ।
६९. यः परेभ्यश्च धियं रायेत् स धीर इति कथ्यते ।
७०. ऐश्वर्यवृद्धि मा विमुञ्चीः ।
७१. निवृत्तश्च राज्याभिषेकः, अहं चामोचि सहेतरैः संयतैः ।

---

६३. चक्षिङः ख्याञ् इति ख्याञादेशेन ख्यायत इत्येव कर्मणि लटि रूपम् ।
६४. दैप् शोधने इति भूवादिः सकर्मकः परस्मैपदी । तेन अवदायत इति कर्मकर्तरि समाधेयम् ।
६५. **'गुपूधूपविच्छिपणिपनिभ्य आयः'** इत्याये प्रत्यये गोपायतीत्येव साधु । स्वार्थे गुपेर्णिज् इति कृत्वा गोपयतीत्यपि सुवचम् ।
६६. **अनिदितां हल** इत्यादिनोपधानकारस्य लोपे निकृत्यत इत्येव साधु ।
६७. **राधो हिंसायां सनीस् वाच्य** इति राध आकारस्य इस् । **अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः, स्कोरिति** सलोपः । प्रतिशब्दो हिंसाद्योतकः । तेन प्रतिरित्सामीति साधु । संसिद्धावर्थे चाङ्-पूर्वस्य राधोऽच इस् नेत्या**रिरात्सामी**त्यपि न्याय्यमेव ।
६८. **उतश्च प्रत्ययादसंयोगपूर्वात्** इति हेर्लुकि 'निश्चिनु' इत्येव रूपम् ।
६९. रा दान आदादिकः, तस्माच्छपो लुकि सार्वधातुके लिङि रायात् इत्येव रूपम् ।
७०. लृदित्वाद् अङि विमुच इत्येव साधु ।
७१. मुचेः कर्मणि लुङि इटि प्रत्यये सिचि अमुक्षि इत्येव रूपम् । तशब्दे परे चिण् इति चिणोऽप्रसङ्गः ।

---

१. शुध्यति, स्पष्टो भवति इति वक्तुरभिप्रेतम् ।

७२. एवमाचरंस्तु बालोऽपि जिह्रेदात्मना ध्रुवम् ।
७३. यदि साधुषु साधु वर्त्स्यसे तदा वर्धिष्यसे ।
७४. सूर्यप्रभवो वंशः सूर्यवद् व्यरुचदिति न नो विस्मयाय ।
७५. आकाशमन्तरेण प्रकृतिः परमाणवो वा कुत्र स्थीयेरन् ।
७६. पुरा भारते वर्षे गवादयो नावध्यन्तेत्यत्र कापि पयसः समृद्धिरभूत् ।
७७. अपि नाम प्रस्तरं द्रवयेन्नतु प्रत्यभिनिविष्टजनचित्तमाराधयेत् ।
७८. यन्नामासम्यक् चर्वितं निगिल्यते न तज्जीर्यति ।
७९. तिष्ठ, इदानीं ज्ञास्यसि जाल्म ! क्व नु गमिष्यते त्वया ।
८०. दिने दिने जायमाना अमी वृत्तान्ता नोन्मीलन्ति विलोचने एषां मूढानाम् ।
८१. क्रोधवशं गतः स सुहृदमाक्रुक्षन्महन्नाम चान्वताप्सीत् ।

---

७२. ह्री लज्जायामित्यस्मात्सार्वधातुके लिङि यासुटि जिह्रीयात् इत्येव साधु ।
८३. वृतु वर्तने इति सेट् । तेन लृटि वर्तिष्यस इत्येव न्याय्यम् ।
७४. 'द्युद्भ्यो लुङि' इति रुचेर्वा परस्मैपदम् । **पुषादिद्युताद्यॢदित** इत्यङ् । तेन व्यरुचत् इति साधु । अत्र रुचिर्दीप्त्यर्थः ।
७५. नात्र भावे प्रत्ययो युज्यत इति तिष्ठेयुरित्येव साधु ।
७६. लिङ्लुङोरेव हनो वधादेशोऽनुशिष्टः, तेनान्यत्र हन्तेरेव प्रयोगो युक्त इति 'अहन्यन्त' इत्येव साधु । वधिः प्रकृत्यन्तरमस्तीति मतं चेन्न दोषः ।
७७. द्रु गतौ इति न घटादिः । तेन णिचि वृद्धौ सत्यां द्रावयेदित्येव साधु ।
७८. **अचि विभाषेति** ग्रो लो विधीयते विभाषा । यकि परतोऽचोऽभावाद् निगीर्यत इत्येव साधु ।
७९. **गमेरिट् परस्मैपदेष्विति** परस्मैपदे विहित इडात्मनेपदे न भवतीति गंस्यत इत्येव साधु रूपम् । **नश्चापदान्तस्य झलीति** गमेर्मकारस्यानुस्वारः ।
८०. मील निमेषणेऽकर्मकः । तेन णिचि उन्मीलयन्तीति वक्तव्यम् ।
८१. **तपस्तपःकर्मकस्यैवेति** नियमान्नात्र कर्मवद्भावः । अनुतापेऽर्थे शुद्धे कर्मणि **तपोऽनुतापे चेति** चिणो निषेधे सिचि अन्वतप्तेत्येव साधु । तेन कर्मणेति शेषः ।

८२. तथा बलमुपचिनुत यथा रन्धिष्यथ[1] रिपून् ।
८३. इदानीमहं भवदनुगृहीतः समजनि ।
८४. पुस्तकं क्व न्यधासीः, लघ्विदं[2] मृग्यताम् ।
८५. अहं हि भूयांसं श्रममतनोम्, अल्पीयश्च फलमवाप्नुवम् ।
८६. किं भवानाचक्षिष्ट ? नाहं भवदुक्तं प्रतिपद्ये[3] ।
८७. स्वसुताया विवाहमङ्गलमहे[4]ऽहं श्रद्धया ब्राह्मणानभ्यवहारयं पायसम् ।
८८. यदि त्वं मिथ्या नापदेक्ष्यः परुषं च न व्यवहरिष्यस्तदा नाऽसौ त्वयि विरसोऽभविष्यत् ।
८९. संकुच्यमानेवाङ्गेषु लज्जया याति कुलाङ्गना रथ्यया ।

---

८२. **'नेट्यलिटि रधेः'** इति लिड्वर्जे इटि नुम्नेति रधिष्यतीत्येव साधु ।
८३. सम्पूर्वात् जनेः कर्तरि लुङि इटि सिचि इडागमे समजनिषीति साधु । 'समजनि' इति तु प्रथमपुरुषे चिणि साधु ।
८४. **गातिस्थाघुपाभूभ्य** इति सिचो लुकि 'न्यधाः' इत्येव दधातेर्लुङि मध्यमैकवचने रूपम् ।
८५. मिपोऽम् । तस्य स्थानिवद्भावेन पित्त्वात् गुणेऽतनवमित्येव साधु । एवमेव आप्नवम् इति शुद्धम् ।
८६. 'चक्षिङो नित्ये ख्याञादेशेऽ**स्यतिवक्तिख्यातिभ्योऽङ्** इत्यङि अख्यः, अख्यथा इति रूपद्वयं साधु । तेन 'आचक्षिष्ट' इति प्रामादिकमेव ।
८७. उपसर्गयोगात्पूर्वमटि कृतेऽभ्यवाहारयमित्येव साधु । अभ्यवहरति भोजने वर्तते ।
८८. अत्रापि पूर्वमटि तत उपसर्गयोगेऽपादेक्ष्य इति दिशतेर्लृङि रूपं व्यवाहरिष्य इति च हरतेर्लृङि निर्दुष्टं रूपं ज्ञेयम् । **अपपूर्वो दिशतिर्व्याजीकरणे वर्तते** ।
८९. कुच अल्पीभावे तौदादिकः कुटादिः परस्मैपदी । तेन शतरि संकुचती संकुचन्तीत्युभयं साधु ।

---

१. रध हिंसासंराद्ध्योः इति धातुः । २. क्षिप्रम् ।
३. अभ्युपैमि, स्वीकरोमि । ४. उत्सवे ।

९०. बह्वो ऽत्रार्थेऽपरप्रयुक्ता एव लोप्स्यन्ति[1], एवमभिरूपोयमर्थः[2] ।
९१. कुम्भीलको[3] ऽस्मद्धनमपहरतीति किं वयमपि तद्गृहे सन्धिं छिनद्मः ।
९२. सद्भिर्बहुधा शपमानाः[4] प्रद्विषाणाश्चाप्यसन्तः क्षाम्यन्ते ।
९३. योऽभित्तौ चित्रं निर्मिमासति स साहसिको मूढः ।
९४. समानशीलौ कुलोद्गतौ शरच्चन्द्रो हेमन्तकुमारी चेति तां तेन पर्यणैष्म ।
९५. बलीयसो नो द्विषतो निबर्हयेति ते परमेश्वरमप्रार्थयन्त ।
९६. कथं कथमपि व्यतीयन्तेऽमी दिवसाः, संक्षीयते चाहरहर्जीवितम् ।
९७. शब्दानामावापोद्वा[5] पव्यापारेणैव सर्वं न आयुर्व्ययति ।
९८. यो ह्यमायिको वरीवर्तते तस्य कृच्छ्रा वृत्तिरिति लौकिकाः ।

---

९०. लुभ गार्ध्ये इत्ययं सेट् । तेन लृटि लोभिष्यन्तीत्येव न्याय्यम् ।
९१. **श्नसोरल्लोप** इति छिन्द्म इत्येव साधु ।
९२. शप आक्रोशे स्वरितेत् । तेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे शानचि शपमाना इति साधु । क्षाम्यन्त इत्यत्रोपधादीर्घो न प्राप्नोति । श्यनि तद्विधेः । इह च परतः कर्मणि यक् श्रूयते ।
९३. **सनि मीमेति** माधातोरच इसि, **अत्र लोपोऽभ्यासस्येत्य**भ्यासलोपे निर्मित्सतीत्येव रूपम् । माङ् माने इत्यस्मात् सनि तु पूर्ववत् सन आत्मनेपदे निर्मित्सते इत्येव निर्दुष्टं रूपम् ।
९४. अत्र प्रयोजकव्यापारोऽपेक्ष्यत इति णिच् प्रयोज्यः । णिचि च सति लुङि चङि पर्यणीनयामेत्येव साधु ।
९५. प्रार्थयन्तेत्येव साधु । हेतुः पूर्वत्रासकृदुक्तः ।
९६. व्यतीयन्ते इति ईङ् गतौ दिवादिः, तस्य कर्तरि लटि रूपं बोध्यम् । दिवादेराकृतिगणत्वाङ्गीकारे संक्षीयत इति सिध्यतीत्याहुः ।
९७. व्यय गताविति भ्वादिषु स्वरितेत् पठितः, तेन व्ययतीति साधु । पक्षे व्ययते इत्यपि ।
९८. यङ्लुगन्तात् **शेषात् कर्तरि परस्मैपदमिति** परस्मैपदे लटि तिपि वरीवर्ति, वरिवर्तीति रूपे साधूनी ।

---

१. लुभ गार्ध्ये इति धातुः । २. सुन्दरः । ३. पाटच्चरः । ४. आक्रोशन्तः, अपभाषमाणाः । ५. आवापोद्वापौ आधानोद्धारौ ।

९९. मन्ये तनुरियं ते तनुरनशनेनाधिकं तानवं भजिष्यते ।
१००. कृत्याकृत्ये विविच्य कृत्यमेवोद्वरति सुधीर्नाकृत्यम् ।
१०१. एवं चिन्त्यमानेष्वाभ्युदयिकेषूपायेष्वचिरादेव समुन्नमित्यव्ययं नो देशः ।
१०२. प्राणा इन्द्रियाणि चाहंश्रेयसि विवदिरे ।
१०३. पूर्वे खलु स्वं बोधमभ्यासनैरन्तर्येणैधाञ्चक्रुः ।
१०४. अत्र विषये सभापतिमहोदया बहु सुमधुरमुपान्यस्यन् ।
१०५. यथा पुरा विविधविषयाः प्रबन्धा न्यबन्धिषत न तथेदानीं निबध्यन्ते ।
१०६. कार्यारम्भे रभसो[1] न युक्त इत्येवाभिप्रैमः, न तु तत्र ते प्रवृत्तिं वारयामः ।
१०७. कस्मात्त्वं मध्येमार्गं तमरोधीः ? इदन्ते विचेष्टितं गर्ह्यं ।

---

९९. भक्ष्यत इत्येव साधु । साधुत्वे पूर्वं हेतुरुक्तः ।
१००. उद्धरतीति वृञ् आवरणे चुरादिष्वाधृषीयः । इत्यस्माण्णिजभावपक्षे लटि तिपि रूपं शक्यं व्याकर्तुम् । **उत्पूर्वस्यात्रार्थे प्रयोगो व्यवहारमनुपतति न वेति सन्दिह्यते ।**
१०२. वदेर्यजादित्वाल्लिटि किति सम्प्रसारणे व्यूदिरे इत्येव साधु । **भासनोपसंभाषे**त्यादिना विमत्यर्थविशेषणे आत्मनेपदम् ।
१०३. अत्र प्रयोजकव्यापारोऽपेक्षित इति णिचि एधयाञ्चक्रुः, एधयाञ्चक्रिरे इति वा स्यात् । एधाञ्चक्रुरिति तु न साधु । प्राकृतेऽप्यर्थे **आम्प्रत्ययवत्कृञोऽनुप्रयोगस्ये**ति करोतेरात्मनेपदेनैव भवितव्यम् ।
१०४. उपनिपूर्वादस्यतेर्लङि 'उपन्यास्यन्' इत्येव साधु । उक्तो हेतुः ।
१०५. निपूर्वाद्बध्नातेः कर्मणि लुङि प्रथमपुरुषबहुवचने न्यभन्त्सतेत्येव साधु । चिण्वद्भाव इट् चेति अज्झन्-ग्रहदृशामेवोक्तौ ।
१०६. अभिप्रेम इत्येव साधु । वृद्धेर प्राप्तेः ।
१०७. इरितो वेति अङि अरुधः; अरौत्सीः इति च सिचि परस्मैपदे साधुनी रूपे ।

---

१. वेगः ।

१०८. वाचि विचक्षणोऽसौ विदुषामपि कृतिषु दोषपूगानदर्शत् ।
१०९. यत्त्वं परधनेऽगृद्धास्तेनापप्तः[1] ।
११०. अकिञ्चित्करतामीयुः सति दोषे गुणा अपि ।
१११. इत्थं निधनं गते श्रवणे तत्पितरौ तन्तप्येते प्राणैश्च वियुज्येते ।
११२. दारुणमिममुदन्तं श्रुतवतां तेषां द्रविष्यन्ति सानुक्रोशानि चेतांसि ।
११३. देव ! बाधतेऽयं करो[2] नः । अपकृष्यतामिति सप्रश्रयं[3] सानुरोधं चार्तीथपन्प्रजाः ।
११४. कार्यान्तरासङ्गान्नाहमशकमितः पूर्वं त्वत्प्रश्नमुत्तरयितुमिति त्वां क्षमापये ।
११५. हन्त देवदत्तस्तपस्वी वर्षपूगान्[4] व्याकरणमधिजगौ न च विवेद ।

---

१०८. दृशेर्णिचि गुणे लुङि चङि **सन्वल्लघुनीति** सन्वद्भावस्याप्राप्तौ अददर्शत् इति साधु । **उऋत्** इति सूत्रप्रवृत्तौ पाक्षिक्याम् अदीदृशत् इत्यपि साधु ।
१०९. गृधु अभिकाङ्क्षायामिति दिवादिः परस्मैपदी पुषादिः । तेन लुङि सिपि 'अगृधः' इत्येव साधु ।
११०. ईयुरिति इणः सार्वधातुके लिङि दुष्टम् । दीर्घस्याप्राप्तेः । लिटि उसि तु निर्दुष्टम् ।
१११. अत्राभ्यासस्य नुकोऽप्राप्तेर्दीर्घे च प्राप्ते तातप्येते इत्येव साधु ।
११२. द्रु गतावित्यनिट् । तेन द्रोष्यन्तीत्येव साधु ।
११३. अर्थयतेर्लुङि चङि **नान्द्राः संयोगादय** इति 'थ' शब्दस्य द्वित्वे आर्तथन्तेति साधु । अर्थ उपयाच्ञायामनुदात्तेत्, अदन्तश्च । बोपदेवस्तु णिचि परतः पूर्वं वृद्धौ कृतायामाकारान्तत्वात्पुकं करोति, आर्तथपतेति च रूपं साधु पश्यति । तद्भ्रमसात् । **वृद्धेर्लोपो बलीयानिति पूर्वमतो लोपे वृद्धेरप्राप्तेः** ।
११४. क्षमेर्णिचि पुगागमस्याप्राप्तेर्मित्त्वाद् ह्रस्वत्वे च क्षमयामीत्येव साधु ।
११५. अधि इङ अध्ययन इति ङित्त्वादात्मनेपदी । **गाङ् लिटीति** गाङादेशेऽधिजगे इत्येव साधु ।

---

१. गृधु अभिकाङ्क्षायाम् ।
२. भागेदयः, बलिः । ३. सादरम् । ४. वर्षगणम्

११६. परिमितसंख्या अपि तेऽपरिमितैः समग्रामयन्त । परं च पराक्रमन्त ।
११७. ते निद्रातन्द्राभ्यामेव कालमनैषिषुः क्लेशं चान्तेऽयुः ।
११८. प्रिय सत्यव्रत ! ज्योग्जीव्या नित्यं चाभ्युदीयाः ।
११९. अयं निगमान्तविद्यालयः संस्कृतविद्यालयानां शेखरीभूतो जाजागरीति ।
१२०. न सम्पपृच्छे गमनाय सत्वरा सखीजनम्...... (अश्वघोषः) ।
१२१. शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः (कु० १) ।
१२२. जीर्णमन्नं प्रशंसीयाद् भार्यां च गतयौवनाम् । रणात्प्रत्यागतं शत्रुं सस्यं च गृहमागतम् ॥
१२३. अष्टमे गर्भाष्टमे वाऽब्दे ब्राह्मणमुपनयीत ।

---

११६. संग्राम युद्धे इति चुरादिष्वनुदात्तेत् । अस्मादेव सोपसर्गादडादिविधिः । तेन असंग्रामयन्तेत्येव साधु ।
११७. नयतेर्लुङि झौ 'अनैषुः' इत्येव रूपम् । लङः **शाकटायनस्यैवेति** (३।४।१११) यातेर्झेर्जुस् । पक्षेऽयानिति भवत्येव ।
११८. **एतेर्लिङि** इति ह्रस्वेऽभ्युदिया इत्येव साधु ।
११९. जागर्तेरनेकाच्त्वाद् धातोरेकाचो हलादेः क्रियासमभिहारे यङ् इति यङ् नैव भवति । नतरां यङ्लुक् । भृशं जागर्तीति वा, पुनः पुनर्जागर्तीति वा वक्तव्यम् ।
१२०. सम्पपृच्छे इति कर्तरि लिट्यात्मनेपदे साधु रूपमभिमन्यतेऽश्वघोषः । इह प्रच्छेः सकर्मकत्वात् **विदिप्रच्छिस्वरतीनामुपसंख्यानं कर्तव्यमि**त्यात्मनेपदं न प्राप्नोति । अकर्मकादित्यनुवृत्तेः । संयोगान्तत्वाद् **असंयोगाल्लिट् कित्** इति कित्त्वं च नेति सम्प्रसारणमपि न । तेन प्रमाद एवायमिति प्रामाणिकाः ।
१२१. 'आस' इति अस गतिदीप्त्यादानेष्वित्यस्य भ्वादेः स्वरितेतो लिटि रूपम् । न तु अस भुवि इत्यस्य । तेन न कश्चिद्दोषः ।
१२२. प्रशंसेत् इत्येव युक्तम् । शंसु स्तुताविति भ्वादिः ।
१२३. 'उपनयेत इत्येव साधु । आचार्यकरणेऽर्थे उपाधावात्मनेपदविधानात् । उपपूर्वाद् नयतेर्लिङि शपि गुणेऽयादेशे सीयुटि लिङः सलोप इति सकारलोपे वलि लोप इति यकारलोपे उपनयेतेति रूपम् ।

---

५. अयुध्यन्त ।

१२४. अवसितं नो नगरे कृत्यम् । सम्प्रति ग्रामं गन्तुमुपक्रमामहे ।
१२५. निशामय तदुत्पत्तिं विस्तराद् गदतो मम (दुर्गा०) ।
१२६. कमलवनोद्घाटनं कुर्वते ये (इति मयूरः) ।
१२७. अद्य चिरं तमुपैमोति सोऽसंशयमनुगृह्णिष्यति माम् ।
१२८. निषादमपि वक्षसा त्रिपथगातटेऽपीस्पृशत् ।
१२९. बहुवस्तु व्युत्पत्तिविधुराः प्रमाणपत्त्रमेव लेलिहाना परीक्षोत्तरण-दृप्ताः ।
१३०. न शरणवाञ्छयोपपन्नं भक्तं दूरयति भक्तवत्सलो देवः ।
१३१. अत्युत्कृष्टमिदं तीर्थं भारद्वाज निशामय ।

---

१२४. **प्रोपाभ्यां समर्थाभ्यामित्यनेन** क्रम आत्मनेपदं विहितम् । तत्र प्रक्रमत उपक्रमत इति शब्विकरणमेव क्रमिमुदाहरन्ति व्याख्यातारः । **वा भ्राशभ्लाशेत्यादिना विकल्पेन शपः श्यनि प्रोपपूर्वस्य क्रमेरारम्भेऽर्थे प्रयोगो भवति न वेति विद्वांसो निर्णयं ब्रुवन्तु ।**

१२५. शम लक्ष आलोचने चुरादिः । **नान्ये मितोऽहेताविति** मित्त्वाभावे ह्रस्वो न । धातूनामनेकार्थत्वात् श्रवणे वृत्तिः । आत्मनेपदाभावस्तु चिन्त्यः ।

१२६. उद्घाटनमिति घट संघात इत्यस्य चुरादे रूपं न तु घट चेष्टायां भ्वादेः । तेन घटादित्वाभावान्मित्त्वं नेति ह्रस्वो न ।

१२७. अनुग्रहीष्यतीत्येव । ग्रहोऽलिटि दीर्घ दीर्घेण ईडागमेन भवितव्यम् । **उॠत्** इत्यृति तु दीर्घसन्वद्भावयोः कृतयोः अपीस्पृशत् इत्यपि साधु ।

१२९. लेलिहाना इति नियतमपशब्दः । लिहे र्लिडादेशे कानचि दुर्लभोऽभ्यासस्य गुणः । लिहेर्यङ्लुकि शतरि लेलिहत इति स्यात् । यङि च लेलिह्यमाना इति रूपम् । सर्पवचनो लेलिहानशब्दोऽस्त्यव्युत्पन्न इत्यन्यदेतत् ।

१३०. दूरं करोतीत्यर्थे **प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्चेति** णिचि इष्ठवद् भावेन दूरस्य दवादेशे दवयतीति रूपम् । **स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुण** इति हि इष्ठादिषु विधिः स्मृतः । बहुलग्रहणादिष्ठवद्भावो नेति समाधिः ।

१३१. शमो दर्शन इति गणसूत्रेण शाम्यतिर्दर्शनेऽर्थे मिन्न भवतीति निशामयेति साधु । **श्रवणे दर्शने चार्थे शमिर्निपूर्वः प्रयुज्यते ।**

१३२. मायूरी मदयति मार्जना मनांसि (माल० १।२१)।
१३३. मौहम्मदा अकारणमेव हिन्दूनद्विषुर्द्विषन्ति च।
१३४. कार्तिकेयेन तारको नामासुरोऽवधि स्वास्थ्यं च दिवोऽकारि।
१३५. भीमकान्तैर्नृपगुणैः सनाथितस्त्वं चिरं चकाधि।
१३६. भृशं रोचते शोभत इति रोरुच्यते।
१३७. किमत्र न्याय्यम्—यङ्लुकि लुङि अबोभवीदिति अबोभूवीदिति वा।
१३८. पूर्वे राजन्याः स्वदेशप्रेमाग्नौ स्वप्राणांस्तृणवदजुह्वन्।
१३९. अहं हि मध्येमार्गं प्रसह्योपारोधिषि देवदत्तेन, तेन मे कालातिक्रमोऽभूत्।

---

१३२. मदी हर्षग्लेपनयोर्घटादिष्वनूद्यते। तेन मित्त्वाद्ध्रस्वे मदयतीति साधु। मदयति हर्षयतीत्यर्थः।
१३३. द्विषश्च (३।४।११२) इति लङो झेर्जुसं वा विधत्ते। तेन अद्विषुः, अद्विषन् इत्युभयं साधु।
१३४. **हनो वध लिङि, लुङि च**, आत्मनेपदेष्वन्यतरस्यामित्यार्धधातुकमात्रमधिकृत्य विधिः। तेन कर्तृकर्मणोरुभयोरपि भवति। तस्मात् कर्मण्यपि अवधीति रूपं साधु। तथा च कालिदासप्रयोगः—**जघान समरे दैत्यं दुर्जयं तेन चावधि** (रघौ १७।५) इति। पक्षेऽ'घानि' इति भवति।
१३५. भाष्यकारमते चकाधि इति रूपम्। **धि चेति** सूत्रेण सिचः सकारस्य लोपो नान्यसकारस्येत्यन्ये। तन्मते 'चकाद्धि' इत्येव।
१३६. अत्रार्थे रुचेर्यङ् नेति भाष्यम्। तत्रानभिधानं हेतुः।
१३७. अबोभूवीत् इत्येव भुवो यङ्लुगन्ताल्लुङि तिपि रूपम्। **गातिस्थेति** सिचो लुक्। यङो वेतीट्पक्षे गुणं बाधित्वा नित्यत्वाद्वुक्। अबोभवीदिति तु चिन्त्यम्। भुवो वुको नित्यत्वादिति भाष्यग्रन्थविरोधात्। ईडभावपक्षेऽबोभोत् इति रूपान्तरम्। **अस्ति सिच** (७।३।९६) इति नित्य ईडागमस्तु न भवति, श्रूयमाणे सिचि एव तद्विधेः।
१३८. **सिजभ्यस्तविदिभ्यश्चेति** झेर्जुसि गुणे च 'अजुहवुः' इत्येव साधु।
१३९. रुधेः कर्मणि लुङि इटि 'उपारुत्सि' इत्येव साधु। इट आगमस्य गुणस्य चाप्राप्तेः। **लिङ्सिचावात्मनेपदेषु** इति सिचः कित्त्वम्। कित्त्वाद् गुणाभावः।

१४०. यादृंशि कर्मबीजान्युप्यन्त तादृशा एव प्ररोहाः प्रादुरभवन् ।
१४१. नान्यस्मिन्स्नेह्यामः, नान्यस्य श्रद्धीमः ।
१४२. विप्रयोगचिन्ता हि पातयत्यश्रूणि रुध्नाति च क्षणं कण्ठम् ।
१४३. स्वान्तं शिष्यजनस्य नित्यमुदितं धर्मे सदा दक्षतात् ।
१४४. स सभायां किमप्यपूर्वमुपन्यास्त, न तत् प्रत्यायन् सभासदः ।
१४५. वनस्थमपि तापस्ये यस्त्वामनुविधीयते (रा० ३।१६।३३) ।
१४६. कुतस्तेऽस्य धनस्य लब्धिरित्यभियुक्तः स किमपि नोदतरत् ।
१४७. अयि किमन्वेषसे, किं ते नष्टम् ?
१४८. ते देवा विष्णुमुपेत्य प्रार्थयामासिरे त्रायस्व नस्तारकादिति ।
१४९. जाग्रत जाग्रत भोः सखायः । नायं स्वापकालः ।
१५०. प्रसेर्रुदिक्षु सर्वासु वेदधर्मप्रचारकाः ।

---

१४०. आडागमे आटश्चेति वृद्धौ औप्यन्तेत्येव साधु । इदं च वपेः कर्मणि लङि रूपम् । यजादित्वात्सम्प्रसारणम् ।
१४१. स्निह्याम इति श्यनि साधु । श्रद्दध्म इति च ।
१४२. रुधिः श्नम्विकरणो न तु श्नाविकरण इति रुणद्धीत्येव रूपम् ।
१४३. दक्ष वृद्धौ शैध्र्ये चेति भ्वादिष्वनुदात्तेत् पठितः । तेन लोटि तुप्रत्ययस्याभावात् तातङादेशस्यासम्भवः । तेनाशिषि लिङि दक्षिषीष्टेत्येव निरवद्यं रूपम् ।
१४४. उपन्यास्थत् इत्येव साधु । अस्यतेस्थुक् इति थुगागमेन भवितव्यम् ।
१४५. अनुविधीयते इति । धीङ् आधारे दिवादिः । विरुपसर्गः । अनुः कर्मप्रवचनीयः ।
१४६. उत्तरतिरुत्तरवचने न प्रसिद्धः । तत्रार्थे उत्तरशब्दाण्णिच् कर्तव्यः । उच्छब्दं पृथक्कृत्वाऽटि उदतरयत् इति रूपं साध्यम् ।
१४७. एषृ गतौ भूवादिः । तस्यानुपूर्वस्य लट्यात्मनेपदे रूपमिति सर्वमवदातम् ।
१४८. अनुप्रयुज्यमानस्य करोतेरेवाम्प्रत्ययवदात्मनेपदविधानादस्तेरनुप्रयुज्यमानात्तु यथाप्राप्तं परस्मैपदे प्रार्थयामासुरति साधु ।
१४९. जागृतेत्येव साधु । ऋकारस्य रेफविधेरभावात् ।
१५०. सर्तेः प्रपूर्वाल्लिट्युसि प्रसस्रुरित्येवानवद्यं रूपम् । एत्वाभ्यासलोपयोरप्राप्तेः ।

१५१. यो जागार तमृचः कामयन्ते (ऋ० ५।४४।१४) ।
१५२. यदि प्रेत्यभाव उपपत्तिभिर्न सिध्यति । मा सैत्सीत् । श्रुतिस्त्व-
स्यानुग्राहिका समस्ति ।
१५३. तेऽयं निजोऽयं पर इति नाविदन्, तेनाहीयन्त ।
१५४. कैश्चिद् वेदाः क्रियार्था यज्ञपरा एवामानिषत ।
१५५. स्वमतं दृढयति परमतं च प्रतिक्षिपति ।
१५६. उपनमय मे रथं यावदारोहामि ।
१५७. प्राज्यतेऽनेनेति प्राजनं प्रतोदः ।
१५८. त्वं वै ज्येष्ठो ज्यैष्ठिनेयः पुत्र मा पाण्डवान्द्विषः (भा० सभा०
५४।१) ।
१५९. या ते बुद्धिः साऽस्तु मा प्रमादीः (भा० सभा० ७५।१०) ।

---

१५१. दृष्टानुविधिश्छन्दसीत्यभ्यासलोपोऽविहितोऽपि साधुः । **उषविदजा-
गृभ्योन्यतरस्याम्** इत्याम् तु न भवति अमन्त्रे लिटि तद्विधेः ।

१५२. षिधु संराद्धौ दिवादिषु पुषादिः । तेन लुङि अङि माङ्युपपदे मा
सिधत् इत्येव साधु ।

१५३. **सिजभ्यस्तविदिभ्यश्चे**ति झेर्जुसि 'अविदुः' इत्येव साधु ।

१५४. चिण्वदिटोरप्राप्तेः अमंसत इत्येव कर्मणि लुङि रूपम् । अज्झन्-
ग्रहदृशां स विधिरुक्तः । मन्यतेर्न प्राप्नोति ।

१५५. दृढं करोतीत्यर्थे **बहुलमिष्ठवच्चे**ति णिचि इष्ठवद्भावे च '**र ऋतो
हलादेर्लघोः**' इति रकारे द्रढयतीत्येव साधु ।

१५६. उपनमयेति साधु । मित्त्वाद् ह्रस्वः । सोपसर्गस्य नमेर्नित्यं
मित्त्वम् ।

१५७. प्रवीयतेऽनेनेति प्राजनं (प्रवयणं वा) । **अजेर्व्यघञपो**रिति नित्यो
वीभाव आर्धधातुके, घञपोस्तु न । ल्युटि तु 'वा यौ' इति वीभावो
वैकल्पिकः, तेन प्रवयणमपि भवति ।

१५८. मा द्विष इत्यपाणिनीयम् । **शल इगुपधादनिटः** इति च्लेः क्सादेशे 'मा
द्विक्षः' इति रूपम् ।

१५९. मा प्रमद इत्येवेति पाणिनीयाः । मदी हर्षे इति दिवादिषु
पुषादिः । पुषादित्वादङ् ।

१६०. नूनं नाश्रद्दधद्वाक्यमेष मे भरतर्षभः (भा० द्रोण० १९०।५१)।
१६१. मा भैः शशाङ्क मम सीधुनि नास्ति राहुः।
१६२, हरे यंदक्रामि पदैककेन खम् (नै० )।
१६३. नैनं वमन्तमपि वामयितुं यतेत (सुश्रुत० उत्तर० १९।१०)।
१६४. जलमञ्जनकल्माषं मा मोक्षीराननद्विषम् (हरि० १।६६।३८)।
१६५. तं पातयां प्रथममास पपात पश्चात् (रघु० ९।६१)।
१६६. उक्षान्प्रचक्रुर्नगरस्य मार्गान् (भट्टि० ३।५)।
१६७. कवयामि वयामि यामि (भोजप्रबन्धे)।
१६८. उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् (हितोप०)।

---

१६०. न श्रद् अदधात् इति तु पाणिनीयाः। लावस्थायामेवाडाटौ। प्रथममट्, पश्चादुपसर्गयोग इत्यसकृत्पूर्वमवोचाम। इह तु श्रद् इत्युपसर्गो न। किन्तर्हि सत्यार्थको निपातः। श्रदन्तरोरुपसर्गवद् वृत्तिरिति श्रत उपसर्गसंज्ञा ऽतिदिश्यते। तेन तस्याटः पूर्वं प्रयोगोऽत्यन्तमप्राप्तः।
१६१. मा भैषीरित्येव साधु। सिचो लुकोऽप्राप्तेः।
१६२. **नोदात्तोपदेशस्य मान्तस्यानाचमेरिति** वृद्धिप्रतिषेधे 'अक्रमि' इत्येव साधु।
१६३. **ग्लास्नावनुवमां चे**त्यनुपसर्गस्य वमे वैकल्पिके मित्त्वे तदभावपक्षे वामयितुमिति साधु।
१६४. मा मुच इत्येव साधु। लृदित्वाच्च्लेरङ्।
१६५. **कृञ्चानुप्रयुज्यते लिटी**त्यत्राव्यवहितस्य कृञोनुप्रयोगो व्याख्यायते तेन व्यवहितस्य नेष्यत इति महाकवेः प्रयोगो दुःसमाधानः। **अपप्रयोग इति नानुसृतः कविभिरुत्तरै भट्टिर्जम्।**
१६६. उक्षणमुक्षा (सेचनम्) साऽस्त्येषामित्यर्श **आदित्वादच्** इति जयमङ्गलायां समाधिः। स्थितस्य गतिश्चिन्तनीयेति समाधौ यत्नमात्रमेतत्। विस्पष्टं स्खलितमत्र कविना महाकविं रघुकारमनुकुर्वता। उक्षामिति कविधृतः पाठः स्यात्।
१६७. कवयामीत्याचारक्विबन्ताल्लटि मिपि रूपम्। कविरिवाचरामीत्यर्थः। कौतिकुवत्योस्तु प्रयोगे दुर्लभमेतद् रूपम्।
१६८. कृष्णं करोतित्यर्थे तत्करोति तदाचष्ट इति णिचि कृष्णयतीत्येव साधु। भृशादित्वाद्रूपसिद्धावपीष्टार्थलब्धिर्न।

१६९. अनिर्वेदः श्रियो मूलमिति पुरस्ताद् दरिदृश्यते स्म दरिदर्शयिष्यते च निदर्शनान्तरैः परस्तात् ।

१७०. मा यास्त मा यास्त गृहान् विमूढाः ।
गाङ्गं विहायाखिलमुक्तितीरम् (श्रीकेशवदिग्विजयसारे २४। १०) ।

१७१. वेदार्थविचिकित्साऽपाकृतये मीमांसा जगत्यवतरीत् ।

१७२ मा स्म भूम्यनृतं वदीः (मनु० ८।९९) ।

१७३. विदद्ध्वं विहितं कर्म, तेन सुखायध्वम् ।

१७४. नादिदासीददित्सीत्तु सौमुख्यात्स्वं स्वमर्थवत् (सौन्दर० २।१८) ।

१७५. योऽगर्धीत्सोऽपप्तत् ।

१७६. चेष्टा व्यनेशन्नखिलास्तदास्याः (नै० ) ।

---

१६९. दर्शयतेर्ण्यन्तादनेकाच्त्वाद्यङ् दुर्लभः । तेन पुनः पुनर्दर्शयिष्यत इत्येवं वक्तव्यम् ।

१७०. मा यास्त इत्यपशब्दः । **यमरमनमातां सक् चेति** शास्त्रेण सकि सिच इटि च मा यासिष्टेति शब्दः । सिज्लोपस्याप्रसक्तेः ।

१७१. अवातारीदित्यटि कृते वृद्धौ च साधु ।

१७२. मा वादीरित्येव साधु । **वदव्रजे**त्यादिना नित्या वृद्धिः । **नेटी**-त्यस्यापवादः ।

१७३. विधद्ध्वमिति वक्तव्यम् । **दधस्तथोश्चे**ति विहितो बश्भावो न कृतः स दोषः । सुखायध्वमिति **सुखादिभ्यः कर्तृवेदनायामिति** क्यङि साधु ।

१७४. नाऽऽदिदासीत् इति प्रामादिकम् । आङ्पूर्वाद् ददातेः सन्नान्ताल्लुङि सिचि इटि आदित्सिष्टेति रूपम् । **आङो दोऽनास्यविहरण** इत्यात्मनेपदनिमित्ते सन्नान्तादप्यात्मनेपदम् । अदित्सीदिति परस्मैपदे साधु ।

१७५. पुषादित्वाद् अङि अगृधदित्येव साधु ।

१७६. **नशिमन्योरलिट्येत्वं वक्तव्यमिति** अत एकहल्मध्ये (६।४।१२०) इत्यत्र वृत्तिः । तदनुरोधेन लुङि रूपं साधु । कैयटस्तु च्छन्दोविषयमेतदित्याह । नशिमन्योरलिट्येत्वं 'छन्दस्यमिपचोरपि' इति श्लोकवार्तिके छन्दसीति पूर्वेणापि सम्बध्यत इति ।

१७७. नियमयसि विमार्गप्रस्थितानात्तदण्डः (शा० ५।८) ।
१७८. मङ्गलश्लोकपाठादूर्ध्वं सूत्रधारः प्रकरणं प्रास्तोत् ।
१७९. आः स्वयमेवाकर्षिषताङ्गारा अनेन स्वहस्तेन ।
१८०. श्रीमत्पण्डितराजजगन्नाथो व्यधासीदिदम् (प्राणाभरणे) ।
१८१. उदगग्नेरुत्सृज्य प्रक्षाल्य पाणी पादौ चोपविश्य त्रिराचामेत त्रिःप्रमृजीत (गो० गृ० १।२५)
१८२. ये वीतरागाणां मुनीनां वचनामृतमाचिचामिषन्ति ते धन्याः ।
१८३. गर्हिते चाप्यवसाने च चेलमाचक्ष्यते बुधैः ।
१८४. तैः साध्यसिद्धयै ते तेऽभ्युपायाः कथं कथमप्युपालम्भिषत ।
१८५. आपन्नार्तिप्रशमने जननायकः श्रीलाजपतो बह्वर्थमव्ययीत् ।

---

१७७. नियमयसीति नियमवच्छब्दात्तत्करोतीत्यर्थे णौ इष्ठवद्भावाट्टि-लोपे रूपं बोध्यम् । **यमोऽपरिवेषणे इति** परिवेषणादन्यत्र यमिर्मित्र ।
१७८. ईडभावपक्षे **उतो वृद्धिर्लुकि हलीति** वृद्धया प्रास्तौदित्येव साधु ।
१७९. उपदेशेऽजन्तानां धातूनां हनग्रहदृशामेव च विषये स्यादिषु प्रत्ययेषु भावकर्मणोरिट् चिण्वद्भावौ विहितौ । तेन कृषेस्तयोरप्राप्तिरिति लुङि सिचि अकृक्षतेति रूपम् । आङ्पूर्वस्य कृषेराकृक्षतेति । सिजभावे क्से तु बहुवचने आकृक्षन्तेति रूपं बोध्यम् ।
१८०. व्यधासीत् इति प्रामादिकम् । **गातिस्थाघुपाभूभ्य** इति सिज्लुकि व्यधादित्येव संस्कारवद् रूपम् ।
१८१. 'आचामेत' इत्यत्र तङ् नोचितः । प्रमृजीतेति मृज शौचालङ्कार-योरिति चौरादिकस्याधृषीयत्वाद् विकल्पेन णिचि तदभावपक्षे निरवद्यं रूपम् ।
१८२. आचिचमिषन्तीत्येव साधु । **ष्ठिवुक्लमुचमां शिति आङि चम** इति शास्त्राभ्यां शिति प्रत्यय एवोपधावृद्धेर्विधानात् ।
१८३. चक्षिङः ख्याञ् इत्यार्धधातुके यकि ख्याञादेशे 'आख्यायते' इत्येव वक्तव्यम् ।
१८४. उपपूर्वाल्लभेः कर्मणि लुङि उपालप्सतेत्येव साधु । इट् चिण्वद्-भावयोरप्राप्तेः ।
१८५. व्यय वित्तसमुत्सर्गे इति तस्माल्लुङि अवव्ययदिति रूपम् । अव्ययीदिति भ्वादेर्गत्यर्थकस्य रूपम् । अर्थस्तु न सङ्गच्छते ।

१८६. अयं कदाचार इदं वैशसं सर्वं राष्ट्रमान्दूदुलत् ।
१८७. अयं धर्मोऽयं चाधर्म इति पूर्वैः साधु व्यवास्यत ।
१८८. सौहृदं दुस्त्यजं पित्रोरहाद्यः (भा० पु० ५।५।३६) ।
१८९. ज्ञायते घटः स्वयमेव ।
१९०. सूर्यश्चान्तरधीयत ।
१९१. तत्क्षामये त्वामहमप्रमेयम् (गीता० ११।४२) ।
१९२. अशिश्रियत् अशिश्रयद् इत्येतयो रूपयोरेकतरं साधूभयं वेति निर्वक्तुं चेत्सहसे नूनं शाब्दिकोसि ।

---

१८६. आन्दोल इति चुरादिष्वदन्तः । अग्लोपित्वादुपधालघुत्वाभावाद् आन्दुदोलद् इत्येव युक्तम् ।

१८७. व्यवास्यतेति प्रमादः । व्यवपूर्वात्स्यतेः कर्मणि लङि **आदेच उपदेश** इत्यात्वे **घुमास्थागापाजहातिसां हलीतीत्वे** 'व्यवासीयत' इत्येव साधु ।

१८८. अहादित्यपप्रयोगो **भागवतकारस्य वाचि स्वतन्त्रस्य** । लुङि अहासीदिति रूपम्, लङि चाजहादिति ।

१८९. जानातिः कर्तृस्थभावको न तु कर्मस्थक्रियस्तेन कर्मवद्भावस्याप्रसङ्गः ।

१९०. अन्तः पूर्वस्य धाञ उभयथा प्रयोगा दृश्यन्ते सककर्मत्वेनाकर्मकत्वेन च । अत्र सकर्मकस्य प्रयोगः । कर्मकर्तरि प्रत्ययः, तेन न कश्चिद् दोषः ।

१९१. क्षमिर्मिद् अमन्तत्वात् । तेन णिचि **मितां ह्रस्व** इति ह्रस्वत्वे 'क्षमये' इत्येव युक्तं पश्यन्ति पाणिनीयाः । क्षाम्यतिरकर्मकः क्षमतिश्च सकर्मक इति विवेकः । अत्र पूर्वस्य ग्रहणमिति णौ कर्तुः कर्मत्वे त्वामिति द्वितीयान्तं साधु ।

१९२. अशिश्रियद् इति श्रिञ् सेवायाम् इत्यस्माल्लुङि **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** इति च्लेश्चङि द्वित्वे रूपम् । अशिश्रयद् इति श्रीमन्तं करोतीत्यर्थे श्रीमच्छब्दात्तत्करोति तदाचष्ट इति णिचि इष्ठवद्भावेन मतुपो लुकि लुङि चङि तिपि वृद्धावायादेश उपधाह्रस्वे द्विर्वचनेऽचीति 'श्री' इत्यस्य द्वित्वेऽभ्यासस्य ह्रस्वत्वे शुद्धं रूपम् ।

१९३. यं घटं करोति तमानयेत्यथ यं घटयति तमानयेति प्रयोगे किं दुष्यति ।
१९४. मा दीदरस्त्वं सुहृदो मा त्वां दीर्णं प्रहासिषुः (भा०) ।
१९५. तर्षन्ति भूरिविषयाश्च न लोभपाशाः (भर्तृ० १।७५) ।
१९६. अशीमहि वयं भिक्षामाशावासो वसीमहि (भर्तृ ३) ।
१९७. हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोप्यवज्ञायते (भर्तृ० ३।७३) ।
१९८. गतिं जिगीषतः पादौ रुरुहातेऽभिकामिकाम् (भा०पु० २।१०।२५) ।
१९९. मदर्थेऽरीन् विजघ्निनथ (भा० पु०)।

---

१९३. घटशब्दो यच्छब्दव्यपेक्षः । सापेक्षाणां वृत्तिर्न, असमर्थत्वाद् इत्यत्र णिज् दुर्लभः ।
१९४. मा दीदर इत्यस्य स्थाने मा ददर इति पाठ्यं पाणिनीयतालाभाय । पाणिनीया अत्राभ्यासस्येत्त्वापवादेनात्त्वमिच्छन्ति । **अत्स्मृदृत्वरप्रथम्रदस्तृस्पशामिति** तद्विधायकं शास्त्रम् ।
१९५. तर्षयन्तीत्येव साधु । तृषिरकर्मकः । अन्तर्णीतण्यर्थत्वेऽपि दिवादित्वादत्र श्यना भवितव्यं न शपा ।
१९६. अशू व्याप्तौ स्वादिरनुदात्तेत् । तस्मात्सार्वधातुके लिङि 'अश्नुवीमहि' इति स्यात् । व्यक्तमस्खालीदत्र कविः । यथेदं बृहत्स्खलनं जघटे तथा ब्रूमः—**आम्नाती वेदेऽयं कविरिति तद्गतप्रयोगैर्वास्यतेऽस्यान्तःकरणमिति लोकेऽपि छन्दोवत्कुरुते । अशीमहि गाधमुत प्रतिष्ठामिति** हि बाह्वृच्यम् (ऋ० ५।४७।७) । भद्रं जीवन्तो जरणामशीमहि (ऋ१०।३७।६) इति च ।
१९७. अवज्ञायते इत्यत्र भृशादेराकृतिगणत्वात्क्यङ् बोध्यः । अवज्ञाशब्दोऽत्र तद्वति वर्तते यथा निद्राकरुणाकृपादयः । एवं रूपसिद्धौ सुलभायामपि नार्थसिद्धिरिष्टा भवति । अनवज्ञोऽवज्ञावान्भवतीत्यर्थः क्यङन्तस्य । कम्प्रत्यवज्ञावान् इति न लभ्यते । न हि शब्दोक्तं तत् ।
१९८. जिगीषत इति गाङ् गतावित्यस्य सनि रूपमिच्छति भागवतकारः । न चेदं सिध्यति । सनः कित्त्वाभावादीत्वाभावः प्राप्नोति । गाङ्कुटादिभ्य इत्यत्र इङो गाङ्आदेशो गृह्यते, तेन सनो ङित्त्वमपि न ।
१९९. लिटि थल्युपधालोपाप्रसङ्गाद् निजघनिथेति रूपम् । इडभावे तु निजघन्थेति ।

२००. उपनामयति करोऽन्नं रसांस्तु जिह्वैव जानाति ।
२०१. मर्त्यं मय्यमृतत्वमुच्छलयताम् (करुणा० ३५) ।
२०२. तं कृष्णं तोष्टीमः (मोह० १।२३) ।
२०३. यो रसिकहृदयगो देदवीतात् स्वधाम्ना (मोह० १।२३) ।
२०४. वाणी···मान्द्यता मावतीतात् (मोह० १।२८) ।
२०५. तास्तब्धि त्रिदशालये धवलिमा (मोह० १।३७) ।
२०६. मुनिर्भिन्नस्वान्तः···बधान प्रेमाणं नवयुवतिसङ्घेऽति मधुरे (मोह० १।४२) ।

---

२००. ज्वलह्वलेति सूत्रेण सोपसर्गस्य नमेर्मित्त्वविकल्पो नेति नित्यायां मित्संज्ञायामुपनमयतीत्येव वक्तव्यम् ।

२०१. उच्छलयताम् इत्यत्र शलेर्णिचि उपधावृद्धिर्न कृता, स दोषः । **शल गतौ इत्येष घटादिर्न** । शल चलनसंचरणयोरित्यपि न । तेनोपधाह्रस्वो न प्राप्नोति । उच्छालयतामित्येव साधु ।

२०२. तोष्टीम इति यङ्लुकि उत्तमपुरुषबहुवचने न सिध्यति । यङो वेति ईडागमो हलि पिति सार्वधातुके विहितः । इह पित्त्वं नास्तीति तदप्रसङ्गः ।

२०३. देदवीतात् इति स्वधाम्नेत्युक्ते दिवेर्यङ्लुकि रूपमिच्छति कविः । **यकारवकारान्तानां तूठ्भाविनां यङ्लुङ्नेति** च्छ्वोरिति सत्रे भाष्ये ध्वनितम् । तेन दिवेर्यङ्लुकि रूपसिद्धौ न मुधाऽऽत्मा क्लेशस्य पदमुपनेयः । अथ भाष्यमनादृत्य रूपसिद्धिरभसः, देदवीतात् इति न सिध्यति । प्रथमं तावत् तातङि प्रत्यये ईट् केन । अभ्यासोत्तरखण्डे दकारोत्तरवर्त्यकारः कथङ्कारमात्मानं लभेत ।

२०४. मावतीतात् इति माङ् इति निषेधार्थकमुपपदमित्यसांशयिकम् । अवतीतात् इति कस्माद् धातोर्व्युत्पिपादयिषति कविरिति न सुज्ञानम् ।

२०५. तास्तब्धि इति यङ्लुकि प्रथमैकवचने न सेद्धुमर्हति । **स्तम्भु इति नकारमध्यो धातुः** । यङो लुकि तिपि परतो नकारस्योपधाभूतस्य लोपो न केनापि शास्त्रेण प्राप्नोति ।

२०६. बधान प्रेमाणम् । **अबालस्यापि बालस्येव कियानपि व्यामोहः कवेः** । बधानेति लोण्मध्यमैकवचने रूपम् । बबन्धेति वक्तव्ये बधानेत्याह ।

२०८. मौर्व्यां मनः प्राक्षिणौत् (मोह० ३।६)।
२०९. पुण्यश्लोकान्ब्राह्मणान् सम्प्रणेमे (मोह० ४।३७)।
२१०. वर्णज्येष्ठमजीज्ञपन्गुरुवराः संबोधतां कन्यकाः (मोह० ४।२४)।
२११. दर्दर्ष्टि भूपं मुनिः (मोह० २।३३)।
२१२. पुत्रः शत्रवतीह जर्जरतनौ भार्याशती द्विष्टते (मोह० ८।२३)।
२१३. राजन् कदागमि वदस्व शिवं स्वकीयम् (मोह० ६।२०)।

---

२०७. बंभ्रान्ति पुच्छम्। अत्र बंभ्रान्ति इत्यत्रानुनासिकान्तस्य **भ्रमे-**रुपधाया दीर्घो न प्राप्नोति। परतो **झलादिः** क्ङिन्नास्ति। बंभ्रन्तीत्येव साधु बंभ्रमीति इति वा।
२०८. प्राक्षिणौदित्यपशब्दः। क्षिणु हिंसायामिति रुधादिः। क्षि हिंसायाम् इति स्वादिः। उभयस्माल्लङि तिपि प्राक्षिणोदित्येव रूपम् तेनो**तो वृद्धि लुंकि हलो**त्यस्य विषयो न।
२०९. ब्राह्मणान् सम्प्रणेम इत्यत्रात्मनेपदं दुर्लभम्। न ह्यत्र कर्मकर्तरि प्रयोगः। अन्यादृश एव तस्य विषयः, नमते दारु स्वयमेवेत्यादिः।
२१०. अजीज्ञपन् इत्यत्र सन्वल्लघुनीति सन्वद्भाव इत्त्वे दीर्घो लघोरित्यभ्यासस्य दीर्घो न। **संयोगे गुरु** इत्यभ्यासो गुरुः। तेन अजिज्ञपन्नित्येव साधु। वर्णज्येष्ठो विप्रः कन्यकाः सम्बोधताम् आकारयत्वित्यर्थः। अयं चार्थो णिचमन्तरा न शक्यो गमयितुम्। तेन 'सम्बोधयतु' इत्येवं वक्तव्यम्। **बुधयुधनशे**त्यादिना णिजन्तात् परस्मैपदमेव च प्रयोक्तव्यम्।
२११. 'दर्दर्ष्टि' इत्यसाधु। सृजिदृशोर्झल्यमकितीति लघूपधगुणापवादोऽमागमो विधीयते। तेन **दर्द्रष्टी**त्येवावदातं रूपम्।
२१२. भार्याशती द्विष्टते इत्युभे अपि पदे दुष्टे। शतमिति नित्यं नपुंसकम्। नायं द्विगुः, येन ङीप् स्यात्। द्विष्टत इत्यत्रच्छन्दोरिरक्षिषया तकारं पदमध्ये प्रक्षिपति। अपि माषं मषं कुर्याच्छन्दोभङ्गं त्यजेद् गिरम् इति च केषाञ्चिदुक्ति च प्रमाणी करोति।
२१३. कदागमीत्यत्र आगमीत्यसाधु। चिणि उपधावृद्धेरकरणमेवेहासाधुत्वम्। अनुदात्तो गमिः, **तेन नोदात्तोपदेशस्ये**त्यनेन वृद्धिप्रतिषेधो न। तेन **आगामी**त्येव प्रयोगार्हम्। वदस्वेत्यत्रात्मनेपदमप्यसाम्प्रतम्। **भासनोपसंभाषे**त्यादिनाऽऽत्मनेपदमिति चेत्। न। नहि भासनोपाधिरिह विवक्षितः। **विवक्षितश्चेद्धासाय स्यात्।**

२१४. मा बध्यासं तरुण्या (नारा० ६३।६)।
२१५. ...कवलधर: कराम्बुजे।
...बुभोजिथ त्रिदशगणैर्मुदा नुत: (नारा० ५१।६)।
२१६. तर्षन्ति भूरि विषयाश्च न लोभपाशा: (नीति० ७५)।
२१७. प्रकृतिप्रियकाम्यया (रा० १।१।२०)।
२१८. महापणस्थ: प्रपणायते स्म (तुलसी० १।२६)।
२१९. परवानस्मि चेत्युक्त: प्रणयिष्यति तेन च (भा० शां० २६६।४६)।
२२०. त्वमेव जह्रषे शिरो दनुजदारिणा स्वारिणा (नारा०८५।६)।

---

२१४. बध्यासमिति बन्धे: कर्मण्याशिषि लिङि रूपमपभ्रष्टम्। माङ्योगे लिङप्यस्थाने। शाब्दिके कविवृन्दारके तु नेदं समभाव्यत। मन्येऽन्यमना: स्वमातुर्यं चिन्तयन्नेवं विन्यास्थत्। मा भन्त्सीति तु विन्यास्यम्।

२१५. भुजोऽनवने (१।३।५६) इत्यनेनात्मनेपदमिष्टम्। बुभुक्षे इति च निर्दुष्टं रूपम्।

२१६. तर्षन्ति। अन्तर्णीतण्यर्थकोत्र तृष्यति:। रूपं तु न सिध्यति।

२१७. अत्र परेच्छायामपि काम्यच्। वार्तिककारस्तु **च्छन्दसि परेच्छायामपि काम्यज् वक्तव्य** इत्याह। न चेदं छन्द:। छन्दोवत्कवय: कुर्वन्तीति समाधिमाहु:।

२१८. प्रपणायत इति दुष्यति। स्तुत्यर्थकादेव पणेरायप्रत्ययो न व्यवहारार्थकात्। अनुबन्धस्य केवले चरितार्थत्वादायप्रत्ययान्तादात्मनेपदं न। पणायति स्तौति।

२१९ प्रणयिष्यति प्रणयं करिष्यति। प्रणयात्प्रातिपदिकात् **तत्करोति** इति णिचि लृटि रूपम्। प्रणयतेस्तु लृटि प्रणेष्यतीति स्यादर्थश्चासंगत: स्यात्

२२०. क्रादिनियमादिटि सति जह्रिषे इत्येव रूपम्।

## इति रूपविवेचनम्

## लकाराधिकारश्चतुर्थः ।

१. अपि याया अपि तिष्ठेः । नाहं ते स्वातन्त्र्यमाच्छिनद्मि ।
२. अप्येतु सागरो वेलाम्, अपि वह्निः शीततां यातु न त्वहं पितुर्वचनमत्ययानि ।
३. आश्चर्यं संस्कृतमतयो द्विजातयोऽप्येवं शास्त्रविधिमुत्सृज्य वर्तन्ते ।
४. अभिजानासि[1] देवदत्त शैशवे पांसुषु सहाक्रीडाव ।
५. गच्छ पुरा वर्षति देवः ! अवस्थास्यसे चेदभ्युक्षिष्येते[2] ते वाससी ।
६. यदि गुरुचरणाः साम्प्रतमागच्छेयुराशंसे युक्तोऽधीयीय[3] ।
७. अपि पतिष्यति जनः पतितैः समीयमानः[4] ।
८. जातु त्वादृशः कुलोद्गतो जन ऋषीन्निन्दिष्यति, नावकल्पयामः[5] ।

---

१. अत्रातिसर्गोऽर्थः । अतिसर्गश्च कामचाराभ्यनुज्ञानम् । तथा चापिरपि तत्रार्थे कर्मप्रवचनीयः प्रयुक्तः । तेन **प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे**त्यनेन लोण्न्याय्यः । अपि याहि, अपि तिष्ठेत्येवं न्यासः कार्यः ।
२. अत्र **सम्भावनेल**मित्यादिना लिङ् प्रयोज्यः । अपिशब्दोऽत्र सम्भावनायां कर्मप्रवचनीयः । अप्यतीयात् सागरो वेलामित्याद्येव साधु ।
३. अत्र चित्रीकरणं गम्यते यच्च यत्रेत्युपपदे च न स्त इति **शेषे लृडयदा**वित्यनेन लृडेव साम्प्रतम् । तेन वर्तिष्यन्त इत्येव साधु ।
४. **अभिज्ञावचने लृट्** इति क्रीडिष्याव इत्येव साधु ।
५. **यावत्पुरानिपातयोर्लट्** इति भविष्यत्यर्थे लट्प्रयोगः साधुः । अत्र पुराशब्दः सन्निहितं भविष्यमाह । अन्यत्र चिरातीतमप्याचष्टे । तथा चामरः पठति —**स्यात् प्रबन्धे चिरातीते निकटागामिके पुरेति** ।
६. **आशंसावचने लिङ्** इति लिङ् साधुः ।
७. अत्रापिशब्दो बाढमित्यर्थमाचष्टे । तेन **उताप्योः समर्थयोर्लिङ्** इत्यनेन लिङ् युक्तः ।
८. **जातुयदोर्लिङ्** इत्यनवक्लृप्त्यर्थे जातुशब्दे उपपदे लिङ्ङेव साधुः । अनवक्लृप्तिरसम्भावनेत्यनर्थान्तरम् । तेन निन्देदिति युक्तं वक्तुम् ।

---

१. स्मरसि । २. अभिषिवते भविष्यतः । उक्ष सेचन इति धातुः । ३. समाहितः, एकाग्रचित्तः । ४. संगच्छमानः । ईङ् गतौ दिवादिः । ५. संभावयामः ।

९. अपि त्वं पर्यविन्दो[1] दारान्, अपि त्वं शूद्रामुदवहः । अहो अन्याय्यमेतत् । अहो गर्ह्यमेतत् ।
१०. योऽयं भृगुवासर आगामी तत्रायं दक्षिणाप्रीकां प्रति प्रस्थाता ।
११. स यावज्जीवमर्थिभ्योऽन्नमददात्, अनाथांश्चान्वगृह्णात् ।
१२. कामो मे भवान्मद्गेहे श्वो भुङ्क्ताम् ।
१३. अहं हि धनुर्भृतां वरं देवदत्तमपि जेष्यामि हेलया, किमुतान्यान् धनुर्धरान् ।
१४. कालोऽयं यद्भवान् दारान्कुरुताम् ।
१५. प्राप्तावसरस्त्वं धनमर्जयेः । पश्चान्निवेक्ष्यसे[2] ।
१६. अहमितोऽहःसु कतिपयेषु बङ्गाञ्जगाम तत्र च चिरं बभ्राम ।

---

९. **गर्हायां लडपिजात्वोरिति** सर्वलकारापवादो लडेवात्र युक्तः । परिविन्दसि, उद्वहसीति च वक्तव्यम् ।

१०. **नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोरित्यनेनानद्यतने** भविष्यति विहितस्य लुटो निषेधाल्लृट एव साधुत्वे प्रस्थास्यत इति वक्तव्यम् ।

११. क्रियाप्रबन्धे क्रिया सातत्ये गम्यमानेऽनद्यतने भूते विहितस्य लङः प्रतिषेधाल्लुङ् प्रयोज्यः । अदात्, अग्रहीत् इति च वक्तव्यम् ।

१२. **कामप्रवेदनेऽकच्चितीति** लिङेव साधुः । सर्वलकारापवादः । तेन भुञ्जीतेति वक्तव्यम् ।

१३. अत्र शक्नोत्यर्थोपाधिको धात्वर्थ इति **शकि लिङ् चेत्यनेन** लिङि जयेयमित्येव साधु ।

१४. **लिङ् यदीत्यनेन** कालशब्दे उपपदे यच्छब्दे च लिङि कुर्वीतेत्येव सुवचम् ।

१५. यदि धनार्जनस्यावसरस्तवागत इति प्राप्तकालतार्थस्तदा प्रैषातिसर्गेत्यादिना लोडेव शक्यः प्रयोक्तुम् । तेन धनमर्जयेत्येवं वक्तव्यम् ।

१६. अत्र पारोक्ष्यं नास्तीति लिटोऽनवकाशः । अगच्छम् अभ्राम्यमिति च वक्तव्यम् ।

---

१. ज्यायांसं भ्रातरं परित्यज्य प्रविन्दः । तस्मिन्नकृतदारे सतीत्यर्थः ।
२. निवेशो विवाहः ।

१७. अपि दोर्भ्यां तरतु पाथोधिमनाविको न त्वहं प्रतिज्ञां त्यजानि ।
१८. स्त्रियोऽपि पुरा निरङ्कुशं तास्ता विद्या अभ्यस्यन्ति स्म ।
१९. दृश्यमानस्तु युध्येथा मया युधि नृपात्मज ! । अद्य वैवस्वतं देवं पश्येस्त्वं निहतो मया (रा० ४।१७।४७) ॥
२०. कच्चित्परीक्षायां सकामः[1] स्याम् ।
२१. अहं चेद् ब्रह्मचारी सन्सर्वमायुरवसं शक्तिमत्तरोऽभूवम् ।
२२. यदि विनेतृजनः प्रमनायतां[2] यदि विनेयगणश्च सुखायताम्[3] । यदि कृती कृतितामिह तायतां कृतिरियं हि तदाऽवितथायताम्[4] ॥
२३. ऋते तु बुद्धिमात्मीयां कः प्रभूयाद् विनिर्णये ?
२४. अयं तु कदाऽध्येष्यते य एवमनभियुक्तः[5] ।

---

१७. **सम्भावनेऽलमि**त्यादिनात्र लिङेव साधुः । तेन तरेत् इति वाच्यम् ।
१८. अत्र भूतानद्यतनेर्थे **पुरि लुङ् चास्मे** इत्यनेन प्रतिषेधेऽपि **लट् स्मे**, **अपरोक्षे** चेति सूत्राभ्यां लट् निर्बाधः । तेन निर्दुष्ट एष न्यासः ।
१९. अत्र क्रियातिपत्तिर्गम्यते लिङो निमित्तं हेतुहेतुमद्भावश्चास्तीति लृङेव साधुरिति पाणिनीयाः ।
२०. **कामप्रवेदनेऽकच्चिती**ति कच्चितः पर्युदासादत्र लिङोऽप्राप्तेर्वर्तमानसमीपे भविष्यति लट् साधुः स्यात् ।
२१. **भूते चे**त्यनेन क्रियातिपत्तौ गम्यमानायां लृङेव युक्तः । तेन अवत्स्यम्, अभविष्यमिति च वक्तव्यम् ।
२२. **हेतुहेतुमतोर्लिङ्** इति लिङ् न्याय्यः । तेन प्रमनायेतेत्यादि निरवद्यं वचः ।
२३. प्रभूयादित्याशिषि लिङि साधु स्यात् । न चात्राशीरर्थः । तेन प्रश्नेऽर्थे **विधिनिमन्त्रणे**त्यादिना लिङि प्रभवेत् इत्येव सुवचम् ।
२४. **परिदेवने श्वस्तनी भविष्यदर्थे वक्तव्ये**ति लुडेव साधुः । तेन अध्येतेति वक्तव्यम् । श्वस्तनीति लुटः पूर्वाचार्यसंज्ञा ।

---

१. समृद्धमनोरथः । २. अप्रमनाः प्रमना भवति इति भृशादित्वात् कर्तरि क्यङ् ।
३. सुखमनुभवेदिति सुखादिभ्यः कर्तृवेदनायाम् इति क्यङ् ।
४. अर्थवती भवेदित्यर्थः ।
५. अनेकाग्रचित्तः ।

२५. अरुणद् यवनः साकेतमिति भाष्यकारः स्माह। तत्र लङ् प्रयोगः किंकृतः।
२६. अद्य श्वो वा गन्तास्मि। अवशिष्यते प्रस्थानसंभारः कर्तुम्।
२७. अद्य ह्यो वा प्रातः शाकमभुञ्जमहीति न सुष्ठु स्मर्यते।
२८. सखेऽन्यत्रमना अहमभूवम्। अन्यथा सभाजनीयं त्वां कथं नासभाजयिष्यम्।
२९. येषां कुसुमानामामोदो न जाने कियन्ति दिवसानि दिशोऽवासयिष्यत् तानि प्रसाधनरसिका अकाल एवावचिन्वन्ति।
३०. कर्णिनी वै भूमिः, विविक्ते कथय, मा कश्चिद्रहस्यं शृणुयात्।

---

२५. **परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्य** इत्यनेनात्र लङ् साधुः। भगवान् भाष्यकारः साकेतरोधेन लोकविज्ञातेन तुल्यकाल इति साकेतरोधो भगवतो दर्शनविषयः सन्नपि देशान्तरे वृत्तेस्तस्य परोक्षोऽभूद् इत्यर्थः। तेनोपपन्नो लङ्।

२६. अनद्यतने लुट् इत्यत्रानद्यतनशब्दो बहुव्रीहिः। अविद्यमानोऽद्यतनोऽत्र। तेन व्यामिश्रे लुण्न भवतीति अद्य वा श्वो वा गमिष्यामीति वक्तव्यम्।

२७. अनद्यतने लङ् इत्यत्राप्यनद्यतन इति बहुव्रीहिनिर्देशः। तेन व्यामिश्रे लङ् नेति अभुक्ष्महीति लुङि् वाच्यम्।

२८. अत्र हेतु हेतुमद्भावो नास्तीति क्रियातिपत्तौ सत्यामपि लृङ् नोपपन्नः। कथं न सभाजयिष्य इति वक्तव्यम्। एष व्यवहारः। अत्रार्थे हेतुप्रपञ्चस्तु वाग्व्यवहारादर्शे लकारचिन्तायां द्रष्टव्यः।

२९. अत्रापि वाक्ययोर्हेतु हेतुमद्भावो नास्तीति क्रियातिपत्तौ गम्यमानायामपि लृङ् दुर्लभः। वासयिष्यतीति तु वक्तव्यम्। भविष्यती वासनक्रिया तत्कालं बुद्ध्याऽगृहीतत्वात्। **यत्रापि लृङ् प्रयुज्यते तत्रोभयोर्वाक्ययोस्तस्य प्रयोगो दृश्यते न त्वेकत्रेत्यन्यदेतत्।**

३०. **माङि लुङ्** इति माङ्युपपदे सर्वलकारापवादो लुङ् शिष्टः सूत्रकारेण, व्याख्यातश्च भाष्यकारेण। माशब्दोऽप्यस्ति प्रतिषेधार्थकः, तत्प्रयोगे लोडपि निर्बाध इत्याहुः। **अर्वाक्कालानामपप्रयोगाणां साधुत्वप्रक्लृप्तये यत्नमात्रमेतदिति वयम्।**

३१. यदि वर्षसहस्रं जीवेयं तदा पुत्रशतं जनयेयम ।
३२. मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् (रा०) ।
३३. अथाहं प्रसन्नस्तं निजगाद साधो बहूपकृतोऽस्मि, नाहं तेऽनुग्रहं विस्मरिष्यामि ।
३४. वेलेयं यत्पाठालयं गच्छेम ।
३५. तत्र समये तादृशं व्यवसायमनुसरन्कश्चित्कथं नाम धनिकोऽभविष्यत् ।
३६. लज्जा तिरश्चां यदि चेतसि स्याद् असंशयं पर्वतराजपुत्र्याः ।
तं केशपाशं प्रसमीक्ष्य कुर्युर्वालप्रियत्वं शिथिलं चमर्यः (कु०) ॥
३७. गामधास्यत्कथं नागो मृणालमृदुभिः फणैः । आ रसातलमूलात्त्वमवालम्बिष्यथा न चेत् ॥
३८. न हि ग्रन्थकारः संमूढोऽभूत्, यत्स्वमतेन विरुद्धमलेखिष्यत् ।
३९. प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो (कु०) ।

---

३१. अत्र **लिङ्निमित्ते लृङ् क्रियातिपत्तावित्यनेन** भविष्यति काले लृङेव युक्तः । स्पष्टा चात्र क्रियातिपत्तिः । न वर्षसहस्रं जीविष्यामि न च पुत्रशतं जनयिष्यामीत्यर्थः । असम्भवात् ।
३२. **स्मोत्तरे लङ् चेत्यनेन** लङ् वा साधुः स्याल्लुङ् वा । मा स्म जनयत्, मा स्म जीजनद्वेति वक्तव्यम् ।
३३. अत्र पारोक्ष्यं नास्तीति न्यगदं न्यगदिषमिति न्यगादिषमिति वा वक्तव्यम् ।
३४. **लिङ् यदीति** लिङ् प्रयोगः साधुः । तुमुनोऽपवादः ।
३५. धनिको भवेदिति न सम्भाव्यत इत्यर्थात् **अनवक्लृप्त्यमर्षयोरकिंवृत्तेपि** इत्यनेन लिङ्वा प्रयोज्यो लृङ् वा । अत्र नामेति सम्भावनायां निपातः ।
३६. क्रियातिपत्तेरविवक्षितत्त्वादत्र हेतुहेतुमतोर्लिङ् साधुः । **विवक्षा हि शब्दव्युत्पत्तेः प्रधानं कारणं न वस्तुसत्ता । तदाद्याचिख्यासायामिति सना ज्ञापितत्वात्** ।
३७. अत्र क्रियातिपत्त्यभावाल्लृङ्प्रयोगश्चिन्त्य इति टीकाकाराः ।
३८. अत्र लिखेत्, लेखिष्यतीति वा वक्तव्यम् । उक्तपूर्वो हेतुः ।
३९. लडर्थे लृट्प्रयोगो व्यवहारानुगत इति वाग्व्यवहारादर्शे लकारचिन्तायां वितत्य प्रतिपादितमिति तत्रैव द्रष्टव्यम् ।

४०. तदयमपि हि त्वष्टुः कुन्दे भविष्यति चन्द्रमाः (अनर्घ० २।८०) ।
४१. न भविष्यति हन्त साधनं किमिवान्यत् प्रहरिष्यतो विधेः (रघौ ८।४४) ।
४२. कालोऽयं कलिराजगाम जगतीलावण्यकुक्षिम्भरिः ।
४३. परिघोरुभुजानाह हसन्ती स्वागतं कपीन् (भट्टौ) ।
४४. नहि कश्चिदन्त्यजोऽद्यापि प्रविवेश निषिद्धान्त्यजप्रवेशानि देवतायतनानि ।
४५. बहु जगद पुरस्तात्तस्य मत्ता किलाऽहम् (शिशु० ११।३९) ।
४६. सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग्भवेत् ।
४७. व्यातेने किरणावलीमुदयनः ।
४८. ब्रह्मा वा लिखताल्लाटफलके कृच्छ्रामवस्थां दृढम् (करुणा० ५९) ।

---

४०. अयमपि लृट्प्रयोगः शिष्टैरभ्यनुज्ञातोऽशिष्टोऽपि शास्त्रेणेति वाग्व्यवहरादर्शे निर्णीतम् ।
४१. अयमपि पूर्वेण तुल्ययोगक्षेम इति न पृथग्विचार्यते ।
४२. इदमा निर्देशात् । संनिहितः कालोऽपरोक्षश्चेति लुङो विषयः । आगमद् इति वक्तव्यम् ।
४३. वर्तमाने ब्रुव आहादेशो विहितः । अत्र च भूतकालविषया क्रियेत्यस्थाने लट् प्रयोगः । कवयश्च बहुशः प्रयुञ्जते । तत्र वर्तमानताध्यासेन व्याख्येयम् । अन्यथा स्मशब्दोऽधिकः प्रयोक्तव्यः ।
४४. अद्यापीत्युक्तेर्नायं लिटो विषयः । तेन प्रविशतीति वक्तव्यम्, प्राविक्षदिति वा ।
४५. चित्तविक्षेपादिनापि पारोक्ष्यं भवतीति लिट्प्रयोगः सर्वथोपपन्नः । किलेति वार्तायाम् । तथा चोत्तरार्धे विदितमिति सखिभ्य इति श्रूयते ।
४६. माङि लुङिति सर्वलकारापवादभूतेन लुङा भवितव्यम् ।
४७. आत्मकृतिमधिकृत्याह उदयनाचार्यः— व्यातेने किरणावलीमुदयन इति । किरणावलीप्रणयनेनैककालस्योदयनस्य तत्प्रणयनक्रिया नानद्यतनी न च परोक्षा (ऋते चित्तविक्षेपात्) । तेन व्यातत व्यातनिष्टेति वा वक्तव्यम् ।
४८. लिखतादित्याशिषि तातङ्ङस्थाने । आशीरर्थस्याविवक्षितत्वात् ।

४९. ततोऽहं…चिच्छेद सायुधान् राजन् शतशोऽथ सहस्रशः (भा० वन० १७०।१४) ।

---

४९. छेदने चित्तविक्षेपादिना पारोक्ष्यं नास्तीति लिटोऽप्रसङ्गः । यत्तु अजानतैव एतन्मया कृतमिति शत्रूणापकर्षः सूचित इति नीलकण्ठ आह तदपि वार्तम् । न ह्यसौ च्छेदमपजानीते, द्विषत्सामर्थ्यमेवावजानाति । तदवजानन् द्विषतश्चिच्छेद इति नीलकण्ठोक्त्यभिप्रायात् ।

## इति लकारार्थविवेचनम् ।

## सकर्मकत्वाकर्मकत्वाधिकारः पञ्चमः

१. अथ केन कालेन चलित[1]स्त्वयैष पन्थाः ?
२. ये गतं रुदन्ति ते सततं रुदन्ति ।
३. परकीयमर्थं लुभ्यन्नात्मनः पातित्यमेव साधयसि केवलम् ।
४. कदा मां पुनर्मेलिष्यसि । कामो मे न त्वं चिरयेः ।

---

१. चल कम्पने इति भ्वादिषु, चल विलसने इति तुदादिषु पठ्यते । तेनार्थानुरोधादुभयोऽपि धातुरकर्मकः । तथा च शिष्टव्यवहारः । तेन गतः, अतिक्रान्त इति वा वक्तव्यम् ।
२. रुदिर् अश्रुविमोचन इत्यर्थनिर्देशे कर्मण उपसंग्रहादकर्मको धातुः, तथापि धात्वन्तरान्तर्णयात्सकर्मको भवति । तथा च भट्टौ प्रयोगः—**रोदिम्यनाथमात्मानम्** (१८।३०) इति । प्रकृते गतं चिन्तयन्तो रुदन्तीत्यर्थः । अनुशोचन्तीति भावः ।
३. लुभ गार्ध्ये इति दिवादिषु पठ्यते । शिष्टव्यवहारेऽकर्मकोऽयमिति दर्शितमन्यत्र विस्तरेण । तेन परकीयेऽर्थे इति सप्तमी प्रयोक्तव्या ।
४. मिल श्लेषण इति तौदादिकः । श्लेषणमिति श्लिषेर्ल्युटि रूपम् । श्लिषिश्चाकर्मक इत्यभ्युपगमः । तेन मिलतिरप्यकर्मक एवेति स्थितम् । तस्मान्मया सह मेलिष्यसीत्येवं वाच्यम् ।

---

१. अतिक्रान्त इत्यर्थो विवक्षितः ।

५. अतिमात्रं स्निह्यत्यम्बा शिशुकम् । नित्यं च शङ्कते माऽस्यानिष्टोपनिपातो भूत् ।
६. स पापो यः परकीयमर्थं गृध्यति । गर्धो हि पापस्य मूलम् ।
७. यत्र वातो नेङ्गति तत्र तरवो न धुन्वन्ति ।
८. प्रीताः प्रजाश्च सम्प्रेक्ष्य प्रीणाति परमेश्वरः ।
९. निरायुधेषु दुर्बलेष्ववस्कन्दन्नरो राध्यति नरकाय ।
१०. अथ केन वृत्तिमकल्पयथा इति गुरुणाऽनुयुक्त[1] उपमन्युर्गवां पीतशेषेण पयसेति प्रत्याह ।

---

५. ष्णिह प्रीताविति दिवादिः । प्रीतिरिति प्रीङः क्तिनि रूपम् । प्रीङयमकर्मक इति वितत्य निदर्शितम् । तेन स्निह्यतिरप्यकर्मक एवेति व्यवस्थितम् । तस्माच्छिशुक इति सप्तमीनिर्देशः साधुः ।
६. गृधु अभिकाङ्क्षायामित्यर्थनिर्देशो भ्रमकः । शिष्टव्यवहारेऽकर्मकोऽयं धातुरिति वाग्व्यवहारादर्शे न्यक्षेण निर्दशितम् । तेन परकीयेऽर्थे गृध्यतीति वक्तव्यम् ।
७. धुञ् कम्पने, स्वरतिसूतीत्यादिसूत्राज्ज्ञापकाद्दीर्घान्तोऽपि स्वादिरेष धातुः । दीर्घान्तश्च तुदादौ क्र्यादौ चुरादौ च पठ्यते । सर्वत्र चायं सकर्मक इति **धुनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् । वायुर्विधूनयति चम्पकपुष्परेणून् यत्कानने धवति चन्दनमञ्जरीश्च** ।। इति **कविरहस्य**पद्यात् स्पष्टम् । अर्थनिर्देशे कम्पनमिति कम्पयतेर्ल्युटि रूपं द्रष्टव्यम् । तेन तरवो न कम्पन्ते न चलन्तीति वा वक्तव्यम् ।
८. प्रीञ् तर्पण इति क्र्यादिः सकर्मकः । प्रीञ् तृप्ताविति नोक्तम् । अत एव **इगुपधज्ञाप्रीकिरः क** इत्यत्र प्रीणातीति प्रिय इति प्रीञो व्युत्पत्तिर्दर्शिता न प्रीङः । तेन प्रीयत इति वाच्यम् ।
९. स्कन्दिर् गतिशोषणयोरिति भूवादिरकर्मक उपसर्गवशादर्थान्तरे वर्तमानः सकर्मको भवति । अवपूर्वोऽयं सकर्मक इति **विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोरि**ति सूत्रे वृत्तौ **गेहं गेहमवस्कन्दमास्त** इत्युदाहरणात्स्पष्टम् । तथा च **पुरीमवस्कन्द लुनीहि नन्दनमि**त्यादिः (शिशु० १।५१) सिध्यति ।
१०. कृपू सामर्थ्ये इत्यकर्मकः तेन णिच्सहकारेण कल्पयिष्यसीति वक्तव्यम् ।

---

१ पृष्टः ।

११. किं ते स्वादन्तेऽमी मोदका आहोस्विन्न । मह्यं तु बहुतरं स्वदन्ते ।

१२. इयं हि संस्कृतं नाम दैवी वाक् । अनया वयमुपजीवामः प्रतिष्ठां च लोकेऽधिगच्छामः ।

१३. पुरा किल पराबभूविरेऽसुराः सुरैः । अतिमानो हि तेषां पराभवे हेतुरुच्यते ।

१४. देवदत्तायेक्षते दैवं गर्गः ।

१५. ततः प्राप्ते वैजनने मासि राज्ञी पुत्रमजायत ।

१६. लुलोप वर्णभेदः, सर्वं च संकुलमिव बभूव ।

१७. ते महर्षयो वर्णनामाश्रमाणां च धर्मानादौ शिशिक्षिरे सुखं लोकयात्रां निर्वहन्तु लोका इति ।

---

११. स्वाद आस्वादन इति नित्यं सकर्मकः । स्वदिरप्यास्वादनेऽनुभवे सकर्मकः, रुचावकर्मक इति दीक्षितः । तेन पूर्ववाक्येऽपि स्वदन्त इत्येव प्रयोज्यम् ।

१२. जीव प्राणधारण इति धात्वर्थेन कर्मण उपसंग्रहादकर्मकः, उपसर्गवशात्तु सकर्मको भवति, अर्थान्तरं चार्पयति । उपजीवनमाश्रयणमित्यर्थान्तरम् । तेन इमां वयमुपजीवाम इत्येव साधु ।

१३. परापूर्वो भवतिरकर्मकः प्रायेण पराजयप्राप्तौ विनाशे च वर्तते । तथा च भाष्यप्रयोगः—**तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुरिति** । परिपूर्वस्तु नियमेन सकर्मकः ।

१४. **राधीक्ष्योर्यस्य विप्रश्न** इत्यत्र ईक्षतिर्दैवपर्यालोचने वर्तते इति धात्वर्थेन कर्मणो दैवस्योपसंग्रहादकर्मकः । तेन वाक्ये दैवमिति न प्रयोक्तव्यम् ।

१५. जनी प्रादुर्भाव इत्यकर्मको धातुः । तेन पुत्रमजनयत् इति वाच्यम् । पुत्रं व्यजायतेति वा वाच्यम् । अत्र शिष्टानुग्रहोऽस्तीति नास्यासाधुत्वमतिशङ्कनीयम् । अन्तर्भावितण्यर्थोऽयमिति व्याख्येयम् ।

१६. लुप्लृ च्छेदन इति तुदादिरर्थनिर्देशादेव व्यक्तं सकर्मकः । तेन कर्मणि लुलुपे इति वा वाच्यं ननाशेति वा प्रयोक्तव्यम् ।

१७. शिक्ष विद्योपादाने सकर्मकः । प्रकृते प्रयोजकव्यापारोऽपेक्षित इति णिचि शिक्षयामासुरिति पठनीयम् ।

१८. योऽयं हव्यवाहने हव्यप्रक्षेपः क्रियत स शूक्ष्मीभूय विस्तीर्य[1] च मातरिश्वानं व्यश्नुते ।
१९. न हि सुनिपुणोऽपि स्वस्कन्धे आरोढुं क्षमः ।
२०. तस्माद्युग्मासु पुत्रार्थी संविशे[2] दार्तवे स्त्रियम् । (मनु० ३।४८)।
२१. ये ब्रह्मचर्यं चरन्ति ते ब्रह्मवर्चसेन संयुवन्ति ।[3]
२२. वृक्षशाखास्ववलम्बमानानि वल्कवासांसि[4] सूचयन्त्याश्रमपदमेतदिति ।
२३. अवलम्बस्व मां प्रभो ! त्वामेवाहमवलम्बे ।
२४. स्वकं गेहकं विहाय नदीकूलमुपशेषे । किं कलत्रेण कलहायितोऽसि ?

---

१८. स्तृञ् आच्छादने । अर्थनिर्देशादेवायं सकर्मकः । तेन विस्तीर्णो भूत्वेत्यादि वक्तव्यम् ।
१९. रुह बीजजन्मनीति भ्वादिरकर्मकः । आङ्पूर्वस्तु नित्यं सकर्मकोऽर्थान्तरे वृत्तेः । तेन स्कन्धमारोढुमिति वक्तव्यम् ।
२०. स्वापार्थः संविशतिरकर्मको न त्वर्थान्तरे वर्तमानोऽपि । प्रकृते च (तया) संप्रयुज्येत ताँ गच्छेदित्यर्थः । तेन स्त्रियमिति कर्म युज्यते ।
२१. यु मिश्रणाऽमिश्रणयोरिति यौतिः प्रायेण सकर्मकः । तेनात्मानमिति शेषोऽत्र बोध्यः । वेदे त्वकर्मकोऽपि यौतिर्दृष्टः । तथा च बह्वृचाः पठन्ति—**अधा स वीरैर्दशभिर्वि यूयाः** (ऋ० ७।१०४।१५) इति ।
२२. रबि लबि अबि शब्दे । लबि अवस्रंसने चेति धातुपाठः । तेनाकर्मकोऽयमिति मुक्तसंशयं शक्यं वक्तुम् । तेन प्रकृतेऽदोषः ।
२३. अत्रावपूर्वो लबिर्धारण आश्रयणे च वर्तत इति युज्यतेऽस्य सकर्मकता ।
२४. शीङ् स्वप्न इत्यकर्मकः, उपोपसृष्टस्तु सकर्मको भवतीत्यत्र **उदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुप शेष** एहि (१०।१८।८) इत्यृक् प्रमाणम् ।

---

१. विस्तीर्णो भूत्वेति बिवक्षितम् । २. सह शयीत । ३ संयुञ्जन्ति । ४. त्वग्वस्त्राणि ।

२५. तदानीमार्यावर्तं सौगता भिक्षवो व्यानशिरे[1], विहारांश्च यत्र तत्र निर्ममिरे ।
२६. इह भारते संन्यासमार्गः कदा प्रारभतेति सहसा वक्तुं न पारयामः ।
२७. भूविचाले कदाचिच्छिखरिशिखराण्यपि भङ्क्त्वा निपतन्ति ।
२८. ये महात्मभिरपि समं विरुन्धन्ति विरुन्धन्ति ते आयतिकं[2] स्वमभ्युदयम् ।
२९. येन प्रदेशेन प्रवणेन[3] नद्यामवतरति सोऽवतार इति वा तीर्थमिति वोच्यते ।
३०. यष्टिभिर्लगुडैः पाषाणैश्च भायिताः शाखामृगा वृक्षेष्वारोहन्ति सद्यः ।
३१. दण्डात्कथं नाम मुञ्चेमेति मृगयन्ते हेतूनागस्विनः[4] ।

---

२५. अशू व्याप्ताविति धातुः सकर्मको व्याप्यस्य कर्मणोऽपेक्षितत्वात् । तेनार्यावर्तमिति वक्तव्यम् ।
२६. रभ राभस्य इति नित्यं सकर्मकः । तेन कर्मणि प्रारभ्यतेति साधु स्यात् ।
२७. भञ्जो आमर्दन इति धातुः । अस्यार्थनिर्देश एव तथाऽभूद्यथास्य सकर्मकत्वे संदेह एव नोदेति । तेन भग्ना भुक्त्वेति वक्तव्यम् ।
२८. रुधिर् आवरण इति नित्यं सकर्मकः । तेन महात्मनो विरुन्धन्तीत्येव साधु । विरोधशब्दप्रयोगे तु साहचर्यमपि विवक्षन्ति व्यवहारविदः । **समुन्नयन्भूतिमनार्यसङ्गमाद् वरं विरोधोपि समं महात्मभिः** (कि०) इत्यत्र यथा ।
२९. अवतरतेर्गत्यर्थत्वात्सकर्मकत्वमभ्युपेयते । तथा सत्यप्यधिकरणविवक्षया नद्यामिति साधु स्यादिति चेन्मैवम् । **लौकिकी हि विवक्षा प्रभवति न प्रायोक्त्री** । लोकश्चात्र कर्मैव विवक्षति नाधिकरणमिति कविप्रयोगेषु व्यक्तम् । तेन नदीमवतरतीति वक्तव्यम् ।
३०. वृक्षानारोहन्ति इत्येव साधु । उक्तो हेतुः ।
३१. मुच्लृ मोक्षणे तुदादिः । मोक्षयतिः सकर्मकः । **मोक्षयिष्यामि मा शुच** इत्यादिप्रयोगदर्शनात् । तेन मुञ्चतिरपि सकर्मकः । **मुचोऽकर्मकस्य गुणो वा** (७।४।५७) इति सूत्रं तु मुचेरकर्मकतामपि

---

१. व्याप्नुवन्ति स्म । २. आयतौ भवम् । आयतिरुत्तरकालः । ३. निम्नेन । ४. आगोऽपराधः, तद्वन्तः ।

३२. अतृणे पतितो वह्निः स्वयमेवोपशाम्यति, न च समिन्धितुं शक्नोति ।
३३. वत्स ! आगमयस्व तावत्, रध्यत्योदनः ।
३४. बहवो रक्षापुरुषा युगपदेव लुण्टाकस्य शरण[1] आक्रमिषुः ।
३५. कण्डूयते मे पादतलम् । ब्रूहि किमिवाऽस्य फलं भविष्यति ।

---

शब्दत आह । अकर्मकत्वे तावदल्पे शिष्टप्रयोगाः । तेन कर्मणि मुच्येमहीति वक्तव्यम् । **बाढं मोक्षते मोक्तुमिच्छतीति विग्रह-वाक्येऽकर्मकत्वं दृष्टम् । इयं सा मोक्षमाणानामजिह्मा राज-पद्धतिः** (वा० प० १।१६) इति हर्युक्तौ च ।

३२. ञिइन्धी दीप्ताविति रुधादिषु पठ्यते । अर्थनिर्देशादयमकर्मक इति शक्यमन्यथाध्यवसातुम् । **धातुपाठेऽर्थनिर्देशो यत्र तत्र परिष्कारमर्हतीति** व्याकरणचन्द्रोदये तृतीये खण्डेऽस्माभिरुदा-हृतम् । प्रयोगेऽयं धातुर्नित्यं सकर्मकः । **तमु त्वा पाथ्यो वृषा समीधे दस्युहन्तमम्** (ऋ० ६।१६।१५) । **तमु त्वा दध्यङ्ङृषिः पुत्र ईधे अथर्वण** (ऋ० ६।१६।१४) इत्यादिषु **भ्राष्ट्रमिन्धः, अग्निमिन्ध** इत्यादिषु च तथा दर्शनात् । तेन प्रकृते प्रज्वलितुं दीपितुमिति वा वक्तव्यम् । श्यन्विकरणस्तु सूत्रेष्वकर्मकोपि दृष्टः तेनेध्यस्व (आश्व० गृ० १।१०।१२) इत्यत्र । कर्मकर्तरि वा प्रयोगो द्रष्टव्यः ।

३३. आगमयस्वेत्यस्य मा त्वरिष्ठा इत्यर्थः । तेनास्याकर्मकताऽसन्दि-ग्धा । **आगमेः क्षमायामिति** तङ् । रध हिंसासंराद्ध्योरिति दिवादिः संराद्धावर्थेऽकर्मकः ।

३४. शरणमाक्रमिषुरित्येव साधु । शरणं गृहम् । आक्रमणमास्कन्द-नमित्यनर्थान्तरम् । तेनाआङ्पूर्वः क्रमिः सकर्मकः । अन्यत्रो-र्ध्वगमनेऽर्थे वर्तमानस्त्वकर्मको दृष्टः । **आक्रमते सूर्यः** ।

३५. कण्डूञ् गात्रविघर्षण इति कण्ड्वादिः । अत्र धात्वर्थेन कर्मण उपसंग्रहादकर्मकोऽयं धातुरिति जायते भ्रमः । परमयं सकर्मक इत्यत्र कवीनां प्रयोगाः प्रमाणम् । तथा च कविकुलपतिः कालि-दासः प्रायुङ्क्त—**कण्डूयमानेन कटं कदाचित्** (रघौ २।३७) । **मृगीमकण्डूयत कृष्णसारः** (कु० ३।३६) शृङ्गे **कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्** (६।१७) इति च शाकुन्तले । मनुस्मृतावपि-

---

१. गृहे ।

३६. अत्रावधत्त भोश्छात्राः श्वो ये काले न संनिधास्यन्ते ते दण्डयिष्यन्ते ।
३७. पूर्वे हि दीनेषु दुर्गतेषु च सविशेषमनुचकम्पिरे ।
३८. शिशू पितुरङ्कमुपविष्टौ किमपि वाङ्मनसागोचरं सुखं निर्विशतः ।
३९. विप्रवत्स्यता तनयेनाश्लिष्यच्छोकपर्याकुला साश्रुनेत्राऽम्बा, मुक्तकण्ठं चारोदीत् ।
४०. इमे रथचर्यायां चिरमभ्यस्ता अश्वारोहेण चाद्वितीयाः ।
४१. अयं ते क्लेशानुभवो गच्छता कालेन लोप्स्यति ।

---

**न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिर** इति (४।८२) । तेन कण्डूल मे पादतलमिति वक्तव्यम् ।

३६. अवपूर्वो धाञ् प्रायेणाकर्मकः कविप्रयोगेषु दृष्टः । अवधत्त अवधानं दत्तेत्यर्थः । अधो निधाने तु सकर्मकः । समीपीभवनेऽर्थे संनिधाञप्यकर्मकः । तथा च बालरामायणे प्रयोगः—**वाङ्मर्तिर्मे देवता सन्निधत्तामिति** । अर्थान्तरे तु सकर्मकः । (दृष्टिं) पुनः सहस्रार्चिषि संनिधत्ते **(**रघु० १३।४४**)** इत्य**त्र** यथा ।

३७. अनुपूर्वः कपि चलन इति धातुः कवि-प्रयोगेषु सकर्मको दृष्टः । तेन दीनान् दुर्गतान् इति वक्तव्यम् । कामं महाभारते **सौहृदेन तथा प्रेम्णा सदा मय्यनुकम्पसे** (आश्व० २।१०) इत्यत्राकर्मकोपि विलोक्यते ।

३८. उपपूर्वो विशतिरकर्मक आसने वर्तमानः । तेन पितुरङ्के उपविष्टाविति वाच्यम् । **प्रायमुपविशतो**त्यादिषु सकर्मकोपि ।

३९. आङ्पूर्वः श्लिषिः सकर्मकः, केवलस्त्वकर्मक इति पूर्वमवोचाम । स्पष्टं चैतद् **गत्यर्थाकर्मकश्लिषशीङ्** इति सूत्रे वृत्तौ । तेन विप्रवत्स्यन्तं तनयमाश्लिष्यदित्येव शोभनं वचः ।

४०. अभ्यस्यतिः सकर्मकः, यथा केवलोऽस्यतिः । **रोमन्थमभ्यस्यती**त्यादिषु दर्शनात् । तेन चिरमभ्यस्तरथचर्या इति वा समासेन, चिरं रथचर्यामभ्यस्तवन्त इति वा व्यासेन वक्तव्यम् ।

४१. लुप्लृ छेदन इति सकर्मकः । **अर्थनिर्देश एव तथात्वस्य ज्ञापकः ।** तेन कर्मकर्तरि लोप्स्यत इति वक्तव्यम् ।

४२. यः परान्मीनाति[1] स स्वयं किं न मीयते[2] ?
४३. असन्तोऽपि सद्भिः सह संघृष्य शक्ता आत्मानमुन्नमयितुम् ।
४४. यदा तमोगुण उद्रिणक्ति[3] तदा सत्त्वं रजश्च तिरोभवतः ।
४५. [4]कालिकमिदं सदनं सम्प्रति विशीर्णम् इति पुनर्निर्माणमर्हति ।
४६. विपुलेयं भूर्नानामतैर्नानावृत्तैर्नानाभाषैर्मनुष्यैरुषितेति महद्वैचित्र्यम् ।
४७. न हि मलयचन्दनतरुः परशुप्रहृतः स्रवेत् पूयम् ।
४८. संसृज्यते घृतं शर्करयाऽभ्यागतं भोजयिष्यामीति ।

---

४२. मीञ् हिंसायां क्र्यादिः सकर्मकः, मीङ् हिंसायां दिवादिरकर्मक इति व्याकरणचन्द्रोदये सप्रमाणं निदर्शितम् । तेन सर्वथा निर्दुष्टोऽयं न्यासः ।
४३. घृषु संघर्षे इति भ्वादिः सकर्मकः । **घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धम्** इत्यादिषु दर्शनात् । स्पर्धार्थे त्वकर्मको दृष्टः । तथा च कालिदासे प्रयोगः—**प्रयोगनिपुणैः प्रयोक्तृभिः संजघर्ष स मित्रसंनिधौ** (रघु० १३।३६) ।
४४. रिचिर् विरेचने, रिच वियोजनसंपर्चनयोरिति धातू उभावपि सकर्मकौ । तेन कर्मकर्तरि उद्रिच्यत इति वक्तव्यम् । उद्रिक्तोऽभ्यधिको भवतीत्यर्थः ।
४५. शॄञ् हिंसायामिति प्रायेण सकर्मकः । शृणाति हिनस्तीति शरुरिति व्युत्पत्तेः । **शरारुर्घातुको हिंस्र** इति कोषाच्च । कविभिस्तु क्वचित्क्वचिदकर्मकत्वेनापि प्रयुक्तः । तथा च **विशरारोर्जटाकलापस्येति** श्रीहर्षचरिते । स्वयं विशीर्णद्रुमपर्णवृत्तितेति कुमारे । तेन सदनं विशीर्णमिति न दूष्यम् । कर्मकर्तरि वा शृणातेः प्रयोगो द्रष्टव्यः ।
४६. वस निवासेऽकर्मकः । तेन सकर्मकत्वलाभायाधिपूर्वः प्रयोक्तव्यः । अध्युषितेति वक्तव्यम् ।
४७. स्रवतिरत्रान्तर्णीतण्यर्थो वेदितव्यः । स्रावयतीत्यर्थः । बहुलं चैष एवं प्रयुज्यत इति वाग्व्यवहारादर्शे प्रपञ्चितम् ।
४८. सृज विसर्गे तुदादिः सकर्मको दिवादिरकर्मकः । अत्र तुदादेः सम्पूर्वस्य सृजेः कर्मणि लटि प्रयोगो बोध्यः ।

---

१. मीञ् हिंसायाम् । २. मीङ् हिंसायां दिवादिः ।
३. उद्रिक्तोऽधिको भवतीत्यर्थो विवक्षितः । ४. प्रकृष्टकालं चिरन्तनम् ।

४९. नाम्नैव शिष्टवति रुग्णजने किमाश्वासकेन भिषग्जल्पितेन ।
५०. अल्पपरिवारोऽभीतवन्निर्याति मृगयां राजा ।
५१. चिरं मृगयां क्रीडति स राजा, नावेक्षते स्वस्य हितं न च प्रजानाम् ।
५२. नवनीतं चोरयित्वा मातुरपह्नुते कृष्णः ।
५३. दुनोति पातकं स्मृत्वा पितुर्मम महात्मनः (देवीभा० ८।३।८६) ।
५४. वाता वान्ति दिशो दश ।
५५. मा न श्लिक्षः प्रियं प्रिये (भट्टि० ६।१६)
५६. प्राज्वालीत्सत्प्रदीपान् (मोह० ४।१) ।
५७. पुप्लोष कामज्वरे (मोह० ५।१८) ।

---

४९. शिष असर्वोपयोग इति चुरादिष्वाधृषीयः । अयं सकर्मक इत्यसन्देहः । तेन कर्मणि क्तः प्रयोक्तव्यो न कर्तरि क्तवतुः ।
५०. मृगयामुद्दिश्य निर्यातीत्यर्थः । अन्तर्णीतक्रियान्तरा अपि धातवः प्रयुज्यन्त इत्युदाहरणैरन्यत्र स्पष्टीकृतम् ।
५१. अत्रापि पूर्व एव हेतुरिति साधुत्वमनभिशङ्कनीयम् ।
५२. ह्नुङ् अपनयन इति धातुः । अपनयतिः सकर्मकः, तेन ह्नुरपि । आत्मानमिति शेषो बोध्यः ।
५३. टुदु उपतापे स्वादिः सकर्मकः । दूङ् परितापे दिवादिरकर्मकः । स प्रयोक्तव्यः । दूये इति वक्तव्यम् ।
५४. गत्यर्थका अविवक्षितकर्माण एवाकर्मका भवन्ति, उत्सर्गस्तु सकर्मका इति वातिरिह सकर्मकः ।
५५. श्लिषिरिह सकर्मकः प्रयुक्तः । काशिकायां गत्यर्थाकर्मकेति सूत्रे त्वकर्मकः स्थितः । आङ्पूर्वस्तु प्रयोक्तव्यः । सोपसर्गकः सकर्मको भवति ।
५६. प्राज्वालीत्सत्प्रदीपान् इति दुष्टो न्यासः । ज्वल दीप्तावकर्मकः । धात्वर्थनिर्देश एवाकर्मकत्वस्य गमकः, व्यवहारश्च ।
५७. पुप्लोष कामज्वरे । अयमपि सदोषो न्यासः । प्लुष दाह इति धातुः । दाहश्च भस्मीकरणं न तु भस्मीभवनम् ।

५८. विधेयत्यलं स्वामिनं भूतनाथम् (मोह० २।१०) ।
५९. न जिन्वति द्वन्द्वरतौ च कामम् (मोह० ७।३३) ।
६०. को नो भास्करसन्निधौ विकचति प्रातः सरोजोत्करः
(मोह० ४।१७) ।
६१. स नोऽकारणं शत्रूयति ।
६२. कच्चिच्च् चास्मान् प्रीयसे धूमकेतो (भा० आश्व० ९।१३) ।
६३. कच्चिन्मनस्ते प्रीणाति वनवासे नराधिप (भा० आश्रम० २८।२) ।

---

५८. विधेयति स्वामिनम्—अयमपि दुःसमाधानो न्यासः । विधेय इवाचरतीति विधेयति । आचारे क्विप् । **सर्वप्रातिपदिकेभ्य आचारे क्विब्वा वक्तव्य** इति तद्विधायकं वार्तिकम् । **नायं सुबन्तात्कर्मणो विधिः** । स चेत्स्यात्स्वामिनं विधेयी करोतीत्यनर्थः स्यात् । स्वामिनि इति सप्तमी तु शक्या प्रयोक्तुम् ।

५९. जिवि प्रीणने इति सकर्मकः । अर्थनिर्देशो हि सकर्मकत्वस्य ज्ञापकः । **भूमिं पर्जन्याः जिन्वन्ति दिवं जिन्वन्त्यग्नय** (ऋ० १।१६४।५१) इत्यादिषु सकर्मकत्वदर्शनाच्च ।

६०. विकचति सरोजोत्करः । अत्र विकचतीति विकसतीत्यर्थे प्रयोगः । कच बन्धने सकर्मकः । **तस्य विपूर्वस्य तिङि प्रयोग एव नास्ति** । कृति तु विकच इति प्रचुरः प्रयोगः । इदं शब्दस्वाभाव्यम्, न शक्यमन्यथयितुम् । व्याकरणं ह्यन्वाख्यानस्मृतिः । **व्याकरणेन हि शब्दा व्युत्पाद्यन्ते नोत्पाद्यन्त** इति प्रस्मरन्ति नूतनशब्दनिर्मित्साप्रयुक्ताः प्रयोक्तारः ।

६१. शत्रूयति नः । न इति द्वितीयान्तम् । उपमानकर्मणः क्यजन्तधात्वर्थेऽन्तर्भावाद् रोदितिवदकर्मकत्वं कुतो न ? अत्र भाष्यकार इमं समाधिमाह—द्वे ह्यत्र कर्मणी । उपमानकर्म उपमेयकर्म च । उपमानकर्म अन्तर्भूतम् । उपमेयकर्मणा सकर्मको भवति ।

६२. प्रीङ् प्रीतावकर्मकः । दिवादयोऽकर्मकाः । अल्प एव सकर्मकाः । अस्मासु प्रीतिमान् भवति (देवराजः) इत्यर्थः ।

६३. प्रीञ् तर्पणे कान्तौ च । क्रैयादिको नित्यं सकर्मकः प्रीणनेऽर्थे । सकर्मकत्वाकर्मकत्वे प्रयोगतोऽनुसर्तव्ये ।

६४. तैस्तैः सपत्नीदुर्वाक्यै र्दुनोषि त्वं यथमर्भक (स्कन्द० का० ४।२०।५८)।

६५. सुधां सुधांशुवदन धयन्त्यपि धुनोमि न (स्कन्द० का० ४ १६।६४)।

६६. तस्य दर्शनमात्रेण विघ्नसार्थः क्षयेत्स्वयम् (स्कन्द० का० ४।५७।१००)।

---

६४. टुदु उपतापे स्वादिः। अर्थनिर्देशादेव सकर्मकत्वं सिद्धम्। उपतपिः सकर्मक इति सन्देहानास्कन्नम्। तं (ब्रह्मचारिणं) चेत् किञ्चिदुपतपेदित्यादेरुपनिषत्सु दर्शनात्। उपतापी रोगः। रुजतीति रोगः। दूयस इति तु वक्तव्यम्। दूङ् परितापे दिवादिरकर्मकः।

६५. धिवि प्रीणने भ्वादिः सकर्मकः। धिनोति (पयसा) इति धेनुः।

६६. क्षि क्षये भ्वादिरकर्मकः। अन्तर्णीतण्यर्थस्तु सकर्मक इति दीक्षितः।

## इति सकर्मकत्वाकर्मकत्वविवेचनम्।

## अथोपसर्गाधिकारः षष्ठः

१. स प्रातः सायं च विजुहोति हव्यवाहनम्।

२. वियोगवह्निर्न भस्मसात् संस्कुरुते शरीरं ग्लपयत्येव त्वहर्निशम्।

३. न च पामरैर्विप्रलभ्यः सतां सङ्गः।

४. द्वेषो वा शसनं[1] वा गर्ह्यतमं कर्मेति शास्त्रकाराः।

---

१. संस्कृते वाङ्मये जुहोतिः केवल एव देवतोद्देश्यकहविर्दाने वर्तते न तूपसृष्टः। एष व्यवहारः। व्यवहारपरतन्त्राश्च वयम् इति विशब्दः परिहार्यः।

२. अत्र समुपसर्गोऽस्थाने। भूषणाद्यर्थस्याभावात्सुडपि दुर्लभः। तेन कुरुत इत्येव वक्तव्यम्।

३. प्रपूर्वो विप्रपूर्वो वा लभिर् वञ्चनेऽतिसन्धाने वर्तते। प्रकृते नासावर्थो घटत इति लभ्य इत्येव पाठ्यम्।

४. शसु हिंसायामिति भूवादिः। प्रायेणायं विपूर्व इति विशसनमिति वक्तव्यम्।

---

१. हिंसा।

५. अनाद्यनन्ता सर्गसंसृतिरियमित्याहुरभियुक्ताः[१] ।
६. अमेध्ये पतितं काञ्चनं न न चिनुते जनः ।
७. दीप्यते सप्तसप्तिर्न तु सन्दीप्यते । अस्ति हि दीप्तिसन्दीप्त्योर्विशेषः । कथं वा मन्यसे ?
८. देवमन्दिरप्रवेशे त्रैवर्णिका एवाधिकृता इति न शास्त्रे क्वचित् प्रतिश्रयते ।
९. अहं हि तं धर्मं विसृजेयं योऽस्पृश्यत्वं शिष्यात् ।
१० आङ्ग्लेषु ज्येष्ठ एव सुतः पितुर्दायमनुहरतीति सामयिक[२] आचारः ।
११. दानवत्रासविहस्ता देवयजो यागकर्तृतामुदवीवपन् ।
१२. एवं परापचिकीर्षया ये कुचेष्टन्ते ते हठान्निरोद्धव्याः ।

---

५. सम्पूर्वः सरतिर्योन्युपसंक्रमे संक्रमणमात्रे देशाद् देशान्तरं प्रति गमने च वर्तते । **संसरति देही नाना योनीरुपगच्छतीत्यर्थः ।** तेन प्रवाहशब्दः प्रयोक्तव्यः ।
६. अत्रोच्छशब्देन चिनोतिर्विशेषणीयः । उच्चिनुत इति वक्तव्यम् । केवलस्य तु इष्टकाश्चिनोतीत्यादिषु प्रयोगः ।
७. दीप्यते प्रकाशत इत्यर्थः । सन्दीप्यतेऽग्निर्ज्वलति समिद्धो भवतीत्यर्थः । अत एव सन्दीपनानीमानि वचनानि क्रुद्धस्येति संगच्छते ।
८. प्रतिश्रवः प्रतिज्ञानं भवति । तेन प्रकृते प्रतिना नार्थः । श्रूयत इत्येव साधु ।
९. उत्सृजेयमिति साधीयः । विसर्गो विमोक्षो भवति । धर्मशब्देनेह धर्मशास्त्रं गृह्यते ।
१०. अत्रानुना नार्थः । अनुः सादृश्यद्योतकः तच्चेह नेष्यते ।
११. उत्पूर्वस्य वपतेरुद्धारोऽर्थः, यथाऽऽवापौद्वापावित्यत्र । प्रासने तु प्रशब्दस्तदर्थद्योतकः प्रयोक्तव्यः पराशब्दो वा । प्रावीवपन्निति वक्तव्यम् ।
१२. **कुशब्दोऽव्ययम्, नायं प्रादिर्न चोपसर्गः** । कुत्सितं चेष्टन्ते विचेष्टन्ते असच्चेष्टन्त इति वा वक्तव्यम् ।

---

१. विपश्चितः । २. समयः पौरुषेयी व्यवस्था, तत आगतः सामयिकः ।

१३. आमुक्तशस्त्रस्य द्रोणस्य शिरश्चकर्त धृष्टद्युम्नः शरेण ।
१४. उदहारि[1] । या त्वं शिरसा कुम्भमावहसि सा त्वं किमिति विषमेण पथा धावसि ?
१५. यः शब्दान्सम्प्रयुङ्क्ते नापशब्दान्स व्याकरणं वेद नेतरः ।
१६. शूरोऽपि नृपतिः पथश्च्युतश्चेद्भवति निःशङ्कं प्रजाभिः संहननीयः ।
१७. व्याख्यागम्योऽयं सन्दर्भः स्तीर्णामपेक्षते व्याख्यां वैशद्याय ।
१८. धर्मादर्थः प्रजायते, अर्थाच्च काम इति स्मर्यते ।
१९. भिद्यन्ते हि धर्मा युगावर्तानुसारेण । उक्तं हि महाभारते—न चैकान्तिको धर्मो धर्मस्त्वावस्थिकः स्मृत इति ।
२०. यस्मात्पुर्यनुशेते तस्मात्पुरुष उच्यते ।

---

१३. आङ्पूर्वो मुञ्चतिर्बन्धने वर्तते । तेन प्रकृतेऽर्थविपर्यासो जातः । मुक्तशस्त्रस्येति वक्तव्यम् ।
१४. **आङ्पूर्वो वहतिर्जनने वर्तते** इति धारणेऽर्थे केवलः प्रयोक्तव्यः । **तद्वरतिवहत्यावहति**—(५।१।५०) सूत्र एतदर्थक एवावहतिः प्रयुक्तः ।
१५. प्रपूर्वो युजिर्व्यवहारे वर्तते । सम्पूर्वस्तु संयोजने संश्लेषणे । तच्च प्रकृते न युज्यत इति प्रयुङ्क्त इत्येव वक्तव्यम् । **न च सम्यक् प्रयोगः सम्प्रयोगो भवति** । तत्रार्थेऽस्य रूढिर्न ।
१६. हननीय इत्येव साधु । सम्पूर्वो हन्तिस्तु संघातीकरणे सम्पिण्डने वर्तते । अतः संघातरूपोऽर्थः शरीरं संहननमित्युच्यते ।
१७. विपूर्व एव स्तृणातिः प्रपञ्चमाह न केवलः । तेन विस्तीर्णामिति वक्तव्यम् ।
१८. जनी प्रादुर्भावे इति धातुः प्रपूर्वः प्रसवे विजनने वर्तते । यथा 'प्रजाता' इत्यत्र । तेन जायत इत्येव श्रेयः । औपचारिकत्वे न दोषः ।
१९. युगपरिवर्तानुसारेणेति वक्तव्यम् । आवर्तोऽम्भसां भ्रम इति रूढिः । यौगिकोऽप्यावर्तशब्दो वृत्तेः पौनःपुन्यमाह न त्ववस्थान्तरगमनम् ।
२०. अत्रानुना नार्थः । अनुशयो हि पश्चात्तापो भवति ।

---

१. उदकं हरतीति, उदहारी, तत्सम्बुद्धौ ।

२१. द्वितीयस्यामावृत्तौ ग्रन्थेऽस्मिन्नर्थभेदस्तु न क्वापि कृतः, विशेषस्तु विलिखितः ।

२२. ग्रन्थमिमं संवीक्ष्य महदुपकृताः स्म इत्यनुभविष्यन्तिच्छात्राश्चोपाध्यायाश्च ।

२३. यथाऽहं वैदेशिकैः संवर्ते तथा स्वदेशजैः । नैकत्र मे पक्षपातोऽस्ति ।

२४. भवद्वचनाङ्गीकारे दोषा अपि केचन परापतन्ति ।

२५. इतः प्रेत्य जन्मान्तरं सन्दधति जीवाः । अनुच्छित्तिधर्माणो हि ते ।

२६. अपदे पदसंनिधानेन महान्तोऽपि गर्हां लभन्ते ।

२७. यः खलु बाल्ये विरज्य प्रव्रजति द्वितीये च वयसि विलीयते विषयेषु सोऽधमो नृणाम् ।

२८. अयि प्रगल्भवादिन् ! सत्यवचसमपि मामसत्यवचसं संकरोषि ।

---

२१. विलेखनं विशिष्टं लेखनमिति मा स्म भ्रमीः । विलेखनमुल्लेखनं पादादिनाऽऽहत्य मृदाद्युत्क्षेपणम् भवति । तथा च कवीनां प्रथन्ते प्रयोगाः—**पादेन हैमं विलिलेख पीठम्** (रघौ६।१५) । **यमोऽपि विलिखन्भूमिम्** (कु० २।२२) । **मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण** (काव्यप्र०) । क्वचिदालेखनेऽपि वर्तते । तेन प्रकृते विशब्दस्त्याज्यः ।

२२. **संवीक्षणं विचयनं मार्गणं मृगणं मृग** इत्यमरात् संविपूर्व ईक्षतिर्विचयने गवेषणे रूढः । तेन वीक्ष्येत्येव वक्तव्यम् ।

२३. सम्पूर्वो वृतु वर्तन इति धातुरुत्पत्तौ वर्तते न तु संव्यवहारे । तेन सह वर्त इत्येव साधु ।

२४. परापूर्वः पततिरुपगमने प्रत्यागमने वा वर्तते । तेन आपतन्तीत्येव वक्तव्यम् ।

२५. सम्पूर्वो दधातिः संयोजने सम्पर्चने वर्तते । तेन समा नार्थः । दधतीत्येव पर्याप्तम् ।

२६. अत्र समोऽभावे श्रेयान्विन्यासः स्यात् । समा सहितोऽपि कथञ्चित् सह्यः ।

२७. विलयनं द्रवीभवनमित्यनर्थान्तरम् । तेन विशब्दमपहाय लीयत इत्येव वाच्यम् ।

२८. अत्र समा नार्थः । करोषीत्येव पर्याप्तम् ।

२९. कोमलास्तरणायां सोपबर्हायां शय्यायां प्रतिशयितोऽहं चिरं निद्रासुखमन्वभूवम् ।
३०. विषयेषु निलीना आत्मानमपि विस्मरन्ति किमुतात्मीयान् ।
३१. हा दास्याः पुत्रैर्मधुकरैः सन्दश्ये । त्रायस्व मां सखे ।
३२. केचिदध्यापकाभासाः शिष्याणामर्थं परिहृत्य स्वार्थं साधयन्ति ।
३३. ईश्वराश्च[1] दरिद्राणामुपकण्ठमपि नोपगच्छन्ति, साह्यकरणं तु दूरेऽपास्तम् ।
३४. नदन्ति च बलाहका वार्योघसंवाहकाः, दूरे च वसतिः । किमत्र शरणम् ?
३५. साम्प्रतिका हिन्दवो हिन्दीमपि विरलमेवासेवन्ते किमुत संस्कृतम् ।

---

२९. प्रतिशयनं नाम देवतायाः सम्मुखे भक्तस्यानशनं शयनं यावन्मनोरथसमृद्धिम् । तेन प्रतिशब्दः परिहार्यः । शयित इत्येव च वक्तव्यम् ।

३०. निलयनं नामान्तर्धानं भवतीति निस्त्याज्यः । लीना इत्येव निर्दुष्टं वचः ।

३१. सम्पूर्वो दंश दशन इति धातुः संयोजने वर्तते । यथा संदंशः सन्दष्टजिह्व इत्यत्र । तेन केवलः प्रयोक्तव्यः ।

३२. परिपूर्वो हरतिस्त्यागे उपेक्षणे वा न तु ग्रहणे मोक्षणे वेति हृत्वेत्येव प्रयोक्तव्यम् अपहृत्येति वा ।

३३. नोपगच्छन्त्युपकण्ठम् इति वाक्ये उपेन नार्थः । गच्छन्तीत्येव पर्याप्तम् । उपकण्ठमित्यव्ययीभावः सामीप्ये वर्तते ।

३४. संवाहनं मर्दनं भवति । तेन वाहका इत्येव वक्तव्यम् ।

३५. आङ्पूर्वः षेवृ सेवने इति धातुः क्रियातात्पर्ये पौनःपुन्येन सेवने वर्तते । इदं च **विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः** (३।४।५६) इति सूत्रे स्पष्टम् । तेन विरलमासेवन्त इति वदतो व्याघातः । विरलं सेवन्त इत्येव निर्दोषो न्यासः ।

---

१. धनिनः ।

३६. कस्मिश्चिदावसथे सोमदत्तो नाम ब्राह्मणः प्रतिवसति स्म ।
३७. ब्राह्मणेषु प्रमूढेषु[1] राजन्यवैश्या अज्ञानोपहताः स्युः ।
३८. नहि पदान्तरसमभिव्याहार[2] मन्तरेण केवलं सुभाषितमिति पदे समुच्चार्यमाणे माधुर्यविशेषस्यानुभूतिरस्ति ।
३९. इति यथामति स्वमतमुपन्यसितुं परमतं चापोहितुमायते ।
४०. कल्याणी खलु तस्य मतिर्यः शास्त्रशीलनेऽभिविशति[3] ।
४१. न हि गोगौरवं गुरुणा[4]ऽपि निरवशेषं गीर्यते ।
४२. एवं स्वैरिणः सन्तस्ते तमोगर्ते महति संनिपतन्ति ।
४३. धर्मचर्ययार्थकामौ संलभते जन इति भारते व्यासवचनम् ।
४४. यथाऽबलाहरणं तथा धनाहरणं पतनीयेषु[5] गण्यते ।

---

३६. आवसथ इत्यत्रास्थाने आङ् । संवसथो ग्रामपर्यायः । आवसथश्च पान्थगृहं भवति । तेन संवसथे इति वक्तव्यम् । प्रतिपूर्वो वसतिः समीपे वसने वर्तते । तेन वसति स्मेति वाच्यम् ।
३७. प्रमोहो मूर्च्छा भवति । तेन मूढेषु इत्येव वक्तव्यम् ।
३८. बहूनां सहोच्चारणं समुच्चारणं भवतीति **व्यक्तवाचां समुच्चारणे** इति सूत्रे वृत्तौ स्पष्टम् । तेनोच्चार्यमाणे इत्येव वक्तव्यम् ।
३९. यती प्रयत्ने इति धातुराङ्पूर्वः परतन्त्रीभवने वर्तते । इदं मय्यायतते । इदं ममायत्तमित्यादिषु तथा दर्शनात् । तेन यते प्रयते वेति प्रयोज्यम् ।
४०. अभिनिविशते इति वक्तव्यम् । अत्रार्थेऽभिनिपूर्वो विशतिर्व्यवह्रियते नाभिविशतिः ।
४१. उद्गीर्यत इति वक्तव्यम् । गृणातिरयं प्रायेणोच्चारणे कथने वोत्पूर्व एव प्रयोगमवतरति न केवलः ।
४२. सन्निपातः समुदयो भवतीति संनिपतन्तीति समुदिता भवन्तीत्यर्थमाचष्टे । स च प्रकृते नेष्ट इत्यवपतन्ति निपतन्तीति वा वक्तव्यम् ।
४३. लभिरनुपसृष्ट एव प्रयोगमवतरन्दृष्टो यावदर्थान्तरं न वक्ति । सम्पूर्वस्य त्वस्य प्रयोग एव नास्ति ।
४४. आहरणं हि भिद्यते हरणात् । इह धनस्य हरणं मोषणं विवक्षितं न तु कुतश्चिदानयनम् । तेनाङ् त्याज्यः ।

---

१. अज्ञानेष्वित्यर्थो विवक्षितः । २. समभिव्याहारः संनिधावुच्चारणम् ।
३. प्रागल्भ्यवान् भवतीत्यर्थो विवक्षितः । ४. बृहस्पतिना । ५. पातकेषु ।

४५. उत्पीडिता अपि पाकिस्थानगता हिन्दवो नैच्छन्गृहांस्त्यक्तुम् ।
४६. न तस्य काराभवनेषु देवना, प्रताडितस्यापि न कापि वेदना ।
४७. यदेव देशाभ्युदयिकमिति रभामहे तदेवाक्षिगतं भवति परेषाम् ।
४८. मेघनादशक्त्या मर्मस्वाहतो मूर्च्छितः सौमित्रिर्हनुमदाहृतयौषध्या जीवितोऽभूत् ।
४९. मातुराशिषः प्रगृह्य पुत्र आत्मानं कृतिनममन्यत ।
५०. यज्जीवतस्त्वचमाच्छिन्दन्ति तत् किमपि दुःखं तस्य जनयन्ति ।
५१. गुरोरन्तिकमुपेहि बटो ! व्याकरणं चागमय[1] ।
५२. यदि कथासंकथयोस्ते विवेकोऽस्ति नूनमुपसर्गव्यवहारं प्रजानासि ।
५३. धीरा अपि दुर्जनान् संचक्षते[2], खलसम्पर्कभीरवो हि ते ।

---

४५. उपपीडिता इति वक्तव्यम् । आचार्योऽपि हिंसायामर्थे उपपीडयतिमिच्छति । तथा चासुसूत्रत्—'**सप्तम्यां चोपपीडरुधकर्षः** (३।४।४९) इति । उत्पीडयतिस्तूपरोधने वर्तते । यथा—**अन्योन्यमुत्पीडयदुत्पलाक्ष्याः** स्तनद्वयम् इत्यत्र कुमारे (१।१०)। उत्सारणे वा यथा एताः करोत्पीडितवारिधारा इत्यत्र रघौ(१६।६६) ।
४६. दिव परिकूजने चुरादिः । अयं परिपूर्व एव प्रयुज्यते, तेन परिदेवनेति प्रयोज्यम् ।
४७. आरभामहे प्रारभामह इति वा वक्तव्यम् । केवलस्य प्रयोगादर्शनात् ।
४८. संजोवितोऽभवदिति वक्तव्यम्, उज्जीवित इति वा । एष व्यवहारः प्रायिकः । केवलस्यापि प्रयोगोऽदुष्टः । तथा चामरः पठति—'**जीवातुर् जीवनौषधम्** इति ।
४९. प्रपूर्वो गृह्णातिर्बन्धने वर्तते । तथा चामरः पठति **प्रग्रहोपग्रहौ बन्द्याम्** इति । तेन प्रतिगृह्य परिगृह्येति वा वक्तव्यम् ।
५०. छिन्दन्तीत्येव साधु । आङ्पूर्वश्छिदिर्बलाद् हरणे मोषणे आमर्शने वा वर्तते ।
५१. अत्रान्तिकशब्देनोपशब्दो गतार्थ इति 'इहि' इत्येव प्रयोक्तव्यम् ।
५२. **संकथा संलापो भवति । पतितैः संकथाऽपि पातित्याय भवति ।**
५३. चक्षिङः ख्याञ् इति सूत्रे वर्जने प्रतिषेधो वक्तव्य इति वार्त्तिकं पठति वृत्तिकारः, **दुर्जनाः संचक्ष्या** इति चोदाहरति । तेन **सम्पूर्वश्चक्षिङ् वर्जने वर्तत** इति प्रकृतेऽदोषः ।

---

१. शिक्षस्व । २. परिवर्जयन्ति ।

५४. उपयुक्तशेषं धनं धर्मार्थे नियुञ्जीत, पात्रेषु वा प्रतिपादयेत् ।
५५. देवा ह्यतीतानागतयोः परिवेत्तारः कामानां च दोग्धारः ।
५६. ये ये ते परिचिताः सखायो वा सर्वे से महेऽस्मिन्नुपमन्त्रयितव्याः ।
५७. य आत्मानं तारयितुमनीशः स परान्कथमवतारयेत् ।
५८. अहं त्वयि दिनत्रयीमेव पर्यवस्थाताहे, ततो मयाऽवश्यमितः प्रस्थेयम् ।
५९. उल्लिखिते सन्दर्भे कवेराशयं व्याख्याहि, स्वं मतं च तत्र ब्रूहि ।
६०. नानादिग्देशेभ्यः सीतासंवरणार्थमागता राजन्याः शाङ्करं धनुरुत्तोलयितुमपि नेशाञ्चक्रिरे[1] किम्पुनरारोपयितुम् ।
६१. प्राकृतान्मा प्रतीषीः प्रसादम् ।

---

५४. अस्तीह नियोगविनियोगयो र्भेदः । तेन धर्मार्थे विनियुञ्जीतेति वक्तव्यम् ।
५५. परिपूर्वस्य विन्दतेस्तु ज्यायांसं भ्रातरं परिवर्ज्य कनीयसो दारग्रहणमर्थः । तेन प्रकृते वेदितार इत्येव वक्तव्यम् ।
५६. **उपमन्त्रणं रहस्युपच्छन्दनं भवतीति** काशिका । तेन निमन्त्रयितव्या इति वक्तव्यम् ।
५७. अवोऽस्थाने । तारयेदित्येव वक्तव्यम् । सलिलमवतरति सलिलमवगाहत इत्यर्थः, न सलिलस्य पारं यातीति । पारयानं चेह विवक्षितं यथा तरति शोकमात्मविद् इत्यादिषु ।
५८. पर्यवपूर्वस्तिष्ठतिर्विरोधे वर्तते तथा चामरः पठति —**पर्यवस्था विरोधनम्** इति । आचार्यः खल्वपि **छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरीति** सूत्रे तमेवार्थं प्रमाणयति । तेनावस्थाताहे इत्येव वक्तव्यम् । बुद्धिः पर्यवतिष्ठत इति गीतावचने तु पर्यवपूर्वस्य तिष्ठतेः स्थैर्यलाभोऽर्थः ।
५९. उल्लेखनं प्रायो विलेखनं भवति न तूपरि लेखनं प्रत्यवमर्शनं वा तेन लिखितपूर्वे उद्धृते इति वा वाच्यम् ।
६०. संवरणे समूशब्दोऽर्थविपर्यासकृत् । संवरणं गोपनं प्रच्छादनं भवति । वरणमेवात्रानुपसृष्टमभीष्टमर्थमर्पयति ।
६१. प्रतिपूर्व इषिर्ग्रहणे वर्तते न त्वभिलाषे । अभिलाषश्चेहार्थः प्रतिभाति तेन प्रतिशब्दस्त्याज्यः ।

---

[1] न समर्था बभूवुः । ईशेलिटि रूपम् ।

६२. कालान्तरे तवोपकरिष्यामीति मा त्वमावधीर्मामिति मूषिकः सिंहम्प्रत्याह ।

६३. विविक्तासनो निमीलितनेत्रो नित्यं प्रातः परमेश्वरं निध्यायेत् ।

६४. तत्त्वं ज्ञातुं विचेष्टस्व । अक्षरार्थेन ज्ञातेन केवलेन नार्थः ।

६५. न हि शशाङ्कविरहिता कुमुदिनी शोभामादधाति ।

६६. अथेष्टदेवतामामृशति[1] मङ्गलं च कामयते ।

६७. सुजनास्तु दोषज्ञा[2] अपि परदोषेषु दृष्टिमपि नाक्षिपन्ति ।

६८. उत्पथप्रस्थितः को नाम शक्योऽवरोद्धुं प्रत्यभिनिविष्टश्चेत् स भवति ।

६९. व्यृद्धपूर्वः[3] सम्प्रति समृद्धोऽविनीतो न समाभाषते सखायमपि ।

---

६२. आङ्पूर्वो हन्तिराघाते वर्तते न तु घाते । घातो वा वधो वेहाभिप्रेत इति मा त्वं वधीर्मामिति निर्दुष्टं वाक्यम् ।

६३. **निध्यानं निर्वर्णनमवलोकनं भवतीति** चिन्तनेऽर्थे ध्यायेदित्येव शोभनं वचः ।

६४. चेष्टस्वेति वाच्यम् । विर्विरोधे वर्तते । विचेष्टते विरुद्धं चेष्टते । **ओदनस्य पूर्णाश्छात्रा विचेष्टन्ते विकुर्वत** इत्यर्थः ।

६५. आङ्पूर्वो दधातिः प्रायेण जनने वर्तते न तु धारणे । तेन दधतीत्येव शोभनम् ।

६६. इष्टदेवतां परामृशतीति वक्तव्यम् । परामृशति मनसा तां गच्छति चिन्तयतीत्यर्थः । आमर्शनं तु स्पर्शनं वा भवत्याच्छेदनं वा । **आमृष्टं नः परैः पदम्** इत्यत्र कुमारे (२।३१) यथा ।

६७. क्षिपन्तीत्येव शोभनम् । आक्षेपणं त्वाच्छेदनमवहेलनं वा भवति ।

६८. प्रतिरोद्धुमित्येवानवद्यम् । **अवरोधनं त्वेकत्र प्रदेशे व्रजादौ रोधनं भवति** । यथावरोधोऽन्तःपुरं भवति, अन्तःपुरस्था योषितो वा ।

६९. आभाषते इत्येव सुवचनम् । आलपतीत्यर्थः । यदि समुपसर्गः प्रयुयुक्षितस्तदाऽऽङ् नार्थः । संभाषत इत्येव वक्तव्यम् । सख्येति तृतीयान्तं च प्रयोज्यम् ।

---

१. ध्यायेदित्यर्थो विवक्षितः । २. विद्वांसः । ३. पूर्वं दरिद्रः ।

७०. मनाग् इह समवधीयताम् । अहमस्मि ते किमपि रहस्यमाचिख्यासुः ।
७१. आयुर्वेदे निष्ठितो[1]ऽप्ययं भिषङ् मन्दं विचिकित्सत्यातुरान् ।
७२. यावदेव तं द्रक्ष्यामि तावदेव संहनिष्यामि ।
७३. सन्दिग्धफलेन पत्त्रिणा[2] चकर्त शूरो द्विषतां शिरांसि ।
७४. प्रस्मरसि कृष्ण ! गोकुले वत्स्यामः ।
७५. संजानानान्[3] परिहरन् रावणानुचरान्बहून् (भट्टौ ८।२७) ।
७६. बाणमुद्यतमायंसीत्[4] (भट्टौ ६।११६।) ।
७७. वृद्धौरसां राज्यधुरां प्रवोढुम् (भट्टौ ३।५४) ।
७८. सन्धत्ते भृशमरतिं हि सद्वियोगः (किराते ५।५१) ।।

---

७०. अवधीयतामिति साधु । प्रायशः समवधानं संभरणं सज्जीकरणं भवति यथा सामग्रीसमवधानम् । कोषे तु साध्ववधानं समवधानमित्यपि स्थितम् ।
७१. विचिकित्सा संशयो भवतीति चिकित्सतीत्येव वक्तव्यम् ।
७२. हनिष्यामीत्येव साधु । संपूर्वस्य तु हन्तेः सम्पिण्डनमर्थ इत्यसकृदुक्तं पुरस्तात् ।
७३. दिग्धशब्दो विषदिग्धमाह । **विषाक्ते दिग्धलिप्तकावित्यमरः ।** संपूर्वस्तु दिहिः संशये वर्तते ।
७४. प्रस्मरणं विस्मरणं भवति न तु प्रकृष्टं स्मरणम् । तेन स्मरसीत्येव प्रयोक्तव्यम् ।
७५. **संज्ञानं स्मरणं वा भवत्यानुगुण्येन व्यवहारो वा । मातरं मातुर्वा संजानाति । मातरं मात्रा वा संजानीते । अभ्युपगमनं खल्वपि—शतं संजानीते ।** कविना तु ज्ञाने परिचयनमात्रे संजानातिः प्रयुक्तः । तेन समा नार्थ इति भाति ।
७६. आयंसीदुपसंहृतवानिति जयमङ्गला । **आङ्पूर्वो यमिरत्रार्थे शक्त इति संदिह्यः ।**
७७. प्रवोढुमित्यत्र प्रशब्दोऽस्थाने । प्रवाहो नाम स्यन्दनं भवति ।
७८. सन्धत्त इत्यस्य साधुत्वे सन्दिह्यते । आधत्त इति तु शोभनं स्यात् ।

---

१ प्रवीणः । २. बाणेन । ३. जानतः, परिचिन्वत इत्यत्रार्थे कविप्रयोगः ।
४. उपसंहृतवान् इत्यर्थो विवक्षितः ।

७९. आसन्द्यां सुखं संशयानो धनिकः स्वादुङ्कारं ताम्बूलं चर्वति ।
८०. यो हि साध्वतिवाहयति कृत्यं स सुखं प्रैधते ।
८१. कशाप्रहारवर्षेण प्रवाहयति वाहान् देवदत्तो नियन्ता[१] ।
८२. महाकाव्यानुशीलनोपप्लावितो ब्रह्मानन्दसहोदरो रसः कर्णेहत्य निपीयताम् ।
८३. विनेया[२] व्याकरणे न्याये च तथाभिविनेया[३] यथा गुरुसाहाय्य-निरपेक्षं ग्रन्थान् संलापयेयुः ।
८४. अहह ! सदाचाराः प्रबलवात्योपहता इवोड्डीयन्ते ।
८५. महानस्य विकार उज्जृम्भते रुजार्तस्य । पीयूषपाणिध्रुवसिद्धिर्नाम वैद्योऽप्यत्र विमुह्यति ।
८६. अहो स्पृहणीयः स कालो यत्र विद्वत्सु गुणग्राहिता समसरदनु-रागश्च ।

---

७९. शयान इत्येव वक्तव्यं समाऽर्थान्तरप्रतीतेः ।
८०. निर्वाहयतीति प्रयोक्तव्यम् । कालमतिवाहयति कालं गमयतीत्यर्थात् ।
८१. प्रवाहयति प्रकर्षेण वाहयति गमयतीत्यर्थः । **कर्णीरथः प्रवहणं डयनं च समं त्रयमित्यत्रामरे** प्रपूर्वो वहतिः प्रकृष्टगतौ त्वरित-गमने दृष्टः । तेन प्रकृतेऽपि न कश्चिद्दोषः । यथाऽऽपः प्रवहन्ति स्यन्दन्ते तथा गमयतीत्यर्थः ।
८२. अत्रोपप्लावितशब्दे उपेन नार्थः । उपप्लव उपद्रवो भेदो विनाशो वा भवति । प्लावितब्रह्मानन्दसहोदरो रस इति वा वक्तव्यम् । परिशब्दो वा योजनीयः ।
८३. **विभाषा लीयतेरिति** लीङो वाऽऽत्वम् । **सम्पूर्वो लीङ् संकोचे वर्तते संलीनकुक्षिरित्यत्र** यथा । संलापयेयुरिति च ण्यन्तं संलपिं बलाद् बुद्धौ करोतीति समशब्दोऽस्थाने ।
८४. उपहतं दूषितं भवति । तेनाऽऽहता इत्येव वक्तव्यम् ।
८५. उज्जृम्भत उत्सहत इति प्रायोऽर्थः । **व्यालं बालमृणालतन्तुभि-रसौ रोद्धुं समुज्जृम्भत** इति भर्तृहरौ (१।६) । प्रकटीभवनं वर्धनं चाप्यर्थावभ्युपगतौ । तेन प्रकृतेऽदोषः ।
८६. संसरणं नाम योनेर्योन्यन्तरोपसंक्रमणं भवति । तेन प्रासरदिति वक्तव्यम् ।

---

१. सारथिः । २. शिष्याः । ३. शिक्षणीयाः ।

८७. शाकुन्तलादीनि नाटकानि रङ्गस्थलेऽभियोक्तव्यानि जनरञ्ज-नाय ।

८८. व्यपेता वर्षाः । अद्यापि नोत्तिष्ठते[1] सीतासंमार्गणे सुग्रीव इति कुप्यति रामः ।

८९. कथं व्याहन्यते वालिना ते सखा सुग्रीवः ।

९०. सत्यं संसारशुचामाहर्ता हरिः । प्रसिद्धा हि भगवतः करुणा प्रणतेषु[2] ।

९१. केशेषु प्रसितो[3]ऽयं युवा नित्यं नवां कुन्दमालां परिधत्ते ।

९२. अत्र समवधानं दीयमानं प्रार्थये ।

९३. कोपपरीतोऽसौ संमतं[4] वाऽसंमतं वा जनं प्रतिघातयिष्यत्यसंश-यम् ।

९४. को नाम पुमान् दावानलं संविश्य क्षेमेण निर्याति ।

९५. स्नानागारे स्नातुमभ्यविश स्नानीयसंभारं च तत्र प्रागेव संगृहीत-मपश्यम् ।

---

८७. अभियोक्तव्यः प्रष्टव्यो भवति, दोषेण संयोक्तव्यो वा । प्रयोक्त-व्यानीति वक्तव्यम् । प्रयोगेणाधिकर्तव्यानीति वा ।

८८. सीतामार्गण इत्येव साधु । सम्पूर्वस्य मार्गतेः प्रयोगो न दृष्टः । अमरोऽपि **संवीक्षणं विचयनं मार्गणं मृगणं मृग** इति सम्शब्दमुपे-क्षते ।

८९. व्याङ्पूर्वो हन्तिर्विरोधे वर्तते न तु हिंसायाम् । स्वोक्तं व्याहन्ति । विरुणद्धीत्यर्थः ।

९०. आहरणमानयनं भवतीति विरुद्धार्थप्रतीतिकृदाङ् परिहार्यः ।

९१. परिधानं हि परितो धानं भवति । शाटीं परिधत्ते । बृहतिकां परिधत्ते । आच्छादयतीत्यर्थः । तेन मालां धत्त इत्येव वक्तव्यम् ।

९२. सम्यगवधानं समवधानमित्यर्थस्वीकाराददोषः ।

९३. अत्र प्रतिना नार्थः । प्रतिपूर्वो हन्तिर्गतिप्रतिरोधे रूढः । घात-यिष्यसीत्येव साधु ।

९४. संवेशः स्वाप इत्यनर्थान्तरम् । तेन प्रविश्येत्येव शोभनं वचः ।

९५. आगारं प्राविशमिति प्रयोक्तव्यम् । न ह्यभेः प्रयोगो व्यवहारानु-पाती ।

---

१. नोद्युङ्क्ते, उद्योग न करोति । २. भक्तेषु । ३ संलग्नः । ४. इष्टम् ।

९६. आपृष्ट एव ब्रूयान्नापृष्टः ।
९७. अन्तपालपदं सम्प्रति सुवर्णष्ठीवि जातम् ।
९८. वीरोऽपि वीरमित्रो भयाकुलो भूत्वा द्वे पदे पश्चादुपावर्तत ।
९९. ब्राह्मणा अपि श्रुतिपरिशीलनमुदवपन्[1] का कथेतरेषाम् ।
१००. ये परहितं नित्यमुपाचरन्ति ते स्वस्य प्रियं कुर्वन्ति ।
१०१. वत्सलां मातरमुपरतां श्रुत्वा स शीर्षविघातमरोदीत् ।
१०२. एतद्विषयविचारणा मासमवारुध्यत ।
१०३. ब्रह्मचर्यस्यैष महिमा यन्मृत्युरपि भीष्मवशगः प्रजातः ।
१०४. अयं हि मत्प्रतिवेशे[2] प्रवसतीति तमहं साधु वेद ।
१०५. एवमुच्यमाने न काऽप्यसंगतिः परापतति ।
१०६. दिग्धकेना[3] विद्धो मौहम्मदो घूर्णमानः शिरसा[4] गामगात् ।

९६. **आप्रच्छनमामन्त्रणं भवति । आमन्त्रणं नाम प्रस्थानाभ्यनुज्ञा-सम्प्रार्थनम्** । तेनाङ् त्याज्यः । पृष्ट इत्येव साधु ।

९७. ष्ठिवु निरसने इति धातुर्नियमेन निपूर्वः प्रयुज्यते । तेन स्वर्ण-निष्ठीवि जातमिति वाच्यम् ।

९८. पश्चात् परावर्ततेति वक्तव्यम् । उपावर्तनं त्वन्तिके प्रत्यागमनं भवति । शक्यं वा पश्चादिति पदं त्यक्तुम् । परावर्ततेत्येव विव-क्षितमर्थमर्पयिष्यति ।

९९. परावपन्निति वक्तव्यम् । उक्तो हेतुः ।

१००. उपाचरन्तीत्यत्रोपशब्दो व्यर्थः । सेवनाद्यर्थान्तरप्रतीतेः ।

१०१. शीर्षघातमित्येव साधु । अवघातस्तु व्रीह्यादेः कण्डने रूढः । घात-श्चेहाघातमाह । **परिक्लिश्यमाने च** (३।४।५५) इति णमुल् ।

१०२. अत्राप्यवशब्दोऽस्थाने । अवरोधनं नामैकत्र व्रजादौ रोधनमुच्यत इत्युक्तं पुरस्तात् ।

१०३. अत्र प्रशब्दस्त्याज्यः । प्रजातः प्रसूत इत्यनर्थान्तरम् ।

१०४. प्रतिवेशे प्रवसतीति विरुद्धं वचः । **प्रवसति दूरे वसति इत्यर्थः । प्रशब्दो विप्रकर्षे** । तेन वसतीत्येव वक्तव्यम् ।

१०५. आपततीत्येव साधु । उक्तः परापूर्वस्य पततेरर्थः ।

१०६. न ह्याविद्ध आसमन्ताद् विद्ध इति भवति । किं तर्हि कुटिलः । तथा चामरः पठति–**आविद्धं कुटिलं भुग्नमिति** । तेन विद्ध इत्येव ।

---

१. पर्यत्यजन्नित्यर्थो विवक्षितः । २. मद्गृहसमीपे ।
३. लिप्तकेन, विषदिग्धेन शरेण । ४. गां भूमिम् ।

१०७. यच्चलचित्रादिषु देशकालतो व्यवहितविप्रकृष्टानां वक्तॄणां वचांसि सामाजिकैः श्रूयन्ते तेनाकामतोऽपि शब्दनित्यत्वमभ्युपपत्तव्यं भवति ।

१०८. निर्भीकोऽयं युवा शत्रुहस्तात्पताकां समाहृत्य वक्षसा न्यगूहत ।

१०९. नेदमस्मास्वाधीनम् । विद्यालयाध्यक्ष एवास्य सर्वस्य प्रभवति ।

११०. केचिदाहु र्भक्तिर्ज्ञानायोपकल्पते, तदपरे न सहन्ते ।

१११. कपोलयोरुद्गतान् प्रस्वेदकणान् संमार्ष्टि ।

११२. विश्वं सिसृक्षता धात्रापि तपोऽन्वतप्यतेति श्रूयते ।

११३. तमिस्त्रा[1] निष्क्रान्ता । प्रत्यूषश्चोपस्थितः ।

११४. यदि मम वचनं हेलसे[2] तदा ते सुखं न भविष्यति ।

११५. स किलात्मशुद्धिमुद्दिश्य नित्यं योगविधीन् मम्नौ ।

---

१०७. अभ्युपपूर्वः पद्यतिरनुग्रहे वर्तते । **अभ्युपपत्तिरनुग्रह** इति चामरः । अनुग्रहः कष्टश्रितस्य परित्राणमाह । प्रतिशब्दः प्रयोक्तव्यः । प्रतिपत्तव्यमिति वक्तव्यम् ।

१०८. आहृत्येत्येव साधु । समाहरणं समाचयनं भवति ।

१०९. आधीनमित्यसंस्कृतम् । अधीनमित्येव प्रयोक्तव्यम् । **इनं स्वामिनमधिगतोऽधीनः** । खप्रत्ययान्तोऽप्यधीनशब्दः क्वचित्स्वतन्त्रं प्रयुज्यते । **वाक्यं वक्तर्यधीनं हीति वाक्यकारप्रयोगात्** ।

११०. कल्पते सम्पद्यत इत्यर्थः । तेनोपशब्दस्त्याज्यः ।

१११. प्रमार्ष्टीत्येव साधु । **संमार्जनं नाम समूहन्याऽवकरादेरपनयनं भवति** । यथा मार्गसंमार्गः क्रियताम् इत्यत्र ।

११२. तपोऽतप्यतेत्येव वक्तव्यम् । अनुतापः पश्चात्तापोऽनुशयो भवति ।

११३. अतिक्रान्तेति वक्तव्यम् । निष्क्रामति बहिर्गच्छतीत्यर्थात् ।

११४. **हेडृ अनादरे** इत्ययं धातुर्नित्यमवपूर्वः प्रयुज्यते । तेनावहेलस इत्येव साधु । डलयोरभेदः ।

११५. **म्ना अभ्यासे** इति धातुर्नित्यमाङ्पूर्वः प्रयोगमवतरति न केवलः । तेन आमम्नाविति वक्तव्यम् ।

---

१. तमस्विनी रात्रिः तमिस्रा । २. हेडृ अनादरे भ्वादिरात्मनेपदी ।

११६. इतो गृहमुपगम्य द्राङ् मे पत्त्रं हिनु[3] वृत्तं च तत्राखिलेन विवृणु ।

११७. श्रीगान्धिप्रभृतयो जनानां नेतारो भारतं परदास्यान्निर्मोचयितुं चिरं समयतन्त ।

११८. केयं कुचिता मेदिनी वीरस्य ।

११९. दुर्लभां मानुषीं तनूमवधार्य दुष्कृतं करोषि । हा हतोऽसि ।

१२०. वैदिकमुनिना श्रीहरिप्रसादस्वामिना सर्वोऽपि वेदवारिधिः सूक्ष्मतत्त्वरत्नान्युदमन्थि ।

१२१. अधीरस्य पदे पदे व्याकुलत्वं समापद्यते ।

१२२. संह्नुतेऽधमर्ण उत्तमर्णादात्मानम् ।

१२३. शास्त्राणि सततं परिशीलयन्सोऽचिरादेव तत्र परं प्रावीण्यं समालभत ।

---

११६. हि गतौ वृद्धौ चेति स्वादिषु पठितः । अयं प्रायः प्रपूर्वः प्रयुज्यते । **यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै** इति श्वेताश्वतरोपनिषदि । अन्तर्भूतण्यर्थोऽयं प्रेषणे वर्तते । **संहितासु तु केवलोपि प्रयुज्यते बहुलम्** ।

११७. निःपूर्वो मुच्लृ मोक्षण इति धातुः सर्पत्वक्त्यागे वर्तते । **निर्मुच्यते भुजङ्गः** । **निर्मुक्तो भुजङ्गः** । **भुजङ्गनिर्मोक** इत्यादिषु दर्शनात् । अन्यत्र तु प्रायेण केवलः प्रयुज्यते यावदर्थविशेषो न विवक्ष्यते । तेन मोचयितुमित्येव वक्तव्यम् । समयतन्तेत्यत्रापि दोषः । **सम्पूर्वो यतिः स्पर्धायां संघर्षे वर्तते विग्रहणे वा** । यथा **देवाश्चासुराश्च संयत्ता आसन्** इति ब्राह्मणप्रयोगे । तथा चामरो युद्धपर्यायेषु संयतं पठति—**स्त्रियः संयत्समित्याजिसमिद्युध** इति ।

११८. **नान्तरेणोपसर्गं कुचतिः प्रयोगमवतरन्दृष्टः** । तेन संकुचिताऽऽकुचितेति वा वक्तव्यम् ।

११९. अवधारणं निश्चयनं भवति । तेन धृत्वेत्येव साधु ।

१२०. अत्रोच्छब्देन नार्थः । स च त्वचमुन्मथतीत्यादिषु चरितार्थः । अवलोडने तु केवलो मन्थतिर्मथ्नातिर्वा प्रयुज्यते ।

१२१. **समापत्तिः समागमो भवति** । यथा **समापत्तिदृष्ट** इत्यत्र । तेनोत्पद्यत इति वक्तव्यम् ।

१२२. अपह्नुत इत्येव व्यवहार्यम् ।

१२३. **समालम्भो विलेपनमित्यमरप्रामाण्यात्** केवलो लभिः प्रयोक्तव्यः ।

१२४. इदानीमपि भारतं वर्षं पण्डितप्रकाण्डैः संभृतमास्ते ।
१२५. आगमकालः खलु शिष्याणां प्रज्ञामेधयोर्निर्बिभर्ति ।
१२६. बिषमे पथि धावन्नन्धः पदे पदे संपतति ।
१२७. स च ज्ञानविशेष उत्पन्नः परलोके जन्मान्तरे फलमभ्युदयलक्षण-
मुपसंहरन् परलोकप्रयोजनो भवति (काशिका ६।१।४९) ।
१२८. अभ्याससारिणी विद्या बुद्धिः कर्मानुसारिणी ।
१२९ किमिह किमपि दृष्टं स्थानमस्ति श्रुतं वा
व्रजति दिनकरोऽयं यत्र नास्तं कदाचित् ।
भ्रमति विहगसार्थान् इत्थमापृच्छमानो
रजनिविरहभीतश्चक्रवाको वराकः ॥
१३०. हृदयमशरणं मे पक्ष्मलाक्ष्याः कटाक्षैरपहृतमपविद्धं पीतमुन्मूलितं
च (मालती० १।३१ ) ।

---

१२४. भृतमिति साधीयः स्यात् । प्रायेण संभरणं संग्रहणं भवति साध्य-
साधनानाम् ।
१२५. भृञ् धारणपोषणयोर्जुहोत्यादिः सकर्मकः । निःपूर्वस्यास्य तिङि
प्रयोगो नास्ति । कृत्स्वेव निर्भृतिनिर्भरादिषु प्रायो दृश्यते ।
प्रकृते आयतते, लम्बते तदाश्रितो भवतीत्यर्थः । निर्बिभर्तीति
तत्रार्थेऽप्रयुक्तपूर्वमिति त्याज्यम् । अतिशयो भरः । अतिशयि
निर्भरं भवति ।
१२६. सम्पातः संचारो भवति । तेन पतति निपतत्यवपततीति वा
वक्तव्यम् ।
१२७. अत्रोपसंहरतिः प्रापणे वर्तत इति निर्दुष्टो न्यासः ।
१२८. अभ्यासानुसारिणीत्येव साधु । अनुमन्तराऽभीष्टार्थानुपलब्धेः ।
अभ्यासं सरतीत्यभ्याससारिणीति विग्रहः । अनर्थकप्रायं वचः ।
१२९. आप्रच्छनमामन्त्रणं भवति । तेनाङं परिहृत्य पृच्छन्निति वक्त-
व्यम् । आङभावे परस्मैपदं च प्रयोज्यम् ।
१३०. अपविद्धमिति भृशं विद्धमित्यर्थे साधु । तत्रार्थेऽपि प्रयोगाः
दृश्यन्ते । **अपविद्धं शरैर्भृशम्** इति भारते ! प्रायेणापपूर्वस्य
विध्यतेस्त्यागे निराकरणेऽर्थे प्रयोगाः प्रथन्ते । **परिगणिते-
ष्वौरसादिपुत्रेष्वपविद्धोप्येकतमः स्मर्यते** । यः प्रास्तस्त्यक्तो
भवति ।

१३१. सा तिथिस्तदहोरात्रं स योगः स च चन्द्रमाः ।
लग्नं तदेव विख्यातं यत्र प्रस्मर्यते हरिः ॥ (गरुड पु० २२२।२१)

१३२ नोपायध्वं भयम् (भट्टि० ७।१०) ।

१३३. सा लक्ष्मीर्यंयोपविधत्ते परेषाम् ।

१३४. स्वयं स्वयम्भूरुदयं प्रयातः
श्री केशवानन्दमुनीन्द्रनामा (श्री केशवानन्द दि. सा.) ।

१३५. बहुविदप्यसावविनीत इति न विद्वत्सु परिगण्यते ।

१३६. नान्येह काचित्त्वादृशी परिपतति मम दृशौ ।

१३७. बुद्धिं वर्धयति श्रियं वितनुते वैदग्ध्यमामुञ्चति (सत्संगतिः) ।

---

१३१. स्मरतिना युक्तः प्रोपसर्गोऽर्थं विपर्यासयति । प्रस्मरति विस्मरतीत्यनर्थान्तरम् इत्युक्तमधस्तात् । तेन गरुडकारेणापि प्रशब्दव्यवहारपरिहारेण व्यवहारोऽनुवृत्यः ।

१३२. उपायध्वम् इति यमेर्लोण्मध्यमपुरुषबहुवचने रूपम् । सूचनं चार्थं विवक्षति कविः । **यमो गन्धन** (१।२।१५) इति गन्धने सूचनेऽर्थे सिचः कित्त्वं विधत्ते । गन्धनं हिंसाप्रयुक्तं सूचनमाह, न तु सूचनमात्रम् । सूचनं परेणाच्छाद्यमानस्यावद्यस्याविष्करणमिति वृत्तिः । प्रकृते सोऽर्थो नेति दुष्यति प्रयोगः । वृत्तिकारश्चात्रार्थे उदाङ्पूर्वं यमिं प्रयुङ्क्ते ।

१३३ उपविधत्त इत्यपप्रयोगः । विधात्र करोत्यर्थमाचष्टे, उपविधात्र् तूपकरोत्यर्थं न, प्रयोगाभावात् । **न च कल्प्याः प्रयोगाः** ।

१३४. प्रयात इत्यत्र प्रशब्दोऽस्थाने । प्रयातिः प्रस्थानमाह चलनं क्रमणं वा । तेन प्रशब्दस्त्याज्यः ।

१३५. परिगण्यत इत्यत्र परिः परिहर्तव्यः । एको बहुषु परिगणितेषु साकल्येन गणितेषु गण्यते इत्यर्थात् ।

१३६. परिपतनं परिभ्रमणं परिसरणं भवति, तेन परिरुपेक्ष्यः ।

१३७. आङ्पूर्वो मुचिर्बन्धने वर्तते । **आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवद्** इत्यमरः । अवैदग्ध्यं विलुम्पतीत्यर्थो विवक्षित इति प्रतिभाति । तेनाङस्थाने ।

१३८. ततः कथं कथमप्यहं श्रीनगरं यावत् पर्यचलम् ।
१३९. विवृत्तपाणिर्विहतोत्तरार्थं विभीषणोऽभाषत यातुधानम् (भट्टि० १२।२१)
१४०. मृजन्ति तुन्दं सततं महाशनाः ।
१४१. वरं समूलनाशोऽस्मत्कुलस्य, न पुनर्म्लेच्छेनाभिसन्धिः ।
१४२. मान्तरा निर्बधान तमालापेन ।
१४३. कामशरानुविद्धहृदयः (करुणा० १०) ।
१४४. तेन भक्तिरसमन्तरार्द्रतामुद्वहेम भवदङ्घ्रिचिन्तकाः (नारा० ४।४) ।

---

१३८. अचलमित्येव वक्तव्यम् । परिः सर्वतोभावे वर्तते स च नेह विवक्षितः ।

१३९. विवृत्तपाणिरित्यस्य तदभिमुखीकृतहस्त इत्यर्थं विवक्षति । विशब्दसहकारेण वृतु वर्तन इति धातुर्नान्यत्रेममर्थमर्पयन्दृष्टः । इति विरुपसर्गश्चिन्त्यः । अभिस्तु प्रयुक्तो युक्तः स्यात् ।

१४०. परिपूर्वो मृजिः प्रयोक्तव्यः । **तुन्दपरिमृजः**, **तुन्दपरिमार्ज** इत्यन्यत्र तथा दर्शनात् ।

१४१. **न हि सन्ध्यभिसन्धी अभिन्नार्थौ भवतः** । अभिसन्धिर्नाम सन्ध्युद्देश्यकोभिप्रायोपन्यासः । अभिप्रायमात्रं वा । तेन म्लेच्छेन सह सन्धिरित्येव वक्तव्यम् ।

१४२. निर्बन्धो हठो भवति । प्रतिः प्रयोज्यः । प्रतिबधानेति वक्तव्यम् । आभाषणेन वक्तुः प्रतिबन्धं मा कार्षीरित्यर्थः ।

१४३. अनुरस्थाने । अनुपूर्वो व्यधि व्याप्तौ वर्तते । अनुविद्धं व्याप्तं परिगतमनुस्यूतं भवति यथा **अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते** (वा० प० १।१२४) इत्यत्र, यथा वा **सरसिजमनुविद्धं शैवलेनापि रम्यम्** इत्यत्र । तुन्नं क्षतमित्यर्थं तु नार्पयति । विदुषा कविनोपसर्गकृतो विशेषो न लक्षितः । बाढमतिः स्थाने प्रयुक्तो व्यधनस्यातिशयं ब्रुवीत ।

१४४. उत्पूर्वो वहिरुद्ग्रहणे ऊर्ध्वं नयने वर्तते न तु सोत्कर्षं धारणे । तेन वहेमेति निरुपसृष्टं प्रयोज्यम् ।

१४५. पीयूषं परिमथतेति पर्यशास्त्वम् (नारा० २७।३) ।
१४६. तां गर्भिणीमभ्यहासीः (नारा० ३५।८) ।
१४७. सन्निशम्य जननी समाद्रुता (नारा० ४७।४) ।
१४८. तावद् वाल्मीकिगेहे कृतवसतिरुपासूत सीता सुतौ ते (नारा० ३५।८) ।
१४९. राज्यं नवं बालमिवार्कमेव मरुत्सुतीभूय परोऽगलिष्यत् (तुलसी० १।१२) ।
१५०. हर्षबाष्पं व्यामुञ्चन्त्यः (गावः) (नारा० ५४।८) ।
१५१. सकलभुवनभाजां हर्षदां वर्षवेलां
क्षितिधरकुहरेषु स्वैरवासी व्यनैषीः (नारा० (५८।८) ।
१५२. मूर्तिमेष बृहतीं प्रदधानः (नारा० ७०।७) ।

---

१४५ उभयत्र परि व्यवहारं नानुवर्तते । मथिः प्रायेण निःपूर्व उत्पूर्वो वा प्रयोगमवतरन्दृष्टः, शासिश्च प्रपूर्वोऽनुपूर्वो वा । व्यवहारोऽनुवृत्त्यः ।

१४६. अभ्यहासीरित्यत्राभेरव्यवहार्यतां विदन्नपि कविप्रवेकश्छन्दः-परवशः प्रायुङ्क्तेति जाने । व्यतिप्रादयः प्रायेण जहातिना योगं लभन्ते । **न हि यः कश्चिदुपसर्गो येन केनापि धातुना शक्यो योक्तुम् ।**

१४७. समाद्रुता सत्वरमागता । अत्र साहचर्यं न विवक्षितमिति समानार्थः ।

१४८. उपासूत । न ह्युपस्य सूतिना योगः क्वचिदन्यत्र दृश्यते । मन्येऽत्रापि छन्दोवशग एव उपोपसर्गं युनक्ति ।

१४९. अत्र न्यगलिष्यदिति साधीयः स्यात् । अन्तरेण निं गलाधोनयनमर्थो न स्फुटति । धातुपाठेपि प्रसिद्धिमनुरुध्य गॄ निगरणे इति पठितम् ।

१५०. आङ्पूर्वो मुचिर्बन्धने रूढः । विरपि विशेषकृन्न । तेनोपसर्गद्वयमपि हेयम् । प्रकर्षश्चेद्विवक्षितः, प्रशब्दः प्रयोक्तव्यः ।

१५१. कालक्षेपणे केवलो नयतिः प्रयोगमवतरन्दृष्टः, न तु विपूर्वः । विपूर्वस्तु शिक्षणेऽपनोदने विगमने वा दृष्टः ।

१५२. प्रधानं प्रकृतिरित्यत्रार्थवानपि प्रशब्दोऽत्रानर्थकोऽव्यवहृतचरश्च ।

९४. महाधने दुकूलाग्र्ये परिधायोपवीय च (भा० पु० ४।२१।१७)।
९५. रभेसोक्ता नीमानि वाक्यानि तत्त्वस्पृशानि नेति न हृदयङ्गमानि भवन्ति।
९६. जगत्प्रभोरप्रभविष्णु वैष्णवम्।
९७. एककालं चरेद् भैक्षं न प्रसज्जेत विस्तरे (मनु० ६।५५)।
९८. सर्वे सङ्क्रामिणो रोगा वर्जयित्वा प्रवाहिकाम्।
९९. नृपस्तु विबुधाश्रयः कति न सन्ति कुक्षिम्भराः।
१००. युक्तं नाम विद्वत्समवायः प्रीतिभोजेन सभाज्यतामिति।

---

**भिहारे वुन्** (३।१।१४९) इति वुनि लवकः। समभिहारेण साधु-कारित्वं लक्ष्यते। तेन साधु लुनातीति लवकः, लवनकुशल इत्यर्थः।

९४. उपवीयेत्यसाधु। उपव्यायेत्येव साधु। व्ययश्चेति सम्प्रसारण-निषेधात्।

९५. तत्त्वं स्पृशन्तीति तत्त्वस्पृंशि। **स्पृशोऽनुदके क्विन्निति** क्विन्।

९६. **भुवश्चेति** (३।२।१३८) च्छन्दसि इष्णुचो विधिः, लोके नास्तीति प्रभविष्णुशब्दोऽपाणिनीयः।

९७. विस्तार इति पाणिनीया इच्छन्ति। **प्रथने वावशब्दे** इत्यशब्द-विषये प्रथने घञं विधत्ते। शब्दविस्तर इति भवति। अगार-विस्तार इति।

९८. सङ्क्रामन्तीत्येवंशीलाः सङ्क्रमिणः। उदात्तः क्रमिर्मान्त इति नोदात्तोपदेशस्येति सूत्रेण णिनौ प्रत्यये वृद्धिप्रतिषेधेन भवि-तव्यम्। तेन सङ्क्रमिण इत्येव साधु।

९९. कुक्षिं बिभ्रतीति कुक्षिभृत इति क्विपि कुक्षिभारा इत्यणि रूप-द्वयं भवितुमर्हति। कुक्षिम्भरा इति प्रमाद एवायम्। **फलेग्रहि-रात्मम्भरिश्चेति** सूत्रेऽनुक्तसमुच्चयार्थश्चकार इति कुक्षिम्भरि-रुदरम्भरिश्चेत्यपि साधु।

१००. प्रीतिभोज इति चिन्त्यम्। भुजेर्घञि भोग इति स्यात्। कर्तरि पचाद्यचि भोज इति सूपपन्नम्। भोजो नाम राजा। भुनक्ति पालयति भोजः।

१०१. त्वमेव शास्त्री भवसीह गुर्वी सद्देशनानां जगतां गुरूणाम् (आचार्यस्य विश्वबन्धोः) ।

१०२. तपोनिरोधरोषणस्फुरत्तृतीयलोचनो भगवान् पिनाकपाणिः क्षणेन भस्मी चकार कन्दर्पम् ।

१०३. त्वदेकनिष्ठस्य तु यत्न एष त्वद्भक्तिरक्तेर्मम विश्वबन्धोः (आचार्यस्य विश्वबन्धोः) ।

१०४. मासद्वयपरीमाणे ततः कालेऽतिगच्छति (बृ० श्लो० सं० ५।८३) ।

१०५. पाणिनीयवचोव्याकरणस्य सङ्ग्रहस्य करो भगवान् व्याडिः ।

१०६. कृष्णस्वान्तहरी······सुररिपोः प्राणादपि प्रेयसी (कल्पलता श्लो० १४) ।

---

१०१. शासु अनुशिष्टौ उदात्तः । तेन तृचि इटि ङीपि शासित्रीत्येव रूपम् । बाढम्, ऋत्विग्विशेषे प्रशास्तृ इत्यनिट्कं व्युत्पाद्यत उणादिषु । सुगतेपि शास्तेति शब्दः प्रसिद्धः । **तत्रापशब्दबहुला सौगतानां वागिति मर्षणीयास्ते वराकाः ।**

१०२. तपोनिरोधरोषणस्फुरत्तृतीयलोचनः । अत्र रोषणशब्दस्यास्थाने प्रयोगः । रोषण इति रोषशीलो भवति । रोषणशब्दे **क्रुधमण्डार्थेभ्यश्चेति** (३।२।१५१) ताच्छील्ये युज्विहितः । ताच्छील्यं चेहाविवक्षितम् । तपोनिरोधरोषवत्स्फुरत्तृतीयलोचन इत्येव शोभनं वचः ।

१०३. पूज्येष्वनुरागो भक्तिरिति प्रामाणिकाः । तेन भक्तिरक्तयोरेकतरं त्याज्यम् । **प्रायेणानुपूर्वो रक्तिः प्रयुज्यते विपूर्वो वा, न केवलः ।**

१०४. परिमाणमित्येव शब्दः । दैर्घ्यस्याप्राप्तेः । परितो मानं परिमाणम् । माङो ल्युट् ।

१०५. करोतीति करः । पचाद्यचि साधुः । **शिवशमरिष्टस्य करे** इति सूत्र आचार्यस्य तथा प्रयोग एव मानम् । **लोके प्रयोगस्तु नाक्षिलक्षी भवति ।**

१०६. 'कृष्णस्वान्तहरी' इति दुष्टम् । हरतेरनुद्यमनेऽचि स्त्रियां टापि कृष्णस्वान्तहरेत्येव निर्दुष्टम् । **मन्येऽनुप्रासहृतधीर्बहुश्रुतोऽयं कविरेवं प्रायुङ्क्त ।**

१०७. कामक्रोधौ मनुष्याणां खादितारौ वृकाविव ।
१०८. ऐव विद्वन् पितुः कामात्पान्तावल्पम्पचान्मुनीन् (भट्टि० ६।६६) ।
१०९. अहिते हितसंज्ञस्त्वमध्रुवे ध्रुवसंज्ञकः । अनर्थे चार्थसंज्ञस्त्वं किमर्थं नावबुध्यसे ॥ (भा० शां० ३३७।२७) ।
११०. व्याप्तं गुहाशयैः क्रूरैः कव्यादैः सनिशाचरैः (भट्टि० ६।९३) ।
१११. कुखगस्यातरोऽम्भोधिः सर्पारेर्गोष्पदायते (यो० वा० ५।६७।३) ।
११२. शरं ह्युपासानिशितं सन्दधीत (मुं० उ० २।२।३)
११३. स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।
यदुपास्तिमसावत्र परमात्मा निरूप्यते ॥ (कुसुम०)

---

१०७. खादितारावित्यपशब्दः । निन्दहिंसक्लिशखादेति सूत्रेण वुञ्विधानाद् वुञि खादकावित्येव युज्यते वक्तुम् । ननु वाऽसरूपन्यायेन तृजादयः कुतो न ? ण्वुलैव सिद्धे वुञ्विधानं ज्ञापनार्थं ताच्छीलिकेषु वाऽसरूपन्यायेन तृजादयो न भवन्तीति ।

१०८. अल्पम्पचान् इति न शास्त्रेण सेद्धुमर्हति । मितनखे च इत्यत्रार्थग्रहणे प्रमाणाभावात् । चकारस्यानुक्तसमुच्चयार्थत्वादिति तु जयमङ्गलायां स्थितम् । तद् वृत्तिकारादयो न समर्थयन्त इति नादृत्यं भवति ।

१०९. आतोऽनुपसर्गे कः, प्रे दाज्ञ इत्युभाभ्यां सूत्राभ्यां कस्याप्राप्तेर्हितसंज्ञ इति कृद्वृत्त्या न सिध्यति । हितमिति संज्ञा (बोधः) यस्येति बहुव्रीहिणा समाधेयम् ।

११०. क्रव्ये चेत्यनेन विटि क्रव्याद्भिरित्येव सुवचम् । कृत्तविकृत्तपक्वमांसभक्षः क्रव्याद इति वृत्तौ स्थितम् । स च नेह विवक्षितः ।

१११. खगस्यातरोऽम्भोधिरित्यत्र ईषद्दुःसुषु सत्स्वेव खलो विधेरनुपपदादप्राप्तेरतर इति दुःसमाधानम् । तरणं तरः । अविद्यमानस्तरोऽस्येति बहुव्रीहिणा कथंचित्समाधेयम् ।

११२. उपासेति दुःसाधम् । **ण्यासश्रन्थो युच्** इति युचि उपासनेत्येव साधु । वाऽसरूपविधिनाऽङ् वा स्यादिति मा स्म शङ्कि । अस्त्रियामित्युक्तेः स्त्र्यधिकारं वर्जयित्वा वाऽसरूपविधिर्भवति ।

११३. उपास्तिरित्यपशब्दः । उक्तो हेतुः ।

११४. धनुररिभिरसह्यं मुष्टिपीडं दधाने (भट्टि०)।
११५. बृहन्नले गायनो वा नर्तनो वा पुनर्भव (भा० वि० ३७।३२)।
११६. जगाम सा पादचरी तदानीम् (क्रिस्तु ५।२)।
११७. कुत्रापि पीनकुचया सह शायिनं तम् (मोह० ६।३१)।
११८. दुरितनिवहहात् पुत्रदात्कांस्यपात्रात् (मोह० २।४)।

---

११४. **सप्तम्यां चोपपीडरुधकर्षः** इत्यनेनोपपूर्वादेव पीडयतेर्णमुल् विहितः। उक्तं हि **वृत्तिकारेण**—उपशब्दः प्रत्येकमभिसम्बध्यत इति। तेन मुष्टिपीडमित्यसाध्वेव। **अयं सम्प्रदायं प्रत्यनादरो भट्टेः**।

११५. **शिल्पिनि ष्वुन्** इति ष्वुनि नर्तक इति भवति। अयमत्र समाधिर्भवितुमर्हति—नृती गात्रविक्षेपे इत्यकर्मकः। गात्रविक्षेपश्च चलनान्नातिभिन्नः। तेन **चलनशब्दार्थादकर्मकाद्युच्** इति ताच्छीलिके युचि नर्तन इति साधु।

११६. पादचरीति दुष्टम्। चरेष्ट इत्यनेनाधिकरण उपपदे टो विहितो न तु करणे। मद्रेषु चरति कुरुषु चरति मद्रचरी कुरुचरीत्युदाहरणे। दीक्षितः पचादिगणे चरट् इति पठति। तत्प्रमाणं चेद् ङीपा पादचरीत्यपि नासाधु।

११७. शायिनम् इत्यत्र णिनि र्न प्राप्नोति। सुप्युपपदे तद्विधेः। ताच्छील्यमपि नास्तीत्यन्यदेतत्। कामं केवलाद् धातोरसुप्यपि णिनिर्विहित आवश्यके द्योत्ये। आवश्यकं च नेह द्योत्यम्। **लोके हारि च वत्सराजचरित**मित्यादिषु तस्य स्फुटमवगमात्स्थाने णिनिः। **ह्रियते बुध्यमानोपि नरो हारिभिरिन्द्रियैः** (वन० २।६६) इति भारतवाक्येपि।

११८. दुरितनिवहहात् इति दुष्टम्। दुरितनिवहं हन्तीति दुरितनिवहहः। अत्र शास्त्राभ्यनुज्ञामन्तरेणैव कविना हन्तेर्डः कृतः। **डप्रकरणेऽन्येष्वपि दृश्यत** इत्यनेन डः स्यादिति चेन्न। दृशिग्रहणं प्रयोगानुसरणार्थम्। गमेश्च स विधिर्न हनः। **आशिषि हनः** (३।२।४९) इत्यनेन डः स्यादिति चेन्न। आशिषि गम्यमानायां स विधिः। इह चाशीर्न गम्यते। **क्विप् च** (३।२।७६) इति क्विप् छक्यः कर्तुम्। रूपं तु न सिध्यति। पञ्चम्यां दुरितनिवहघ्न इति स्यात्। **कर्मणि हनः** (३।२।८६) इत्यनेन णिनिस्तु न

११९. सुरपतिनिलयान् सम्पदां सम्प्रदायान् (मोह० ४।३०)।

१२०. कन्यादानं समानं सुभगसितसुताप्रीतिकारं च चक्रे (मोह० ४।३०)।

१२१. गजानां पङ्कमग्नानां गजा एव धुरन्धराः (हितोप० १।१८१)।

१२२. शूराणां च नदीनां च दुर्विदाः प्रभवाः किल (भा० आदि० १३७। ११)।

१२३. आक्रामकानेव निहन्तुकामाः (तुलसी० १।८)।

---

शक्यः कर्तुम्। तत्र **कुत्सितग्रहणं कर्तव्यम्** इत्युक्तेः। तेन मातृघाती पितृघातीत्यादिष्वेव स विधिः। **कर्मण्यण्** इत्यण् वा स्यात्। यथा चौरघातो हस्तीत्यत्र टकमकृत्वा कृत्यल्युटो बहुलमिति बहुलवचनादण्। अणि निवहघातादिति स्यात्।

११९. सम्पदां सम्प्रदायान्। अत्र कर्तरि प्रत्ययः। स च **श्याद्व्यधेति** सूत्रेण णो न। केवलात्स विधीयते। उपसर्ग उपपदे तु **आतश्चोपसर्गे** (३।१।१३६) इति कः स्यात्।

१२०. सुताप्रीतिकारं च चक्रे। अत्र प्रीतिकारम् इति प्रीतेः कारणमिति गम्यते। तेन **कृञो हेतुताच्छील्यानुलोम्येषु** (३।२।२०) इत्यनेन सुताप्रीतिकर इत्येव। **शृणोम्यहं प्रीतिकरं मम नाथस्य कीर्तनम्** (रा० ६।१२६।१) इत्यत्र यथा।

१२१. **संज्ञायां भृतृवृजिधारिसहितपिदमः** (३।२।४६) इत्यनेन संज्ञायां धारेः खच् विधिः, तेनासंज्ञायां न प्राप्नोति। शब्दस्तु प्रसिध्यति। अमरोपि पठति—**धूर्वहे धुर्यधौरेयधुरीणाः सधुरन्धरा** इति। न च संज्ञाग्रहणं प्रायिकम् इति वृत्त्यादिषु स्थितम्।

१२२. दुर्विदा इति खलि न सिध्यति। गुणस्य दुर्वारत्वात्। दुर्वेदा इत्येव शब्द इति पाणिनीयाः।

१२३. आक्रामक इत्यत्र वृद्धिर्दुर्लभा। **नोदात्तस्य मान्तस्यानाचमेः** (७।३।३४) इति वृद्धिप्रतिषेधात्। आक्रमक इत्येव शब्दः।

१२४. न भाति वाससि क्लिष्टे रङ्गयोग इवाहितः (सुश्रुते २।१५७।८) ।
१२५. अन्यस्य न बुभूषकः (भा० अनु० ११७।२५) ।

---

१२४. रङ्ग इत्यत्र करणे घञ् । **घञि च भावकरणयोः** (६।४।२७) इति करणेनुनासिकलोपो विधीयते । तेन राग इत्येव साधुः ।

१२५. बुभूषको भूतिमिच्छुः । ताच्छील्यादेरविवक्षायां **सनाशंसभिक्ष उः** (३।२।१६८) इत्यनेन उप्रत्ययो न । सामान्येन विहितो ण्वुल् भवति ।

**इति कृत्परिशेषविवेचनम् ।**

# अथ तद्धितेषु विवेच्यानि ।

### तत्रापत्याधिकारः प्रथमः

१. कौरव्याणां पाण्डवानां च दारुणं जन्यमजनि ।
२. तस्य भ्राता तु वैमात्रो लक्ष्मणो नाम वीर्यवान् (श्रीरामायणे) ।
३. वैयासः शुको ब्रह्मविदां वरो बभूव ।
४. ज्यैष्ठेयो रामो माध्यमेयो भरतः कानिष्ठेयौ च लक्ष्मणशत्रुघ्नाविति रामायणे स्थितम् ।
५ युधिष्ठिरादयः पञ्च पाण्डवेया धर्मप्रधाना अधर्मभीरवश्चेति लौकिकाः प्रतिपन्नाः, परीक्षकास्तु विप्रतिपन्नाः ।

---

१. **कुरुनादादिभ्य** इति ण्यप्रत्यये कौरव्य इति भवति । **ते तद्राजा** (४।१।१७४) इति ण्यस्तद्राजसंज्ञकः । **तद्राजस्य बहुषु तेनैवास्त्रियामिति** (२।४।६२) बहुवचने ण्यस्य लुकि कुरव इत्येव रूपम् । षष्ठ्यां कुरूणामिति ।
२. विमातृशब्दः शुभ्रादिषु पठितः । तेन ढकि वैमात्रेय इत्येवेष्टं पाणिनीयानाम् ।
३. **सुधातुरकङ्** (४।१।९७) इत्यत्र **व्यासवरुडनिषादचण्डालबिम्बानामिति वक्तव्याद्** इञि प्रत्ययेऽकङि चान्तादेशे वैयासकिरित्येव न्याय्यम् ।
४. ज्येष्ठा कनिष्ठा मध्यमेत्येते शब्दा कल्याण्यादिगणे पठिताः । तेन **कल्याण्यादीनामिनङ्** इति ढक् प्रत्ययो भवति तत्संनियोगेन च इनङादेशः । तस्माज् ज्यैष्ठिनेयः, माध्यमिनेयः कानिष्ठिनेय इति रूपाणि साधूनि भवन्ति ।
५. पाण्डवेय इति भारते बहुत्र दृश्यते । **शीघ्रतां नरसिंहस्य पाण्डवेयस्य पश्यत** इत्यत्र द्रोणपर्वणि (४८।२०) यथा । तत्र **स्वच्छन्दवाचो महर्षय** इत्येव सुवचम् । पाण्डव इत्येवेति च पाणिनीयाः । शुभ्रादिराकृतिगण इति स्वीकारे तु ढकि प्रत्यये यथास्थितं साधु । **ढे लोपोऽकद्र्वा** (६।४।१४७) इति उलोपो न । कद्र्वाः पर्युदासेन स्त्रीलिङ्गस्य ग्रहणात् । ओर्गुणः ।

६. पाराशर्यो व्यास उच्यते न चासौ पराशरस्य गोत्रापत्यम् । तत् कस्मात् ।
७. कथमनन्तरोऽश्वत्थामा द्रौणायन इत्युच्यते ?
८. दाक्षिण्यं नाम बिम्बोष्ठि बैम्बकानां कुलव्रतम् (मालविका) ।
९. विरला ह्यार्षेय्यो भणितयोऽस्य वचसस्तुलामारोहन्ति ।
१०. वत्स ! कथं जानीषे इमे गार्ग्या इमे मौद्गल्या इमे च मौद्गला इति ।
११. प्राक् केकयीतो भरतस्ततोऽभूत् (भट्टि १।१४) ।

---

६. गोत्ररूपाध्यारोपेण तथा व्यपदेश इति विद्धि । तथारोपे च पश्चिमे वयसि वर्तमानस्य भगवतः पराशरस्य व्यासोऽजनीत्यनन्तरापत्यं सन्नपि व्यासो गोत्रापत्यमिवाऽभूत् इति हेतुः स्यात् ।

७. नैवात्र महाभारतद्रोणो ऽभिप्रेतः । किं तर्ह्यनादिः । तत इदं गोत्रे प्रत्ययविधानम् । इदानीं श्रुतिसामान्यादध्यारोपेण तथाभिधानं भवति ।

८. **व्यासवरुडनिषादचण्डालबिम्बानाम्** इति इञि प्रत्ययेऽकङादेशे च बैम्बकिरिति शब्दः । बिम्बकशब्दाद्वाऽपत्यार्थे प्राग्दीव्यतीयोऽण् द्रष्टव्यः ।

९. **इतश्चानिञ** इदि ढकि ङीपि आर्षेयी इति रूपम् । ऋषिभणितिर्ऋषेरपत्यं भवत्युपचारात् । तेन सर्वं समञ्जसम् ।

१०. **यञञोश्चेति** यञो बहुषु लुकि गर्गा मुद्गला इत्येव साधु । मुद्गलस्य गोत्रापत्यं मौद्गल्यः । मौद्गल्यस्य शिष्या मौद्गलाः । **कण्वादिभ्यो गोत्रे** (४।२।१११) इत्यण् ।

११. केकयस्यापत्यं स्त्रीति **जनपदशब्दात्क्षत्रियादञ् अतश्च** (४।१।१७७) इति लुको **'न प्राच्यभर्गादियौधेयादिभ्य** (४।१।१७८) इति निषेधे **केकयमित्रयुप्रलयानामिति** यादेरियादेशे आदिवृद्धौ कैकेयीति स्यात् । तथा च रघुकारप्रयोगः—**कैकेयि ! कामाः फलितास्तवे**ति । अयमत्र समाधिः—केकयशब्दो मूलप्रकृतिरेवोपचारात्स्त्र्यपत्ये वर्तते इति न्यासः । केकयशब्दः शार्ङ्गरवादिषु पठ्यते, तेन स्त्रियां ङीन् ।

१२. कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा (गीता १८।७२)।
१३. मानवमाणवयोर्विशेषं चेद्वेत्थ नूनं विशेषज्ञोऽसि।
१४. प्रायेण भ्रातृव्या भ्रातृव्या[1] भवन्ति।
१५. भीष्मे त्रैशब्द्यं श्रूयते—गाङ्गो गाङ्गेयो गाङ्गायनिरिति। तत्कस्मात् ?
१६. अयं श्वाशुरिः। अयं च श्वशुर्यः। को विशेषः ?
१७. इमे गार्ग्याः, इमे च कौञ्जायन्याः। उभयेऽपि मान्याः।

---

१२. पृथाशब्दात् औत्सर्गिकेऽणि पार्थ इति साधु। क्वचिदुत्सर्गोऽप्यपवादविषयमभिनिविशते।
१३. मनोरपत्यं पुमान् इत्यर्थे तस्यापत्यमिति प्राग्दीव्यतीयोऽण्। कुत्सितं मूढं च चेत्तदपत्यं माणवशब्दाभिधेयं भवति। स्मरन्ति च—**अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः। नकारस्य च मूर्धन्यस्तेन सिध्यति माणव** इति॥ अल्पो माणवः=माणवकः। अनधीतवेदत्वान्मूढत्वं विहितानन्नुष्ठानाच्च कुत्सितत्वमित्याहुः।
१४. प्रथमो भ्रातृव्यशब्दो भ्रातुरपत्यमाह। तत्र **भ्रातुर्व्यच्चेति** व्यत्प्रत्ययः। द्वितीयः शत्रुपर्यायः। तत्र व्यन्सपत्ने इति व्यन्प्रत्ययः। स्वरे भेदः।
१५. गङ्गाशब्दः शिवादिषु पठ्यते तिकादिष्वथ शुभ्रादिषु। तेनाणि फिञि ढकि च गाङ्गः, गाङ्गायनिः, गाङ्गेय इति **त्रैरूप्यं** भवति।
१६. **राजश्वशुराद्यत्** इति श्वशुरस्यापत्यमित्यर्थे यति श्वशुर्य इति सिद्धम्। श्वशुरो नाम कश्चित्। तस्यापत्यमित्यर्थे तु **बाह्वादिभ्यश्चेतीञ्** इति श्वाशुरिरपि। राजश्वशुराद्यत् इति सूत्रे संज्ञाविशेषस्य ग्रहणं कुतो नेति चेत्। उच्यते। शास्त्रकार्यं हि स्पष्टार्थेषु प्रसिद्धेषु शब्देषु भवति न त्वप्रसिद्धेष्वधुनातनेषु तत्समानध्वनिषु संकेतेषु। तदुक्तमाचार्यैः—

**अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः।**
**शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु॥** इति।

१७. **यञञोश्चेति** गोत्रप्रत्ययस्य यञो बहुषु लुकि गर्गा इत्येव साधु। **गोत्रे कुञ्जादिभ्यश्च्फञ्** इति कुञ्जशब्दाच्च्फञ्। ततो **व्रात**-

१८. अपत्यार्थ आर्षार्षेययोः कः शब्दः कश्चापशब्दः
१९. वाडववाडवेयशब्दौ व्युत्पादय व्यवहारं च दर्शय ।
२०. प्रदीयतां दाशरथाय मैथिली । (रा० ६।२५।३३)
२१. रघूणामन्वयं वक्ष्ये । (रघु० १।९)
२२. माद्रीसुतौ पुष्पफले समृद्धे । इत्यत्र माद्रीति कथम् ?
२३. हन्तानार्ये ममामित्रे सकामा कैकयि भव (रा० २।१२।९३) ।
२४. कथमसितो देवलो व्यासः (गीता १०।१३) ।

---

**ञ्फञोरस्त्रियाम्** (५।३।११३) इति स्वार्थे ञ्यः । कौञ्जायन्यः । तस्य **ञ्यादयस्तद्राजा** इति तद्राजसंज्ञा । तद्राजस्य बहुषु तेनैवास्त्रियाम् इत्यनेन ञ्यस्य लुकि कौञ्जायना इत्येव साधु ।

१८. आर्ष इत्यत्रापत्यार्थो नास्त्येव । ऋषेरिदमार्षमिति व्युत्पत्तेः । तस्येदमित्यण् । अपत्यार्थे त्वार्षेय इत्येव साधु । **इतश्चानिञ** इति ढक् ।

१९. **वडवाया वृषे वाच्ये** इति वचनाद् वडवाशब्दाद् वृषेऽभिधेये ढग्विधिः । **वाडवेयो वृषः स्मृतः** । बीजाश्व इत्यर्थः । अपत्ये त्वणेव भवति वाडव इति ।

२०. दाशरथ इति शेषविवक्षायामणि । अथवाऽत इञ् इति विषये प्राग्दीव्यतीयोण् । **क्वचिदपवादविषयेऽप्युत्सर्गोभिनिविशत** इति कृत्वा ।

२१. राघवाणामिति वक्तव्ये रघूणाम् इत्यभेदोपचारात् । राघवा रघव इति बुद्ध्योपचारात् । रघुशब्दस्य तदपत्ये लक्षणा वा बोध्या ।

२२. मद्रशब्दो जनपदवाची क्षत्रियशब्दः । तस्माद् **द्व्यञ्मगधकलिङ्गसूरमसादण्** इति विहितस्यापत्यार्थकस्याणो ऽतः (४।१।१७७) इत्यनेन लुकि मद्रीति स्यात् । **स्वच्छन्दवाचो महर्षयः** ।

२३. जनपदशब्दात् क्षत्रियादञ् इत्यपत्यार्थेऽञि केकयमित्रयुप्रलयानां यादेरियः । ञित्त्वान्ङीप् । संबुद्धौ ह्रस्वः । 'कैकेयि' इत्येव ।

२४. देवलस्यापत्यमित्यणि वृद्धौ दैवल इति स्यात् । **संज्ञापूर्वको विधिरनित्य** इति वृद्धिर्न कृता । अन्यत्र वृद्धिश्चापि दृश्यते यथान्यायम् । **असितो वा एतेन दैवल** इति पञ्चविंशब्राह्मणे (१४।११।

२५. मन्दन्ते मन्दुरायां...बाह्लीका वाडवेयाः (मोह० २।१६)।

१६) श्रूयते। **असितो देवलश्चेत्येकस्यैव द्वे नामनी भिन्ने वा द्वे व्यक्ती इति विभ्रमः केषाञ्चित्।**

२५. मन्दुरायामिति कीर्तनेन वाडवेया इत्यश्वा अभिप्रेयन्ते। न च वाडवेयोऽश्वमाचष्टे सामान्यम्। **वडवाया वृषे वाच्ये स्त्रीभ्यो ढग्** इति ढग्भवति। अपत्ये तु वाडव इत्येव।

## मत्वर्थीयाधिकारो द्वितीयः।

१. ये भगवति श्राद्धाः[1] प्रणताश्च ते पूतपापाः स्वर्गाय राध्नुवन्ति।
२. सर्वप्रिये ज्येष्ठे सुते विप्रोषिते कथ नु माता सुखवती स्यात्?
३. यववानयं स्थायुकः[2]। अयं हि ग्रामीणेष्वाढ्यतमो मतः।
४. अयं वातातिसारी, अयमतिसारकी।
५. [3]रूपिणीयं कन्या कस्य मनो नावर्जयति?

---

१. **प्रज्ञाश्रद्धार्चाभ्यो ण** इति मत्वर्थीयो णः। श्राद्धाः श्रद्धावन्तः।
२. **सुखादिभ्यश्चे**ति इनिप्रत्ययो नियम्यते। तेनान्यो मत्वर्थीयो न भवति। तस्मात् सुखिनीत्येव साधु।
३. **मादुपधायाश्च मतोर्वोऽयवादिभ्य** इति मतोर्वत्वे यवादिपर्युदासाद् यवमानित्येव साधु।
४. **द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः** (५।२।१२८) इति वातातिसारौ इत्यस्माद् द्वन्द्वादिनौ 'वातातिसारी' इति साधु। केवलादतिसारशब्दात्तु **वातातिसाराभ्यां कुक्** च इतीनौ कुगागमे चातिसारकीति साधु। वाताद् वातकी।
५. **रसादिभ्यश्चे**ति मतुप्। रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम्। अन्ये मत्वर्थीया मा भूवन्निति। प्रायिकमेतद् रसादिभ्यश्चेति वचनम्। **इतिकरणो विवक्षार्थोऽनुवर्तते**। अथवा **गुणादि**त्यत्र पठ्यते। तेन ये रसनेन्द्रियादिग्राह्या गुणास्तेषामत्र पाठः। 'रूपिणी' इत्यत्र तु शोभा गम्यते।

---

१- श्रद्धावाञ्छ्राद्धः। २-ग्रामेऽधिकृतः। ३-सुन्दरी।

६. बहवो दण्डा अस्यां शालायां सन्तीति दण्डिनीयं शाला ।
७. निवृत्तदेहाभिमानिनः प्रत्यग्दृशो[1] मन्वादयोऽत्र प्रमाणं न त्वस्मदादयः परागदृशः[2] ।
८. रजस्वल एष पन्थाः । पादाहतं रजो मूर्धानमारोहति नेत्रे च रुजति
९. अत्र जपदे नावृत्तिः[3] कश्चिदस्ति न वाऽनेकवृत्तिमान् ।
१०. फालकुद्दाललाङ्गलवन्तः कृषीवलाः क्षेत्राणि प्रस्थिताः ।
११. सर्वशक्तिमतीश्वरे शङ्केयं नोपपद्यते ।
१२. ब्राह्मादिषु विवाहेषु चतुर्ष्वेवानुपूर्वशः । ब्रह्मवर्चस्विनः पुत्रा जायन्ते शिष्टसंमताः (मनु० ३।३९) ॥

---

६. **एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृताविति** वचनात्सप्तम्यर्थे इनिर्नेति मतुपि दण्डवती शालेति वक्तव्यम् ।
७. निवृत्तदेहाभिमाना इत्येवं वक्तव्यम् । **न कर्मधारयाद् मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर** इति वामनवचनाद् निवृत्तदेहाभिमानिन इति न युक्तम् ।
८. **रजःकृष्यासुतिपरिषदो वलच्** इति मत्वर्थीयो वलच् इति निर्दुष्टं रूपम् । प्रयोगस्तु दुष्यति । रजस्वला स्त्री भवति । इतिकरणो विषयनियमार्थः सर्वत्र संबध्यते । तेनेह न भवति । रजोऽस्मिन्ग्रामे विद्यत इत्युक्तं काशिकायाम् । **स्त्रीविषयादन्यत्रापि रजस्वलशब्दो दृश्यत इति सापवादं वृत्तिकारवचनम्** । यथा मनौ (६।७७)—रजस्वलमनित्यं चेत्यत्र रजस्वलमिति देहविशेषणं प्रयुक्तम् ।
९. अनेकवृत्तिरिति बहुव्रीहिणा वक्तव्यम् । उक्तो हेतुः ।
१०. **द्वन्द्वाच्चोपतापगर्ह्यादिनिरि**ति फालकुद्दाललाङ्गलिन इत्येव युक्तम् । मतुपो ऽपवाद इनिः
११. सर्वाः शक्तयोऽस्मिन्निति बहुव्रीहिणा सर्वशक्तिरिति वाच्यम् । उक्तोऽत्र हेतुः ।
१२. ब्रह्मणो वर्चः=ब्रह्मवर्चसम् । **ब्रह्महस्तिभ्यां वर्चस** इत्यचसमासान्तः । तदन्तादत इनिठनाविति इनिः । तेनब्रह्मवर्चसिन इत्येवेति पाणिनीयाः ।

---

१-अन्तर्दृष्टयः । २-बहिर्दृष्टयः ३-अलब्धजीविकः ।

१३. हा पितृवन्तोऽप्यनाथवत् कदर्थ्यन्तेऽमी शिशवः ।
१४. किं न स्मरसि सुधीमतो हनुमतोऽकृतार्थो न निवर्तयेति वचः ।
१५. मात्रादिमूर्तिमतां देवानां वरिवस्ययैव परमं सुखमिति सूत्रकाराः समामनन्ति ।
१६. क्रोधिलस्वभावस्य हि भ्रश्यति विवेकः, भ्रश्यन्ति चार्थाः ।
१७. सर्वे लोका न्यूनातिरिक्तसुखदुःखवन्त इत्यवश्याभ्युपेयम् ।
१८. चक्षुष्मानपि सूक्ष्मं तमर्थमीक्षितुं नेष्टे किमुताचक्षुष्मान् ।
१९. चत्वारोऽपि भ्रातरः परं मेधस्विनोऽभूवन् ।
२०. दरिद्रिण इमे गृहस्थिनः कथं कथमपि लोकयात्रां निर्वहन्ति ।
२१. यदा चिन्ता कर्मोन्मुखिनी भविष्यति तदाऽर्था नः [1]समर्धिष्यन्ति

---

१३. **मादुपधायाश्च मतोर्वोऽयवादिभ्य** इति सूत्रस्याप्रवृत्तेः पितृमन्त इत्येव साधु ।
१४. सुधियो धीमतो वेति वक्तव्यम् । शोभना धीर्यस्य सुष्ठु ध्यायतीति वा सुधीः । तत्र मतुपा नार्थः ।
१५. अन्ये देवा अमूर्त्ता मात्रादयश्च मूर्तिमन्त इति चेदभिप्रायो न कश्चिद्दोषः । मात्रादिमूर्तिरूपेण स्थिता ये देवा इति चेदर्थः, मात्रादिमूर्तीनामिति बहुव्रीहिणा वक्तव्यम् । मात्रादयो मूर्त्तयो येषामिति विग्रहः ।
१६. क्रोधिलमिति संस्कृताभासोऽपशब्दः । क्रोधस्वभावस्येति वा वाच्यं क्रोधनस्येति वा ।
१७. न्यूनातिरिक्तसुखदुःखा इति बहुव्रीहिसमाश्रयेण वाच्यम् । न्यूनातिरिक्तं सुखदुःखिन इति वा द्वन्द्वादिनिना ।
१८. अचक्षुष्मानित्यपास्याचक्षुरिति बहुव्रीहिः समाश्रेयः ।
१९. **अस्मायामेधास्रजो विनिरिति** मेधाशब्दाद्विनिर्विहितः । तेन मेधाविन इत्येव साधु ।
२० दरिद्रा इमे गृहस्था इत्येव साधु । इनेरप्रसङ्गात् । गृहे तिष्ठतीति ग्रहस्थः । **सुपि स्थ** इति कर्तरि कः । न हि गृहस्थशब्दो गृहे स्थितिमाह, येन तस्माद् इनिरुत्पद्येत ।
२१. उद्गतं मुखं यस्या इति बहुव्रीहौ स्त्रियां **स्वाङ्गाच्चोपसर्जनादिति** वा ङीषि उन्मुखीत्येव साधु ।

---

१- सिद्धा भविष्यन्ति । फलिष्यन्ति ।

२२. इदानीं महाघनिन एव बलिनो गण्यन्ते ।
२३. मयि नाथ महापराधिनि पातय क्षणं कृपामसृणितं[1] कटाक्षम् ।
२४. इमे साहित्यमहारथिनः कवयो येषामाकुमारं गीयते यशः ।
२५. स्वर्णालङ्करणा अङ्गनाः कामपि स्फातिं[2] कथयन्ति जनपदस्य ।
२६. पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे (अष्टा० २।२।१) ।
२७. विशीर्णकर्णास्यकरा विनियन्तृपताकिनः (भा० द्रोण० ११५। २५) ।
२८. विचकिला इमाः सुमनसः कस्य सचेतसश्चेतो न हरेयुः ।
२९. फलपुष्पलतापत्रशाखाविटपमूलवान् ।
वृक्षबीजे यथा वृक्षस्तथेदं ब्रह्मणि स्थितम् ।। (यो० वा०) ।

---

२२. महाघना इत्येव साधु । उक्तो हेतुः ।
२३. नित्यं महान्तोऽपराधा यस्य सन्ति स महापराधी । कर्मधारयान्मत्वर्थीयः । अत्र नित्ययोगे मत्वर्थीय इनिः । नायमर्थो बहुव्रीहिणा शक्यो गमयितुमिति न तस्य विषयः । बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति ह्युक्तम् ।
२४. महारथा इत्येव युक्तम् । महारथिन इत्यपशब्दः । न चास्य प्रयोगो दृष्टचरः ।
२५. स्वर्णालङ्करणा इति निर्दुष्टम् । स्वर्णस्य विकारः स्वर्णिम इति क्वचिन्मूढेषु प्रचरति ।
२६. एकदेशोऽस्यास्तीत्येकदेशी । तेन **एकगोपूर्वाट्ठञ् नित्यमिति** ठञ् प्राप्नोति । अत एव निर्देशादिनिर्द्रष्टव्यः ।
२७. विनियन्तृपताकिनः । विगतो नियन्ता (हस्तिपकः) पताका च येषां ते विनियन्तृपताका इति बहुव्रीहिणा वक्तव्यम् । न तु द्वन्द्वगर्भात्कर्मधारयाद् इनिः कार्यः ।
२८. विकचिला इत्यपशब्दः । **हिन्दीव्यवहारेण परवान् प्रयोक्तैवं प्रयुङ्क्ते** । विकचा व्याकोचा विकसिता इति वा प्रयोक्तव्यम् ।
२९. अत्र योगवासिष्ठवचने मतुब्दुष्यति द्वन्द्वादिनिना भवितव्यम् ।

---

१-कृपया स्निग्धम् । २-वृद्धिम् ।

३०. 'रथिनो रथिको रथी' इत्यमरे पाठः। तत्र रथिन इत्येकवचना-
न्तं कथम्?
३१. सुरभिलतमा मूर्धन्यूर्ध्वं कुतः कुसुमावली (नारा० ५०।६)
३२. तत्स्तोत्रहर्षुलमनाः (नारा० १२।६)।
३३. विषाणी ककुद्वान् प्रान्तेवालधिः सास्नावानिति गोत्वे लिङ्गम्
(वै० सू० २।१।८)।

---

३०. मेधारथाभ्यामिरन्निरचौ इति वार्तिकेन रथिर इति तु भवति।
रथिन इत्यपपाठ इति स्वामी।
३१. सिध्मादिष्वदर्शनात्सुरभिलमिति न सिध्यति।
३२. हर्षुलमिति दुष्टम्। मत्वर्थीयेषूलचोऽविधेः। औणादिकत्वेन
साधुत्वेपि रूढेरपहारो दोषः। हर्षुलो मृगो भवति कामुको वा।
३३. हरित् ककुद् गरुत्—एते यवादिषु पठ्यन्ते। तेन झय इति प्राप्तं
वत्वं न भवति। ककुद्मान् इत्येव साध्विति पाणिनीयाः।

**इति तद्धितेषु मत्वर्थीयविवेचनम्।**

## विकारार्थाधिकारस्तृतीयः।

१. प्रायेण क्रमुकविकाराश्चापा भवन्ति क्वचित् तालमया अपि।
२. उत्तरेण मे निकेतनं काञ्चनी वासयष्टिरित्युपलक्षय।
३. दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः। (शाकुन्तले प्रक्षिप्तम्)।

---

१. **तालादिभ्योऽण्** इति मयडादीनामपवादोऽण् विधीयते। तेन
ताला इत्येव साधु।
२. क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते इत्यौत्सर्गिकः तस्य
विकार इत्यण् भवति न तु नित्यं **वृद्धशरादिभ्य** इत्यपवादभूतो
मयट्। तेन काञ्चनीति साधु। **इदंरूप एवैष शब्दः प्रयोगेषु
प्रचरति।**
३. **नित्यं वृद्धशरादिभ्य** इति शरादित्वाद् दर्भशब्दान्मयडेवोचितः।
दर्भमयमित्येव साधु।

४. न दारवे पात्रे दुह्यात् । अग्निर्वा एष यद् दारुपात्रम् ।
५. रजतमय्यः शृङ्खला लौहीभ्यो नतरां विशिष्यन्ते, केवलं रुचिरतया विभ्रमयन्ति प्रग्रहान्[1] ।
६. क्षत्रियस्य हि मुञ्जमयी मेखला विधीयते मन्वादिभिः शास्त्रकारैः ।
७. आश्मानि प्रायशो गृहाणि वाराणसेयानि ।
८. कर्पासमयानि वासांसि न तथा हृदयग्रहणीयानि[2] भवन्ति यथा कौशेयानि ।
९. यथा जतुमयान्याभरणानि परिहरणीयानि भवन्ति तथा त्रपुमयानि गृहभाजनानि ।

---

४. दारुशब्दस्य वृद्धत्वात्ततो **नित्यं वृद्धशरादिभ्य** इति नित्यं मयटि दारुमये पात्र इति वक्तव्यम् । छान्दसमिदं वचनम् । छन्दसि च सर्वे विधयो विकल्प्यन्त इत्यणि दारवशब्दः साधुः । रजतादिगणे नीलदारु पीतदारु तीव्रदारु इति शब्दत्रितयं पठ्यते । दारुशब्दः स्वतन्त्रस्तु न श्रूयत इति **प्राणिरजतादिभ्योञ्** इत्यञोऽप्रसङ्गः ।
५. **प्राणिरजतादिभ्योञ्** इत्यञि स्त्रियां ङीपि राजत्य इति न्याय्यं स्यात् । **मयड् वैतयोर्भाषायामिति** पक्षे मयटि रजतमय्य इति न भवति । रजतशब्दोऽनुदात्तादिः । ततोऽ**नुदात्तादेश्चे**त्यञि सिद्धे पुनर्वचनं मयड्बाधनार्थम् ।
६. **मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोरि**ति विकल्पेन मयटि मुञ्जमयीति साधु । पक्षे मौञ्जीति ।
७. अश्मनो विकार आश्मः, **आश्मन** इति च । टिलोपः पाक्षिकः । तस्य विकार इत्यण् । मयड् वैतयोरित्यनेन मयटि अश्ममयानीति च भवति ।
८. **बिल्वादिभ्योऽण्** इत्यत्र गणे कर्पासी शब्दः पठ्यते । तेन कार्पासानीत्येव साधु । मयड्विकल्पोऽपि न । **आच्छादने मयटः प्रतिषेधात्** ।
९. **त्रपुजतुभ्यां षुक्** इत्यण् षुगागमश्च । तेन जातुषाणि त्रापुषाणीति च भवति । **ओरञ्** इत्यस्यापवादः । मयड् वैतयोर्भाषायामित्यनेन विभाषा मयट् तु भविष्यत्येव । तेन जतुमयानि त्रपुमया-

---

१- बन्दीः, वद्धान् । २- करणेऽनीयर्, यथा स्नानीयमित्यत्र ।

१०. हरीतक्याः फलानि हारीतकानीत्युच्यन्ते बालैः ।
११. अशोको वृक्षः, अशोकं पुष्पमिति कथम् ।
१२. हिरण्यमयेन पात्रेण सत्यस्यापिहितं मुखम् ।
१३. स्वर्णिले वाससी वसित्वा[1] किमिव न रोचन्ते योषाः ।
१४. न हि यत्किञ्चिदाप्यं तत्तीर्थं भवति । यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ।
१५. मौक्तिकी मालिका सा (मोह० ५।२३) ।

---

नीति चापि रूपे साधुनी ।

१०. **हरीतक्यादिभ्यश्चेति** फले प्रत्ययस्य लुब् भवति । **हरीतक्यादिषु व्यक्तिरिति** लुपि व्यक्तिर्युक्तवद् भवतीति हरीतक्य इत्येव साधु ।

११. **पुष्पमूलेषु बहुलमिति** प्रत्ययस्य लुप् । बहुलवचनात् क्वचिल्लुक् । तेन युक्तवद्भावो नेत्यशोकमिति क्लीबं साधु ।

१२. **दाण्डिनायनादिसूत्रे** हिरण्मयमिति निपातितम् । तेन हिरण्यमयमित्यपशब्दः ।

१३. सौवर्णे सुवर्णमये (स्वर्णमये) इति वा साधु । सर्वस्वर्णमयी लङ्केति श्रीरामायणे ।

१४. **नित्यं वृद्धशरादिभ्य** इत्यत्र नित्यग्रहणं किमर्थम् । यावतारम्भसामर्थ्यादेव नित्यं भविष्यतीत्याशङ्क्य एकाचो नित्यं मयटमिच्छन्ति तदनेन क्रियत इत्युक्तं काशिकायाम् । तेन अप्शब्दान्मयटि **अम्मयमि**त्येव साधु । तथा च **नाम्मयानि तीर्थानि न देवा मृच्छिलामया** इति श्रीमद्भागवते प्रयोगः । आप्यमिति त्वपशब्द एव । क्वचिद् आपोमयमिति दृश्यते । तच्छान्दसम् ।

१५. मौक्तिकीत्यपशब्दः । मौक्तिकानां विकार इत्यर्थे **नित्यं वृद्धशरादिभ्य** इति मयटा भवितव्यम् । मौक्तिकमयीत्येव साधु । मौक्तिकानामियम् इति शैषिकेऽर्थे **वृद्धाच्छ** इति छः स्यात् । मालाशब्दोऽप्यस्थाने । **माला हि ग्रथितेषु रूढा यथा पुष्पमाला** । स्रक्छब्दोऽपि तद्विषयः । पुष्पादिभ्योऽन्यत्र हारशब्दं प्रयुञ्जते कुशलाः प्रयोक्तारः ।

---

१- वस आच्छादनेऽदादिः ।

## भावकर्माधिकारश्चतुर्थः ।

१. यः कौमार्येऽनभिविनीतः स कदा नु विनयं ग्रहीता[1]
२. स्त्रियाः पत्युर्ऋक्थे दायाद्यत्वमस्तीत्येके, नास्तीति चैके ।
३. चौरिकाचोरिकयोः शब्दयोः समानार्थकयोरपि भिद्यते व्युत्पत्तिः । तां चद्वेत्थ शब्दविदसि नूनम् ।
४. भावे आचतुर्यमित्यपि साधु, अचातुर्यमित्यपि । तद् उपपाद्यम् ।
५. ऐक्यसम्पादनाय सौमनस्यतालाभाय च सर्वैश्चेष्टनीयम् ।
६. न त्वमार्य्यशास्त्राणां विशेषतां वेत्थ यदेवमवादीः ।

---

१. **प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्** इत्यञि कौमारमित्येव साधु ।

२. **गुणवचनब्राह्मणादिभ्यः कर्मणि** चेति भावकर्मणोरर्थयोः ष्यञि दायाद्यम् इत्येव न्याय्यम् । **उक्तेऽर्थे प्रत्ययपौनरुक्त्यं न युज्यत इति त्वप्रत्ययेन नार्थः । उक्तार्थानामप्रयोगात्** ।

३. चोरशब्दो मनोज्ञादिषु पठ्यते । तेन **द्वन्द्वमनोज्ञादिभ्यश्चेति** वुञि स्त्रियां टापि चौरिकेति रूपम् । **धात्वर्थनिर्देशे ण्वुल्वक्तव्य** इति चोरयतेर्ण्वुलि टापि चोरिकेति कृदन्तम् ।

४. **न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटबुधकतरसलसेभ्य** इत्यत्र चतुरपर्युदासान्नञ्पूर्वादपि चतुरशब्दाद् **गुणवचनब्राह्मणादिभ्यः कर्मणि चेति** ष्यञि **तद्धितेष्वचामादेरि**त्यादिवृद्धौ सत्यामाचतुर्यमिति रूपम् । अचतुरस्य भावः कर्म वेत्यर्थः । चतुरशब्दात्केवलात्तेनैव सूत्रेण ष्यञि पश्चान्नञ्समासे अचातुर्यमित्यपि भवतीत्युभयं सूपपन्नम् । चतुरस्य भावः कर्म वा चातुर्यम् । तन्न भवत्यचातुर्यम् ।

५. सुमनसो भावः सौमनस्यमिति **गुणवचनब्राह्मणादिभ्यः कर्मणि चेति** ष्यञि सिद्धम् । तत उक्तार्थानामप्रयोग इति प्रत्ययान्तरस्याप्रसक्तेः सौमनस्यतेप्यपशब्दः ।

६. विशेष इति **भावे** घञि रूपम् । घञबन्तः पुंसीति नियमादयं पुमान् । उक्तो भाव इति भावे प्रत्ययान्तरस्य प्रसङ्ग एव नेति **विशेषतेत्यपशब्दः** ।

---

१. विलापे श्वस्तनी (लुट्) ।

७. शक्योऽयमर्थः परिहर्तुम् । नास्य ममावश्यकता ।
८. कौमारकेऽपि गिरिवद्गुरुतां दधान उद्धतगतिरेष कः ?
९. शिरीषे यत्सौकुमारकं निसर्गसिद्धं न तत्कुसुमान्तरे ।
१०. कुरुपाण्डवानां भविष्यन्तीमाजिं[1] वारयितुं सन्धिं च कारयितुं भगवान् वासुदेवः स्वयं दूत्यमुपेयिवान् ।
११. अयमहं भवन्तमनुरुन्धानश्चिरं मौनतामालम्बे ।
१२. आदिमध्यावसानेषु भजसा यन्ति गौरवम् । यरता लाघवं यान्ति मनौ तु गुरुलाघवम् ॥
१३. गृहसम्बन्धीनि कार्याणि[1] वैयाकुलीमनासेव्य नैयूनीं[2] च विवर्ज्य निर्वर्त्यानि ।

---

७. अवश्यम्भाव आवश्यकम् । मनोज्ञादित्वाद्वुञ् । अव्ययानां भमात्रे टिलोपः । भावस्य वुञाभिहितत्वात्प्रत्ययान्तरस्य तलः प्रसङ्ग एव नास्तीत्यावश्यकतेत्यपशब्दः ।
८. कौमारमेव कौमारकम् । स्वार्थे कन् । कौमारव्युत्पत्तिस्तूक्ता ।
९. गुणवचनेत्यादिना भावे सौकुमार्यमित्येव साधु ।
१०. **दूतवणिग्भ्यां चेति** काशिका । तेन यप्रत्यये दूत्यमिति साधु । **गुणवचने**त्यादिना ष्यञि तु दौत्यमित्यपि भवति ।
११. मुनेर्भावो मौनम् । **इगन्ताच्च** लघुपू**र्वादि**त्यण् । **उक्तो भावोऽणेत्यपरः प्रत्ययो नापेक्ष्यते । तेन मौनतेत्यपशब्दः ।**
१२. **इगन्ताच्च लघुपूर्वा**दित्यणि गौरवमिति साधु । गुरुलघ्वोर्भाव इत्यर्थे द्वन्द्वमनोज्ञादिभ्यश्चेति वुञा भाव्यम् । **पर्यायशब्दानां गुरुलाघवचिन्ता नास्तीति भाष्यप्रयोगात् साधु** । अण् प्रत्ययः । उत्तरपदवृद्धिश्च ।
१३. व्याकुलस्य भावः वैयाकुल्यम् । ष्यञ् । स्त्रीत्वविवक्षायां षित्वान्ङीषि वैयाकुलीति सिध्यति । तथापि प्रयोगो नास्तीति परिहरणीयमिदं शब्दरूपम् । एवं न्यूनस्य भावो नैयून्यं स्त्रियां नैयूनीति रूपसाधुत्वेऽपि न व्यवहार्यं शिष्टानुग्रहोस्य नास्तीति । **नहि वैयाकरणैः शब्दाः क्रियन्ते कुलालेन घटा** इव ।

---

**१- युद्धम् । आजिः स्त्रियाम् ।**

१४. उद्भटभटचातुरीतया रुद्धानां दुर्गस्थानां प्राणाः कथंचिद्रक्षिताः।

१५. श्रीसुरेन्द्रनाथो वन्योपाध्यायो वाग्मिनां वरिष्ठ इति तस्य वक्तृतां श्रोतुमहं कदाचित्कलिकातामयाम्।

१६. अमृतस्य चन्द्रिकाया ललितायाश्चापि कवितायाः।
सुजनस्य च निर्माणं जनयति न हि कस्य सन्तोषम्॥

१७. अनेन वनवासेन मम प्राप्तं फलद्वयम्।
पितुश्चानृण्यता धर्मे भरतस्य प्रियं तथा॥ (रा० २।६४।१७)

१८. तन्वानाः कन्यकानामसितनयनयोराञ्जनं दीर्घिमानम् (मोह० ४।७)।

---

१४. उद्भटभटचातुर्येति तृतीयैकवचने रूपं साधु। चातुरीति चतुरशब्दात्ष्यञि स्त्रियां ङीषि सिद्धम्। उक्तो भावः ष्यञेत्यपरो भावप्रत्ययोऽनवकाशः।

१५. वक्तुर्भावो वक्तृता। न हि सा शक्या श्रोतुम्। भावो नाम यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशः स भवति। **तस्याभिधाने त्वतलौ विहितौ** न तु कर्मणि। **तेन प्रवचनमिति वाच्यम्।**

१६. आ च त्वात् (५।१।१२०) इत्यत्र चकारोऽधिकविधानार्थमिति दीक्षितः, तेन त्वतलौ कर्मण्यपि भवतो गुणवचनब्राह्मणादिभ्यः कर्मणि चेतिप्रभृतिषु सूत्रेषूपात्ताभ्यस्ताभ्यस्ताभ्यः प्रकृतिभ्यः। वस्तुतोऽपवादैः सह समावेशार्थमिदं वचनमाचार्य्येण पठितम्। तेन भावे विहितानि ष्यञादीनि प्रत्ययान्तराण्येव त्वतलोरपवाद इति तैः सह त्वतलोः समावेशोभ्यनुज्ञायते नाम, न तु कर्मणि विहितैरनपवादभूतैरिति **कवेः कर्म कवितेत्यत्र तल् दुर्लभ इति मतं नः।**

१७. अनृणस्य भाव आनृण्यम्। ष्यञ्। ष्यञोक्ते भावेऽपरो भावप्रत्ययो नापेक्ष्यत इति स परिहार्यः।

१८. दीर्घिमानम् इति दुष्यति। **प्रियस्थिरस्फिरेत्यादिना** (६।४।१५७) इमनिचि दीर्घस्य द्राघ इत्यादेशो विधीयते। तेन द्राघिमाणम् इति वक्तव्यम्। मूले णत्वाभावो दोषान्तरम्।

१९. वाणी'''मान्द्यतां मावतीतात् (मोह० ६।२८) ।
२०. इति मुनिः पुनराप पुरातनीं प्रकृतिमात्तमहाप्रभुवात्सलः (मोह० ७।४१)
२१. कच्चिन्न खलु कापेयी सेव्यते चलचित्तता (रा० ६। १२७।२३) ।
२२. चकाराचार्यकं तत्र कुन्तीपुत्रो धनञ्जयः (भा० द्रोण० १४७।६) ।

---

१९. ष्यञि मान्द्यम् इति भाववाचि परिनिष्ठितं रूपम् । अपरेण भाववाचकेन तला नार्थः । न हि सर्वत्राधिकस्याधिकं फलं भवति ।
२०. वात्सलम् इति प्रातिपदिकं नास्ति । वत्सलस्य भावो वात्सल्यं ष्यञि सिद्धम् ।
२१. कापेयी त्यत्र **कपिज्ञात्योर्ढग्** (५।१।१२७) इति भावे ढग् न । तथा सति कापेयमिति नपुंसकं स्याद् वृत्ति च न विशिष्यात् । **इतश्चानिञ** (४।१।१२२) इत्यपत्ये ढग् ज्ञेयः । कपिसम्बन्धिनी कपौ भवा वृत्तिस्तदपत्यत्वेनोपचर्यते ।
२२. **योपधाद् गुरूपोत्तमाद्** वुञ् (५।१।१३२) इत्याचार्यशब्दाद् भावकर्मणोर्वुञ् विहितः । इह चाचार्यस्य संमान इत्यर्थः । स च पाणिनेरनभिमतः । दुर्लभः समाधिः ।

**इति तद्धितेषु भावकर्मविवेचनम् ।**

## स्वार्थिकाधिकारः पञ्चमः ।

१. ओषधिं पिब भिषङ्निर्दिष्टां यथा ते ज्वरोऽपेयात् ।
२. रमायाः काली शाटी श्यामायाश्च श्येनीत्युभे सम्पद्येते[१] ।

---

१. ओषध्यः फलपाकान्ता इत्यमरः । तेन व्रीह्यादयस्ता भवन्ति । न हि ताः पेया भवन्ति । **ओषधेरजातावि**त्यणि औषधमिति तु प्रयोज्यम् ।
२. **कालाच्च** (५।४।३३) इति कालशब्दाद्रक्ते कन् प्रत्ययो भवति । तेन कालिकेत्येव साधु । काली निशा, काली गौरिति तु नित्ये वर्णे रक्तार्थभावे ।

---

१- शोभेते ।

३. अयं लोहितक: कोपेन । एनं परिहर ।
४. अयं देवदत्तो ब्राह्मणजातिर्न तु क्षत्रियजातिरिति कथं जानीषे ?
५ बहुश्रुतोप्यननुष्ठितशास्त्रार्थो नाऽलन्तरां भवति स्वमुन्नेतुम् ।
६. स्वरतो वर्णतो वा हीन: शब्दो न विवक्षितमर्थमाह ।
७. सहस्रश: समेतानां परिषत्त्वं न विद्यते (मनु०) ।
८. युधिष्ठिर: श्रेष्ठतम: कुरूणाम् ।
९. अयमृजुर्मार्ग:, अयं च रजीयान् । येनेष्टं तेन गम्यताम् ।

---

३. **वर्णे चानित्य** इति लोहितशब्दात् स्वार्थे कनि लोहितक इति साधु ।

४. **जात्यन्ताच्छ बन्धुनि** (५।४।९) इति स्वार्थिके छप्रत्यये ब्राह्मण-जातीय:, क्षत्रियजातीय इति च भवति । **ब्राह्मणत्वं जातिरस्येति ब्राह्मणजाति: । स एव ब्राह्मणजातीय: ।**

५. **किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे** इत्यद्रव्यप्रकर्ष आमो विधेरिह द्रव्यप्रकर्षे तस्याप्रसङ्गात् अलन्तर इति भवितव्यम् । स्वार्थिका: प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते पि इति वचनात्पुंस्त्वम् ।

६. **अपादाने चाहीयरुहोरि**त्यनेन पञ्चम्यास्तसिरिह न प्राप्नोति, हीयते: पर्युदासात् । नैषा पञ्चमी । किन्तर्हि तृतीया । स्वरेण वर्णेन वा हीन इत्यर्थ: । **सार्वविभक्तिकस्तसि:** ।

७. सहस्रं सहस्रं ये समेतास्तेषामित्यर्थ: । तेनेह वीप्साऽस्ति कारक-त्वमपीति **संख्यैकवचनाच्च वीप्सायामिति** श: ।

८. यदा च प्रकर्षवतां पुन: प्रकर्षो विवक्ष्यते तदातिशायिकान्तादपर आतिशायनिक: प्रत्ययो भवत्येवेति वृत्तावुक्तम् । तेन श्रेष्ठतम इति साधु ।

९. **र ऋतो हलादेर्लघो:** [६।४।१६१) इति रविधौ परिगणनँ कृतम् । तद्यथा—

**पृथुं मृदुं भृशं चैव कृशं च दृढमेव च ।**
**परिपूर्वं वृढं चैव षडेतान् रविधौ स्मरेत् ।। इति ।**

रविकल्पस्तु च्छन्दोविषय:, **विभाषर्जोश्छन्दसीति** । तेन ऋजीयान् इत्येव साधु ।

१०. विद्याधनः सोमदत्तो मघवतोऽपि भाग्यवन्तमात्मानमजीगणत् ।
११. धर्मे स्मृतयः प्रमाणं वेदास्तु प्रमाणतराः ।
१२. कुलधर्मो दक्षिणतश्चूडा वासिष्ठानाम् ।

---

१०. केचित्स्वार्थिकाः प्रत्यया नित्यमिष्यन्ते तमबादयः प्राक् कन इतीष्टिः । तेन भाग्यवत्तरमिति युज्यते । केचिन्महाविभाषया तरपोऽभावं समादधते ।

११. **अतिशयेन प्रमाणं प्रमाणतराः** । स्वार्थिकाः प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्तेपीति वचनात्पुंस्त्वं बहुत्वं चोपपन्नम् ।

१२. **दक्षिणोत्तराभ्यामतसुच्** इति साधु ।

## शैषिकाधिकारः षष्ठः

१. केचिच्छ्रौता आहुरक्रियार्था मन्त्रा अनर्थकाः । तदपरे न सहन्ते ।
२. अद्य बहोः कालाच्छ्रीमदीयं दर्शनं लब्धम् । ब्रूहि सर्वमेतं कालं क्वाऽवात्सीः ।
३. ब्राह्मी खल्वेषा त्रयी वाङ् न पौरुषी ।
४. अद्यतनीयाः पण्डितमानिनः केचन शिष्टजुष्टां वाग्वर्तनीं[२] व्यतिक्रामन्ति न च तत्र दोषं पश्यन्ति ।

---

१. **शेषे** (४।२।९२) इति लक्षणमधिकारश्च । श्रुतौ विहितं श्रौतमिति भवति । **न च पुरुषः श्रौत इति प्रयोगोऽस्ति** ।

२. श्रीमच्छब्दो न वृद्धः । तेन वृद्धाच्छ इति छस्याप्रसङ्गः । **तेन** वृत्त्यनाश्रयेण श्रीमत इति षष्ठ्यन्तं प्रयोज्यम् । **केचिदभिनवशब्दनिर्मितिरसिकाः श्रैमत्कशब्दं तत्रार्थे प्रयुञ्जते तेऽपि साहसाद्वारयितव्याः । न हि व्याकरणमभूतप्रादुर्भावनं भवति किन्तर्हि भूतस्य व्युत्पादनम्** ।

३. पौरुषीत्यपशब्दः । **पुरुषाद्वधविकारसमूहतेनकृतेष्विति** ढञि पौरुषेयीत्येव शब्दः । अयं ढञ् शैषिको न ।

४. **सायंचिरंप्राह्णे** इत्यादिसूत्रेण ट्युलि तुडागमे च अद्यतना इति सिद्धम् । ततश्छस्याप्रसङ्गादद्यतनीया इति प्रामादिकमेव ।

५. वासवीनां[२] चमूनां कार्तिकेयः सेनानीर्बभूव ।
६. अनभिज्ञोऽहमत्रत्यस्य प्राक्कालीनस्य वृत्तान्तस्य ।
७. पार्वतीयानीमानि फलानि सुतरां स्वदन्ते नो नागरिकेभ्यः ।
८. वानरी सेना जातु राक्षसीं चमूं जयेदिति केन स्वप्नेऽपि संभावितमासीत् ।
९. पश्चात्तनैः कैश्चिद्विशेषज्ञैर्नुद्यमाना एतद्देशजाः शास्त्रेषु श्रद्धां जहति ।
१०. आपत्कालिकेयं रीतिरित्यभ्युपगमो विदुषाम् ।
११. नैकग्रामीणमतिथिं विप्रं साङ्गतिकं[१] तथा । उपस्थितं गृहे विद्यात् (मनु० ३।१०३) ।

---

५. वासवस्येमा वासवीया इति तु न्याय्यम् । **वृद्धाच्छः** । वा नामधेयस्य **वृद्धसंज्ञा** वक्तव्येति त्वप्राप्तविभाषा । अत एवोदाहृतं **वृत्तौ** देवदत्तीयाः, दैवदत्ता इति ।

६. प्राक्कालिकस्येति तु युक्तम् । **कालाट्ठञ्** । समानकालीनं प्राक्कालीनमित्यादयोऽपभ्रंशा एवेति प्रामाणिकाः ।

७. **विभाषाऽमनुष्ये** इति च्छे पर्वतीयानीत्येव साधु । पक्षेऽणि पार्वतानीति भवति ।

८. **वृद्धाच्छः** इति छे वानरीया सेनेति वक्तव्यम् ।

९. **दक्षिणापश्चात्पुरसस्त्यक्** इति त्यकि पाश्चात्य इति भवितव्यम् ।

न च दिग्देशवाचिनि पश्चाच्छब्दे सावकाशं त्यकं कालवाचकात् ट्युट्युलौ बाधेते परत्वादिति वाच्यम् । **अग्रादिपश्चाड्डिमच्** इति डिमचा ट्युट्युलोर्बाधस्य दुर्वारत्वादिति **पश्चात्तनमिति सर्वथाऽनुपपन्नम्** । पश्चात्तन्वन्ति पश्चात्तना इति तु वैयाकरणस्य व्यायाममात्रम् ।

१०. **काश्यादिभ्यष्ठञ्ञिठावित्यत्र आपदादिपूर्वपदात्कालान्तात्** इति पठ्यते । तेन ठञि आपत्कालिकी, ञिठे च आपत्कालिकेति रूपद्वयं साधु ।

११. **ग्रामाद्यखञौ**विति ग्रामात्प्रत्ययविधिः, न तु ग्रामान्तात् । **ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति** । तेनैकग्रामीण इति प्रयोगश्चिन्त्यः पाणिनीयानाम् ।

१२. इदं सांवत्सरिकं पर्वेति नानादिग्देशेभ्यः संनिपतिता यात्रिकास्तीर्थेषु सिष्णासवः ।

१३. औषसेन रागेण रञ्जिताः ककुभः काममपि रमणीयतां वहन्ति ।

१४. का नाम राष्ट्रीयता । राष्ट्रे भवतां नोऽधिकारा अपि सन्ति कृत्यान्यपीति सततं स्मरणीयम् ।

१५. इयं हि कापुरुषी गाथा । नात्र वीरैर्मनो देयम् ।

१६. पार्वतोऽ जनोयं न वेद नागरकवृत्तं विशेषत. । कादाचित्क एवास्य नगरेष्वागमः ।

१७. तत्र जन्यं रघोर्घोरं पार्वतीयैर्गणैरभूत् । (रघौ ४।७७) ।

१८. गोमहिष्यादयो ग्राम्याः पशवः, गवयादयस्त्वारण्यकाः ।

१९. राजवंश्योऽयं न तु राजा, तथापि राजवदस्य कर्माणि ।

---

१२. **सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण्** इत्यत्र **संवत्सरात्फलपर्वणोरिति** गणसूत्रम् । तेन सांवत्सरं पर्वेत्येव साधु । पर्व महोत्सवः ।

१३. कालाट्ठञि औषसिकेनेति साधु ।

१४. **राष्ट्रावारपाराद्घखाविति** राष्ट्रिय इत्येव रूपम् । ततो भावे तल् ।

१५. **वृद्धाच्छ** इति कापुरुषात्प्रातिपदिकाच्छे कापुरुषीयेत्येव युक्तम् ।

१६. **पर्वताच्चेति** छप्रत्यये पर्वतीय इत्येव शोभनं वचः ।

१७. पर्वतीयानामिमे भवन्तीति पर्वतीयशब्दाच्छैषिकेऽणि पार्वतीयैरिति साधु ।

१८. **अरण्यान्मनुष्ये** (४।२।१२९) इत्यत्र **पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति** वक्तव्यादत्रारण्यशब्दाद् वुञ् न । तेनौपसंख्यानिकेणे आरण्या इत्येव साधु ।

१९. **दिगादिभ्यो यत्** इत्यत्र दिगादिगणे वंशशब्दः पठितो न राजवंशः । तेन यतोऽप्रसङ्गाद् **वृद्धाच्छ** इति छे **राजवंशीय इत्येव साधु** । राज्ञो वंश्यो राजवंश्य इत्येवं वा विग्रहीतव्यम् ।

२०. इयं सामुद्री नौः, इयं च नादेयी । विशेषो हि लक्ष्यते ।
२१. कीदृशी तत्कालिका स्थितिरार्य्याणामिति व्यक्तं न विद्मः ।
२२. इह भरतभुवि तास्कर्यस्य नामापि नाश्रूयतेति प्राच्यमैतिह्यम् ।
२३. कालिङ्ग सम्पराये महन्नाम कदनमजनिष्ट जनानां योधानामयोधानां चेति युद्धादुदविजिष्ट महाराजोऽशोकः ।
२४. स्रौघ्नेभ्यः पाटलिपुत्त्रका आढ्यतराः किल ।
२५. काश्मीरका हि प्रायेण दुर्गता अत एव कौसृतिकाः[1] ।
२६. किं भो आङ्गोऽसि ? नाहमाङ्ग आङ्गकस्त्वस्मि ।
२७. इदं काश्मीरकं कौशेयमुत्कृष्यते कौशेयान्तरात् ।

---

२०. **धूमादिभ्यश्चे**त्यत्र (४।२।१२७) गणे **समुद्रान्नावि मनुष्ये** चेति पठितम् । तेन सामुद्रिका नौरिति वुञि रूपम् । अन्यत्र **सामुद्रं जलं सामुद्रस्तरङ्ग** इत्यण् भवति । **नद्यादिभ्यो ढक्** (४।२।९७) इति ढकि स्त्रियां ङीपि नादेयीति साधु ।
२१. **काश्यादिभ्यष्ठञ्ञिठावित्यत्र आपदादिपूर्वपदात्कालान्तादिति** पठितम् । तेन ञिठे स्त्रियां टापि तात्कालिकेति साधु । ठञि तु ङीपि तात्कालिकीति भवति ।
२२. **द्युप्रागपागुदक्प्रतीचो यत्** इत्यत्र अव्ययात्तु कालवाचिनः परत्वात् ट्युटयुलौ भवत इति वृत्तावुक्तम् । तेन **प्राक्तनमित्येव** साधु । **प्राचि देशे प्रतीच्यां दिशि वा भवस्तु प्राच्यो भवति ।**
२३. **अवृद्धादपि बहुवचनविषयात्** (४।२।१०५) इत्यनेन वुञि कालिङ्गक इत्येव साधु ।
२४. **रोपधेतोः प्राचामिति** वुञि पाटलिपुत्त्रका इत्येव साधु ।
२५. **कच्छादिभ्यश्च** (४।२।३३) इत्यत्र गणे कश्मीरशब्दः पठ्यते **मनुष्यतत्स्थयोर्वुञ्** इत्यग्रिमं सूत्रं कच्छादिभ्य एव वुञं विधत्तेऽणोऽपवादम् । तेन प्रकृते काश्मीरका इत्येव साधु ।
२६. **अवृद्धादपि बहुवचनविषयात्** इति वुञि आङ्गक इत्येव वुञि साधु ।
२७. **कच्छादिभ्यश्चे**त्यनेनाणि काश्मीरमित्येव साधु ।

---

१. **छाद्मिकाः, अनृजवः, जिह्माः ।**

२८. इदं कौमुद्यां पौर्वार्धं सूत्रमिदं चौत्तरार्द्धम् ।
२९. कादयो मावसाना वर्गीया वर्णाः, शेषा अवर्ग्याः ।
३०. भारं स्वकं च परकं चोद्‌वहन्ति ।
३१. इदमावश्यकीयमिदं नेति न सहसा शक्यं विनिर्णेतुम् ।
३२. अतीते दशाब्दे मनुष्यगणने बहवः स्वमतान्धाः श्रद्धाजडा अन्यथाऽलेखयन् स्वजनसंख्याम् ।
३३. प्रायेणापूपिका वैश्याः पायसिकाश्च विप्राः ।
३४. केचिदाहुर्गव्यं पयो गुणवत्तमम्, अपर आजिकमिति ।
३५. बाल्यकालीनो विवाहः कुलस्य समुत्सादक इति दर्शनं नः ।

---

२८. **दिक्पूर्वपदाट्ठञ् चे**ति यताऽनुवृत्तेन भवितव्यं ठञा वा । तेन पूर्वार्द्धचं पौर्वार्धिकमिति वा भवति । एवं चोत्तरार्द्धचं मौत्तरार्द्धिकमिति वा ।

२९. **दिगादिभ्यो यत्** इति यति वर्ग्या इत्येव साधु । वर्गान्ताच्छस्य विधानात् । न वर्ग्या अवर्ग्याः ।

३०. **कुग्जनस्य परस्य चे**ति गहादिषु पठ्यते । तेन परकीयमित्येव साधु ।

३१. आवश्यकशब्दाद् अर्शआदिभ्योऽच् इत्यचि आवश्यकमित्येव साधु । वृद्धत्वेऽपि च्छस्य प्रसङ्गो न । शैषिकार्थस्यासत्त्वात् ।

३२. **कालाट्ठञ्** इति ठञि दाशाब्दिके इति वक्तव्यम् । दशसु अब्देषु भवमित्यर्थः । **दशाब्दशब्दो दशाब्दान्ते वर्तते यथा मासे देयं मासिकमित्यत्र मासशब्दो मासान्ते ।**

३३. **अचित्ताददेशकालाट्ठक्** (४।३।९६) इति ठकि आपूपिकाः पायसिका इति च साधु । अपूपा भक्तिरस्य, पायसं भक्तिरस्येति विग्रहः ।

३४. गोरिदं गव्यम् । तस्येदमित्यणप्रसङ्गे **गोपयसो र्यत्** इति यत् । तेन गव्यमिति साधु । अजाया इदमाजम् । तस्येदमित्यण् ।
३५. बाल्यकालिक इत्येव साधु । कालाट्ठञ् ।

३६. शारीरिकसूत्रैर्जीवब्रह्मणोभेदः प्रतिपाद्यत इति दर्शनं नः ।
३७. अद्यतनीनो वाचि वेषे चाडम्बरः केवलं विडम्बनैव[1] ।
३८. इदं गतवर्षिकस्याधिवेशनस्य विवरणं शृणुत ।
३९. अस्य निकेतस्य पूर्व्यः प्रदेशोऽभिरामतरः पश्चिमादिति मे मतम् ।
४०. पञ्चापदेशे सरहन्दपुरेऽस्त्यैतिहासिकः प्राकारो यं दिदृक्षवः प्रत्यब्दमुपनमन्ति शतशो भक्तिमन्तो नराः ।
४१. चीनदेशस्य मध्यो भागः प्रायेण नदीमातृकः ।
४२. पारस्परिकः प्रेमा यथान्तर्भेदं चिकित्सति न तथेतरत्किञ्चित् ।

---

३६. कुत्सितं शरीरं शरीरकम् । तत्सम्बन्धी शारीरको जीवात्मा । तमधिकृत्य कृतानि सूत्राणि शारीरकीयाणीति वाच्यानि स्युः । अधिकृत्य कृते ग्रन्थे इति वृद्धत्वाच्छप्रत्ययप्रसङ्गात् । **शारीरकमिति त्वभेदोपचारात्** ।

३७. अद्यतन इत्येव साधु । खप्रत्ययाप्रसक्तेः ।

३८. गतं च तद्वर्षं चेति गतवर्षम् । तत्र भवम् गातवर्षिकमिति युज्यते । कालाट्ठञ् । **वर्षस्याभविष्यतीत्युत्तरपदवृद्धेरप्रसङ्गः** । **संख्याया** उत्तरस्य वर्षशब्दस्याभावात् । **वस्तुतो गातवर्षिकमित्यपि न प्रसिध्यति, तद्धि तद्धितप्रियैः कल्प्यतेऽधुनातनैः । गतवर्षभवस्येत्यादिस्तु श्रेयान्प्रयोगः श्रेयः** ।

३९. **पूर्वैः कृतमिनयौ च**ेति (४।४।१३३) यप्रत्यये पूर्व्य इति च्छन्दसि साधु । पूर्वैः कृतः पूर्व्य इति च विग्रहः । **भाषायां तु नायं शब्दः प्रयुज्यते** । तेन पूर्व इत्येव साधु ।

४०. **आख्यानाख्यायिकेतिहासपुराणेभ्यष्ठग्वक्तव्य** इति ठकि ऐतिहासिक इति सिध्यति । इतिहासमधीते वेद वेत्यर्थः । **अत्रैवार्थे**ऽस्य प्रयोगो दृश्यते न त्वितिहासे प्रसिद्ध इत्यर्थे, इतिहासे भव इत्यर्थे वा । तेनाध्यात्मादित्वं न कल्पनीयम् ।

४१. मध्यान्म इति मध्ये भवो मध्यम इत्येव साधु । **साम्प्रतिके न्याय्य** एव मध्यात् **अ साम्प्रतिके** (४।३।९) इत्यप्रत्यये मध्यो वैयाकरणः (नात्युत्कृष्टो नाप्यत्यपकृष्टः) मध्यं काष्ठमित्यादिकं भवति ।

४२. परस्परं भवः पारस्परिक इत्यध्यात्मादित्वाद् ठञि शक्यव्युत्पत्तिकमप्यप्रयुक्तपूर्वमिति नादरणीयम् । परस्परमित्येव प्रयोगार्हम् ।

---

१. अनुकरणम्, अनादरः, उपहासः ।

४३. न वयं धार्मिकेषु नः कृत्येषु मानुषीं चोदनामाद्रियामहे ।
४४. पूर्वबङ्गेषु बङ्गवाचमभिरोचयति जनता न तूर्दुम् ।
४५. सुगतः किल तत्कालीनया पालीति विश्रुतया भाषया लोकान् धर्ममनुशशास ।
४६. आयोध्यकं संस्कृतपत्त्रमपभ्रंशबहुलमिति न विदुषां समादरणीयं भवति ।
४७. गतवर्षीये सभाधिवेशनेऽयमर्थो वितत्य विचारितोऽभूदिति नायं पुनर्विचार्यः ।
४८. विधर्मीयैर्मौहम्मदादिभिर्हिन्दुधर्मिषु न साधु व्यवह्रियत इति खेदः ।
४९. यदि त आन्योन्यं कलहं विहाय संवसेयुस्तदा सुखं जीवेयुः ।
५०. स्वर्गीयः श्रीरमाकान्तो यावज्जीवमन्नार्थिभ्योऽन्नमदात् स्वपोषं च दरिद्रानपुषत् ।

---

४३. संस्कृते धार्मिकशब्दो धर्मं चरतीत्यर्थ एव रूढः । अन्यत्र प्रयोगादर्शनात् ।
४४. बङ्गानां निवासो जनपदो बङ्गाः । पूर्वे च ते बङ्गाश्च पूर्वबङ्गाः । निर्दुष्टं वचः ।
४५. तात्कालिक्येति साधु । उक्तो हेतुः ।
४६. **धन्वयोपधाद्वुञ्** इत्यायोध्यकमिति साधु । अयोध्यायां जातं भवं वेत्यर्थः ।
४७. गातवर्षिक इत्येव साधु । **कालाट्ठञ्** । आदिवृद्धिः ।
४८. विरुद्धो धर्मो येषां ते विधर्माण इत्येव वक्तव्यम् । अनिच्समासान्तः । तद्धितवृत्त्या नार्थः । **धर्मशीलवर्णान्ताच्चेति** मत्वर्थीयेन इनिना हिन्दुधर्मिण इति साधु । हिन्दूनां धर्मो हिन्दुधर्मः, स एषामस्तीति हिन्दुधर्मिणः । तैः हिन्दुधर्मिभिः ।
४९. अन्योन्यमित्येव साधु । तस्येदमित्यणि आन्योन्यमित्यस्य सिद्धिसंभवेऽपि नेदं प्रयुक्तपूर्वमिति परिहार्यम् ।
५०. स्वर्गत इत्येव साधु । ननु स्वर्ग इति देशविशेषस्य संज्ञेति वा नामधेयस्य वृद्धसंज्ञा वक्तव्येति वृद्धाच्छे **स्वर्गीय** इति सिध्य-

---

१. स्वे पुष इति णमुल् । स्वशब्दो धनवचनः ।

५१. देशान्तरेषु भूयांसि दैनिकानि द्विदैनिकानि च वार्तापत्राणि प्रकाश्यन्ते ।

५२. किमीयमिदं पुरस्तनं गेहम् । विशेषयतीदं गृहान्तराणि रामणीयकेन ।

५३. मानवीषु वृत्तिषु परदुःखदलनाभिलाषः परं प्रशस्यः ।

५४. श्रावण इति प्रथमो वार्षिको मासः ।

५५. प्रातरेव स कृपणो मम चाक्षुषो जातः ।

५६. वाराणसीयानां परीक्षाणां का त्वयोत्तीर्णा ?

५७. न केवलमस्य नियुद्धे कौशलमनितरसाधरणं स्नायविकी शक्तिरपीतरान्विशेषयति ।

५८. वर्तमानेयं जागतिकी दशा दृढमुद्वेजयति नः ।

५९. नूनमुन्नमति यज्वनां पतिः शार्वरस्य तमसो निषिद्धये (कु० ८।५८) ।

---

तीति चेन्मैवम् । अप्रयोगात् । नहि स्वर्गीय इति स्वर्गतार्थे प्रयुक्तपूर्वः । बाढं ये च स्वर्गस्थास्ते **स्वर्गिण** इत्युच्यन्ते ।

५१. दिनस्य द्विः प्रकाश्यन्त इत्येव शोभनं वचः । नात्र तद्धितवृत्तिसमाश्रयेणाभूतपूर्वं शब्दरूपमुत्पाद्यम् । दिने भवानि दैनिकानि । कालाट्ठञ् ।

५२. **दक्षिणापश्चात् पुरसस्त्यक्** इति त्यकि पौरस्त्यमित्येव साधु ।

५३. मानवशब्दाद् वृद्धाच्छप्रत्यये मानवीयासु इत्येव साधु ।

५४. **वर्षाभ्यष्ठक्** इति वार्षिक इति साधु । वर्षासु भव इति विग्रहः ।

५५. चक्षुर्भ्यां गृह्यत इति चाक्षुषः । शेष इत्यण् ।

५६. नद्यादिभ्यो ढकि वाराणसेयानामिति साधु ।

५७. अध्यात्मादित्वाट्ठञि इसुसुक्तान्तात्कः (७।३।५१) इति ठस्य कादेशे स्नायुकीत्येव साधु ।

५८. **जगत इयं जागती** । शैषिकोऽण् । तेन जागतिकीति प्रामादिकमेवेति प्रामाणिकाः ।

५९. **शार्वरिकमित्येव साधु । कालाट्ठञ्** । शार्वरमिति तु प्रामादिकमेवेति प्रामाणिकाः ।

६०. शारदीयशशिभासो रम्यमुपवनं रम्यतरं सम्पादयन्ति ।
६१. केचिदस्थान एव सौवं[१] महिमानमुत्कीर्तयन्ति ।
६२. पुत्रेण सा तव सेना पाण्डवी मथिता रणे (भा० द्रोण० १५३।१६) ।
६३. इदं नव्यमिदं च पूर्व्यमिति विविच्य यदुपकारकं तद् गृहाण ।
६४. प्राज्यं राज्यविभूतिवैभवसुखं मैत्रं प्रपेदे पि सः (के० दि० सा० १।१६)
६५. इतः पूर्वतनान्यदसीयानि संस्करणान्यपेक्ष्य संस्करणेऽस्मिन् भूयसी च्छात्राणामुपकृतिरिति निश्चप्रचम् ।
६६. वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः (मनु० १०।६७) ।
६७. क्व च त्वं पञ्चवर्षीयः क्व चैतद् दारुणं तपः (वि० पु० ५।१२।१७) ।

---

६०. **सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणि** शारदशब्दः साधुः । ततः परस्य छस्याप्रसङ्गात् ।
६१. स्वस्येदं सौवम् । द्वारादीनां यकारवकाराभ्यामुत्तरस्याचामादेरचो वृद्धिप्रतिषेधे वकारात्पूर्वमौकारागमे च सिद्धम् । **प्रयोगस्तु दुर्लभः** ।
६२. पाण्डवानामियमिति विग्रहे वृद्धाच्छे **पाण्डवीयेत्येव** युक्तम् । क्वचिदुत्सर्गोऽप्यपवादविषयमभिनिविशत इत्यौत्सर्गिकेऽणि वा साधु ।
६३. पूर्वशब्दाद्यद् दुर्लभः । पुराणमिति तु प्रयोज्यम् ।
६४. पैत्रमित्यपशब्दः । पितुरागतं पित्र्यं पैतृकं वा भवति यति ठकि चेत्यवधेयम् ।
६५. पूर्वतनानीत्यत्र ट्युट्युलौ दुर्लभौ । अव्ययात्तद्विधेः । पूर्वशब्दश्चानव्ययम् । तेन पूर्वाणि पूर्वभवानीति वा व्यवहरणीयम् ।
६६. **पारक्य इत्यसाध्यं पाणिनीयानाम् । स्वच्छन्दवाचो महर्षयो नियोगपर्यनुयोगानर्हाः** ।
६७. **तमधीष्टो भृतो भूतो भावीति** सूत्रेण समुत्पन्नस्य ठञो वर्षशब्दान्ताद् **द्विगोश्चित्तवर्ति नित्यमिति** लुकि पञ्चवर्ष इति रूपम् । **छप्रत्ययस्य तु स्वप्नेऽपि प्रसङ्गो न । तथाप्युत्स्वप्नायन्ते पौराणं वचो नुकुर्वन्तः साम्प्रतिका अनल्पाः** ।

---

१. स्वस्यायं सौवः तम् ।

६८. मुग्धा मुग्धधिया प्रकाशितवती रोमावलीमौदरीम् (मोह० ३।४)।
६९. पश्चात्तनैः कैश्चन नुद्यमानः।
७०. वानेयं गृह्यते पुष्पमङ्गजस्त्यज्यते मलः।

---

६८. औदरीति न सिध्यति। **शरीरावयवाच्चेति** यति सति स्त्रियां च उदर्येति सिध्यति।
६९. पश्चात्तन इत्यपशब्दः। **दक्षिणापश्चात्पुरसस्त्यक्** (४।२।९८) इत्यनेन विशेषविहितेन त्यका पाश्चात्यैरिति वक्तव्यम्। कालाद् विहितस्य ट्युलो ऽप्रसङ्गः। नेह पश्चाच्छब्दः कालवचनः।
७०. **नद्यादिभ्यो ढक्** (४।२।९७) इत्यत्र गणे पूर्वन गिरीति पठन्ति विच्छिद्य च प्रत्ययं कुर्वन्ति —पूर् —पौरेयम्। वन—वानेयम् गिरि—गैरेयम्।

**इति शैषिकतद्धितविवेचनम्।**

## तद्धितपरिशेषाधिकारः सप्तमः।

१. तृष्णा नाम सार्वजनीना[1]। नहि विततेभ्योऽस्याः पाशेभ्यः कश्चित्सुकृती विनिर्मुच्यते।
२. अहह संकटे पतितः स जिह्वावद् दन्तानां शत्रूणां मध्येऽवर्तत।
३. ये स्वान् दोषान् स्वी न कुर्वन्ति ते नोन्नमन्ति।

---

१. सार्वजनिकीति साधु। सर्वजनेषु भवेति विग्रहः। अध्यात्मादित्वाट्ठञ्। **सर्वजनाट्ठञ् खश्चेति आत्मन्विश्वजनभोगोत्तरपदात्ख** इत्यत्र वार्तिकं पठ्यते। तेन सर्वजनेभ्यो हिता सार्वजनिकी सर्वजनीनेति वा स्यात्। अर्थायोगस्तु। **प्रतिजनादिभ्यः खञ्** इति खञि रूपसिद्धिः सुलभा। तत्र साधुरित्यर्थस्तु न युज्यते।
२. **तेन तुल्यं क्रिया चेद्वतिरि**त्यस्य प्रवृत्त्यप्रसङ्गाद्वतेरप्राप्तौ जिह्वेवेति वक्तव्यम्।
३. न स्वी कुर्वन्तीति वक्तव्यम्। **कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः।** **योग इहार्थकृत एव न, शब्दकृतोऽप्यभिप्रेयते।** तेन नकारेण व्यवधाने नैष विधिः।

---

१. सर्वजनान् व्याप्नोतीति।

४. कस्मादिमे लोका अत्रैकत्रीभूताः ?
५. अशीतिवर्षीयोऽयं वृद्धो न क्षमत आत्मानमालम्बितुम् ।
६. अद्यश्वीनमिदं कलेवरम् । यावदिदं कल्यं[1] तावदर्जय गुणान् ।
७. पितृवत्स्थूलः पुत्रस्तथापि बलवत्तरः ।
८. वेणुमयीयं यष्टिः । इयं भारस्यासहा ।

---

४. एकत्र भूता इत्येव । समवेता इति वा वक्तव्यम् । सम्पद्यकर्तरी-त्युक्तम् । कारकान्तरसम्पत्तौ मा भूत् । तेन च्विरत्र दुर्लभः । अनेकत्र एकत्र भवन्तीत्यत्राधेयविशेष-सम्बन्धेनाभूततद्भावः सत्त्वाधिकरणस्य न कर्तुः ।

५. अशीतिर्वर्षाणि वयःप्रमाणमस्येति अशीतिवर्षः । प्रमाणे लः । द्विगोर्नित्यम् इति मात्रचो लुक् इत्येवं केचिद् व्युत्पादयन्ति । तद-परे न सहन्ते । अत्र प्रमाणशब्देन प्रमाणत्वेन ये प्रसिद्धा दिष्टया-दयस्ते गृह्यन्ते । द्वे दिष्टी प्रमाणमस्येति द्विदिष्टि । तेन अशीतिं वर्षाणि भूत इति विगृह्य **तमधीष्टो भृतो भूतो भावी**ति भूतेर्थे कालाट्ठञि **चित्तवति नित्यमि**ति तस्य लुकि अशीतिवर्ष इत्येव साधु ।

६. **अद्यश्वीनावष्टब्धे** (५।२।१३) । अत्रावष्टब्धे विजने आसन्ने प्रसवेऽद्यश्वीना इति निपात्यते । **अद्यश्वीना गौः । अद्यश्वीना वडवा** । अद्य वा श्वो वा विजायत इत्यर्थः । केचिदत्र पूर्वसूत्राद् विजायत इति नानुवर्तयन्ति, अवष्टब्धमात्रे निपातनमित्याहुः । **अद्यश्वीनं मरणम् । अद्यश्वीनो वियोग** इति । प्रकृते आसन्न-पातमित्यर्थो विवक्षितः । तमद्यश्वीनशब्दः केवलो नार्पयतीत्य-स्थाने तत्प्रयोगः ।

७. वतिः क्रियातौल्ये विहितः । तेनेह **पित्रा सह स्थूलः, पित्रा तुल्यः स्थूल** इति वा वक्तव्यम् ।

८. बिल्वादिभ्योऽणि वैणवीति भवति । मयड् विकल्पे वेणुमयीत्यपि साधुः । छन्दसि तु **नोत्त्ववद्वर्ध्रबिल्वात्** इति मयटो निषेधे वैणवीत्येव ।

---

१. नीरोगम् ।

९. दशवार्षिकोऽयं बालः प्रदीप्ताभ्यां प्रज्ञामेधाभ्यां पञ्चदशसांवत्सरिकानप्यधरयति ।
१०. अन्तरा सैनिकं बलं कथं नाम परित्रायेत देशः परावस्कन्दादिति पृच्छति लोकः श्रीगान्धिनम् ।
११. न हि सुराज्ञि देशे धार्मिका विरोधा आत्मानं लभन्ते ।
१२. यद् इदानीं मध्यभारतमिति विदुः स भारतस्य वर्षस्य मध्यः प्रदेशो न भवति ।
१३. अयमस्य पूर्व्यो भागोऽयं पश्चिम इति कोऽमन्दो न वेद ।
१४. शतवर्षीया पुराणीयं पाठशाला सम्प्रति जीर्णकुड्या प्रपित्सति[1] ।
१५. गाणपत्योऽयं मन्त्रो न बार्हस्पत्य इति केचिद् विभ्रान्ताः ।
१६. शास्त्रोक्ता अपि केचिद्विधयो वर्तमानयुगीना नेति नानुविधेयाः ।

---

९. **दशवर्ष** इत्येव साधु । उक्तो हेतुः ।
१०. सेनां समवैतीति सेनाया वेति पाक्षिके ठकि सैनिकमिति रूपम् । तेन प्रकृतेऽर्थासङ्गतिः स्फुटा । तस्माद् वृद्धाच्छे सैनिकीयमिति साधु स्यात् । वरं सेनाबलमिति समासवृत्त्योच्यताम् ।
११. धर्मं चरतीति धार्मिक इत्यत्रार्थे धार्मिकशब्दस्य रूढेः शास्त्रकारेण च व्युत्पत्तेर्धर्मविरोधा इति समासवृत्त्या वक्तव्यम् ।
१२. **मध्यान्म** इति मध्यम इत्येव साधु ।
१३. पूर्व इत्येव साधु । पूर्व्य इति च्छन्दसि यति साध्विति पुरस्तादसकृदुक्तम् ।
१४. शतं वर्षाणि भूतेति शतवार्षिकीत्येव शोभनम् । तमधीष्टो भृतो भूतो भावीति भूतेर्थे कालाट्ठञ् इति ठञि **वर्षस्याभविष्यती**त्युत्तरपदवृद्धौ शतवार्षिकीति रूपम् । **छप्रत्ययाप्रसङ्गाच्छतवर्षीयेत्यपशब्दः** ।
१५. गणपतिर्देवताऽस्येति गाणपत इति युज्यते वक्तुम् । **अश्वपत्यादिभ्यश्चे**ति प्राग्दीव्यतीयोऽण् । इदं गणानां त्वा गणपतिं हवामहे (ऋ २।२३।१) इत्यृचमधिकृत्योक्तम् ।
१६. वर्तमानयुगीना इत्यपशब्दः । खस्याप्राप्तेः । **प्रतिजनादिभ्यः खञ्** इत्यत्र गणे इदंयुगमिति पठ्यते । तेन तत्र साधुरित्यर्थे **ऐदंयुगीना** इति प्रयोज्यम् ।

---

१. पतनमस्य आशङ्क्यते ।

१७. पादशो गायत्रीं शंसति न चान्यथोच्चारयति पदानि ।
१८. इयं शस्त्रीकल्पा । शक्यमनयाऽपि मांसशकलं कर्तितुम् ।
१९. उभे अपि भगिन्यौ विदुष्यौ, तथाऽपि कनीयसी विदुषीतरा ।
२०. योऽधर्मं चरति सोऽधार्मिक इत्यज्ञवद्वचनम् ।
२१. आसुतिवलो ह्यभोज्यान्न इति स्मरन्त्यृषयः ।
२२. क्रोडी करोति प्रथमं यथा जातमनित्यता । धात्रीव जननी पश्चात् तदा शोकस्य कः क्रमः (नागानन्दे) ॥
२३ अस्ति मे त्रिवार्षिकं धान्यं तेन भविष्यदर्थचिन्ता न बाधते माम् ।
२४. अनन्ता वै वेदा इति प्रवादमसंख्यधा वेदा इत्येवमर्थापयन्ति ।[1]

---

१७. **ऋचः शे** (६।३।५५) इति पादशब्दस्य पद् इत्यादेशे पच्छ इति रूपम् ।
१८. ईषदूना शस्त्री शस्त्रिकल्पेति साधु । **घरूपकल्पचेलड्** इत्यादिना कल्पप् प्रत्यये ङ्यन्तस्यानेकाचः शस्त्रीशब्दस्य ह्रस्वो विधीयते ।
१९. विदुषीतरा, विदुषितरा, विद्वत्तरेति रूपत्रयमपि साध्विति **वृत्तिकारो** मन्यते । **कौमुदीकारस्तु** उगितश्चेति ह्रस्वाभावपक्षे **तसिलादिष्विति** पुंवद्भावो दुर्वार इति विदुषीतरेति रूपं निराकरोति । **न हि स्वयमप्रवर्तमानं ह्रस्वत्वं पुंवद्भावं बाधत इति न्याय्यम्** इति ।
२०. **अधर्माच्चेति** वक्तव्याद् आधर्मिक इत्येव साधु । अधार्मिक इति तु नञ्समासे साधु । न धार्मिकोऽधार्मिकः ।
२१. **वले** इत्यासुतीवल इत्येव साधु । आसुतीवलः शौण्डिकः ।
२२. इदं नागानन्दनाटके चतुर्थेऽङ्के शङ्खचूडस्य वचनम् । क्रोडी करोतीत्यत्र च्विर्दुर्लभः । सम्पद्यकर्तरि स उक्तः । कारकान्तरसम्पत्तौ न भवति । क्रोडे करोतीत्येव साधु । **यदि क्रोडशब्दः क्रोडस्थमाह लक्षणया तर्हि न कश्चिद्दोषः** ।
२३. **वर्षस्याभविष्यतीति** भविष्यत्युत्तरपदवृद्धेः प्रतिषेधादादिवृद्धौ त्रैवर्षिकमित्येव साधु ।
२४. असंख्या इत्येव वक्तव्यम् । धाप्रत्ययस्याप्रसङ्गात् । धाप्रत्ययो हि **संख्याया विधार्थे धा, विभाषा बहोर्धाऽविप्रकृष्टकाले** इति सूत्राभ्यां विधीयते । इह च संख्यावचनो नास्ति न वा बहुशब्दोऽस्ति ।

---

१. **अर्थमाचक्षते, व्याचक्षते**

२५. उपाद्यमः स्वकरणे (अष्टाध्याय्याम् १।३।५६)।
२६. न हि रजोवीर्यसंयोगमात्रेण ब्राह्मणं शरीरमुत्पद्यते।
२७. प्राङ् निशातो वासरो वासराच्च प्राङ् निशेत्यनादिरेष प्रवाहः।
२८. याज्ञवल्कानीमानि ब्राह्मणानि वेदसमसामयिकानि न भवन्ति।
२९. युष्माभिस्तेषामेकतरेण सह वञ्चकैरिव व्यवहृतम्।
३०. चौररूपो[1]ऽयं यदक्ष्णोरप्यञ्जनमपहरति।
३१. वरदः करोतु सुप्रातमह्नामयं हि नायकः।

---

२५. महाविभाषया च्वरेभाव इत्यदोषः।

२६. ब्रह्मण इदं ब्राह्मम्। **ब्राह्मोऽजातावि**ति योगो विभज्यते। ब्राह्म इत्यनपत्येऽणि टिलोपार्थं निपात्यते। ततो जातौ। अपत्ये जातावणि टिलोपो न भवति। ब्रह्मणोऽपत्यं जातिर्ब्राह्मणः।

२७. प्रागिति दिक्छब्दः। दिक्छब्दयोगे विहिता पञ्चम्यपादानपञ्चमी न भवतीत्यपादाने चाहीयरुहोरित्यनेन तसेरादेशस्यायोगात्प्राङ् निशाया इत्येव साधु। सार्वविभक्तिको वा तसिर्वेदनीयः।

२८. याज्ञवल्क्येन प्रोक्तानि ब्राह्मणानि याज्ञवल्कानि। **कण्वादिभ्यो गोत्र** इत्यण्। कण्वादिर्गर्गाद्यन्तर्गणः। **याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वाद्** इति **पुराणप्रोक्तेषु ब्राह्मणकल्पेष्वि**ति णिनिर्न। तद्विषयताऽपि न। प्रतिपदं ब्राह्मणेषु यः प्रत्ययस्तस्य तद्विषयता विधीयते णिनेः।

२९. **एकाच्च प्राचामि**त्येकशब्दाद्द्वयोर्निर्धारणे डतरच्, बहूनां निर्धारणे डतमच् विहितौ। तेनात्रैकतमेनेति साधु।

३०. प्रशस्तश्चौरः चौररूपः। **प्रशंसायां रूपप्**। प्रकृत्यर्थस्य परिपूर्णतेह प्रशंसा न तु स्तुतिः। गुप्तवस्त्वपहरणेन चौर्यं परिपूर्यते।

३१. **सुप्रातसुश्वेत्यादयः** (५।४।१२०) बहुव्रीहिसमासेऽच्प्रत्ययान्ता निपात्यन्ते। शोभनं प्रातरस्येति सुप्रातः। तेन प्रकृते तत्पुरुषे प्रयोगश्चिन्त्यः।

---

१. प्रशस्तश्चौरः, चौर्ये कुशलः।

३२. इह पाठालये नवतम्यां श्रेण्यां पञ्चचत्वारिंशच्छात्राः संस्कृतमधीयते ।

३३. विविधा हि व्यापारा भवन्ति—केचिन्मानसाः, केचिन्मौखाः परे हास्ताः, अपरे पादाः ।

३४. एवं सति पारस्परिकीः काश्चिद् हानीर्विभावयन्ति सुधियः ।

३५. यदितो वत्सराणां पञ्चसाहस्र्यामभूत् तद् इदानीमपि पश्यामोरूप[1]मिति स प्रसादो भगवतो व्यासस्य ।

३६. प्रायेण मध्यकालिका अनृषिप्रणीता ग्रन्थाः शब्दडम्बरभूयिष्ठा इति न तेषु बहु ग्राह्यं भवति ।

३७. इदं नाम कालिकं वैचित्र्यं या खलु संस्कृतिः पुराणैर्मुनिभिः प्राणपणेनापि संरक्षिता सेदानीं तदनुगैरनास्थया वेत्रदण्डैरिव समुत्सार्यते ।

---

३२. तस्य पूरणे डटि नवम्यामित्येव साधु ।

३३. मानसा मौखा हास्ता इत्यत्र शैषिकोऽण् । पादशब्दात्तु वृद्धाच्छः प्रसक्तः । तेन पादीया इति स्यात् । तस्य च प्रयोगो नास्तीति पादाभ्यां कृता इति व्यासेन वक्तव्यम् । पादकृता इति समासेन वा ।

३४. परम्परीणा इत्येव साधु । **परोवरपरम्परपुत्रपौत्रमनुभवतीति** खप्रत्ययः । पारम्परिकमिति परम्पराशब्दादव्युत्पन्नात्प्रबन्धवचनादध्यात्मादित्वाट्ठञि सिध्यति । **प्रयोगोऽस्य नास्तीति साधुत्वं दुरवधारम्** ।

३५. **प्रशंसायां रूपप्** (५।३।६६) । साधीयः पश्याम इत्यर्थः । **रूपप् तिङन्तादपि भवति । पश्यामोरूपमित्येकं पदम्** ।

३६. माध्यमकालिका इत्येव साधु । **मध्यान्मः** । **कालाट्ठञ्** । आदिवृद्धिः ।

३७. कालेन निर्वृत्तम् इत्यर्थे **तेन निर्वृत्तम् (५।१।७९)** इति ठञ् नार्हति भवितुम् । न ह्यसौ स्वरूपविधिर्भवति । **कालात्** (५।१।७८) इत्यधिकारः । तेन कालकृतमित्येवं वाच्यम् । न च कालाट्ठञिति शैषिकेण ठञा शक्यं व्युत्पादयितुमिति वाच्यम् । स्वरूप-

---

१. **साधु पश्यामः, यथा स्पष्टावभासो भवति तथा पश्याम इत्यर्थः ।**

३८. गुरुचरणानामभिमुखीनः स्थित्वाऽञ्जलिं च बद्ध्वा शास्त्रमागमय ।
३९. अद्य सुतरां सुस्था भवन्त इति हार्दिको नः परितोषः ।
४०. कर्मकराणामिमाः कदर्थना यामीर्यातना अप्यतिशेरते ।
४१. नाहमस्यान्तरीयमभिप्रायं वेद । न चायं स्वयं निर्वक्ति ।
४२. प्रसिद्धा हि पुराणेषु दैवासुर[1] कथाः ।
४३. कतमो भवतां देवदत्तः ?

---

स्य पर्यायाणां च न ग्रहणमिति पदमञ्जर्यादिषु दर्शनात् । कलिकृतमिति चेद्विवक्षितं **सर्वत्राग्निकलिभ्यां ढग्वक्तव्य** इति ढकि कालेयमित्येव साधु ।

३८. अभिमुखमित्येव शब्दः । अभिमुखीन इत्यपशब्दः । खप्रत्ययस्याप्रसक्तेः ।

३९. हृदयशब्दाद् अध्यात्मादित्वाट्ठञि कृते **हार्दिक इति न सिध्यति । हृदयस्य** हृल्लेखयदण्लासेष्विति (६।३।५०) यदणोर्हृदादेशो विधीयते न तु ठञि । तेन **हार्दिक इत्यागन्तुकोऽसम्प्रदायः शब्द सुधियां नादरणीयः** । हार्द इति तु परिग्राह्यः । **तमो हार्दं निवारयन्निति** सायणभाष्ये प्रयोगात् ।

४०. **यमाच्चेति** वक्तव्यमिति काशिकापठिताद् वार्तिकाद् **ण्यप्रत्यये** याम्या इत्येव साधु ।

४१. अन्तरे भवम् आन्तरमित्येव साधु । शैषिकोऽण् । **वृद्धत्वा-** भावाच्छो न । **गहादित्वकल्पनेऽपि नात्रार्थेऽस्य प्रयोगः प्रकल्पते, परिधानेऽर्थे रूढेः** ।

४२. **द्वन्द्वाद्वुन्वैरमैथुनिकयोरिति** वुन्प्रसक्तः, **वैरे देवासुरादिभ्यः प्रतिषेधो वक्तव्य** इति प्रतिषिध्यते । तेन प्राग्दीव्यतीयेऽणि दैवासुरमिति **साधु** । देवानामसुराणां च वैरं दैवासुरम् ।

४३. **वा बहूनां जातिपरिप्रश्ने डतमच्** इति डतमजिह न प्राप्नोति । देवदत्तस्याजातित्वात् । तेन को भवतां देवदत्त इत्येव साध्विति मन्यते । नैतदस्ति । **कतरकतमौ जातिपरिप्रश्ने** (२।१।६३) इत्यत्र जातिपरिप्रश्नग्रहणं ज्ञापयति कतमशब्दोऽन्यत्रापि जातेर्वर्तते इति । तेन नात्र काचिद् दुष्टिः ।

---

१. **देवानामसुराणां च वैरं दैवासुरम्** ।

४४. प्रधानं षट्स्वङ्गेषु व्याकरणमिति भाष्यकारवचनमवमत्य किमिति ज्योतिषमधीषे न व्याकरणम् ?
४५. अहो वाग्मिनां वाग्धाराः किमपि संवननं[1] हृदयानाम् ।
४६. अत्र विषय उपेक्षां तूष्णीकां वा युक्तां पश्यामः ।
४७. अद्यतो नैकवर्षे दुरन्तोऽयमुदन्तोऽजायत ।
४८. प्राचीनसामयिका इममेव क्रममातस्थुः ।
४९. सेवा श्ववृत्तिराख्याता, तीव्रश्चैष मानस्योपरित आघातः ।
५०. सर्वाङ्गिण्याः संस्कृतेरुद्धार इष्यते न तु तदेकदेशस्य ।

---

४४. **तदधिकृत्य कृते ग्रन्थे** इत्यण् । संज्ञापूर्वकविधेरनित्यत्वान्न वृद्धिः । तेन ज्योतिषम् इति साधु ।
४५. **वाचो ग्मिनिः** । **लशक्वतद्धिते** इतीत्संज्ञाभावाद् गकारद्वयश्रवणम् । वाग्ग्मिनामित्येव साधु ।
४६, तूष्णीमः काम् वक्तव्यः । इति स्वार्थिकः काम्प्रत्ययः । तूष्णीमेत्र तूष्णीकाम् । तेन तूष्णीम्भावं युक्तं पश्याम इति वक्तव्यम् । **तूष्णीकामित्यव्ययम्** ।
४७. अद्य प्रभृति, इत इति वा वक्तव्यम् । अद्येत्यधिकरणवृत्ति । ततस्तसेरप्रसङ्गः । स ह्यपादानपञ्चम्या विहितः । आद्यादित्वात्तसेरपि नायं विषयः ।
४८. प्राचीनसामयिका इत्यत्र ठञ् दुर्लभः । कालवाचिभ्यः स विहितः । तेन प्राचीनसमयिका इति वक्तव्यम् । प्राचीनसमयोऽस्त्येषामिति । अत इनिठनाविति ठन् । समासेन वाऽर्थो वक्तव्यः । प्राक्काला इति । एवंजातीयकेषु प्रदेशेषु ठनेव प्रयोज्यो न ठञ् । तथा च मनौ प्रयोगः—तान्यर्वाक्कालिकतया निष्फलान्यनृतानि चेति (१२।९६) ।
४९. उपरित इत्यपशब्दः । **उपर्युपरिष्टात्** (५।३।३१) इत्युपरिशब्दोऽस्तातेरर्थे निपात्यते । अस्तातिश्च सप्तमीपञ्चमीप्रथमान्तेभ्यो विधीयत इति सप्तम्यर्थस्योपरिशब्देनैवोक्तत्वात्तसेरप्रसङ्गः ।
५०. सर्वाङ्गाया सर्वाङ्ग्या इति वा सर्वाङ्गीणाया इति **वा वक्तव्यम्** । सर्वाण्यङ्गान्यस्या इति **बहुव्रीहौ** अङ्गगात्रकण्ठेभ्यो वा ङीष्

---

१. **वशीकरणम्** ।

५१. लक्ष्मणो मेऽनुजोऽपूर्वी, भार्यया चार्थीति रामेण शूर्पणखोक्ता ।
५२. ब्राह्मण्यं कृत्स्नमेतत्त्वां ब्रह्मण्यमनुगच्छति ।
५३. गते समरे परश्शताः प्रवीराः सर्वदार्थं वीरशय्यामध्यशेरत ।
५४. यद्यपि नास्ति सत्यात्परो धर्म इति नित्यं कर्णकुहरी कुर्मस्तथापि नानृतं परिहरामः ।
५५. सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः (वेणी० ३।४७)।
५६. जरासन्धो नाम मगधस्य महाबलो भूपो बभूव ।
५७. सार्वभौमिका इम आचाराः, यस्मान्नैते देशविशेषावच्छेदेनोपलभ्यन्ते ।

---

वक्तव्य इति ङीष्विकल्पे प्रथमं रूपद्वयम् । **तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोतीति** खे तृतीयं रूपं साधु ।

५१. **पूर्वादिनिः** इति पूर्वशब्दात् क्रियाविशेषणादिनिः । यां काञ्चित्क्रियामध्याहृत्य प्रत्ययो विधीयते । पूर्वं परिणीतमनेनेति पूर्वी ।

५२. **ब्राह्मणमाणववाडवाद्यन्** इति समूहे यन् । ब्राह्मणानां समूहो ब्राह्मण्यम् । ब्रह्मणि साधुरिति ब्रह्मण्यः । तत्र साधुरिति यत् ।

५३. सर्वदार्थमित्यपशब्दः । सर्वदाशब्दोऽधिकरणप्रधानः । तस्यार्थशब्देन समासोऽनुपपन्नः । सर्वकालमिति समासवृत्त्या वक्तव्यम् ।

५४. कर्णकुहरे कुर्म इत्येव साधु । दुर्लभोऽत्र च्विः । हेतुस्त्वसकृदुक्तपूर्वः ।

५५. **कुरुनादिभ्यो ण्य** इति ण्ये, तस्य **तद्राजसंज्ञत्वात्तद्राजस्य बहुषु तेनैवास्त्रियामिति** लुकि कुरव इत्येव साधु । कुरोरिमे इति तस्येदमित्यणि तु न कश्चिद्दोषः ।

५६. मगधस्य नाम राज्ञोऽपत्यं मागधः । बहुत्वविवक्षायां मगधाः । **द्व्यञ्मगधकलिङ्गसूरमसादण्** इति विहितस्याणो बहुषु लुकि मगधा इति रूपम् । मगधानां (क्षत्रियाणां) निवासो जनपदो मगधाः । तस्य निवास इत्युत्पन्नस्याणो जनपदे लुप् इति लुपि, लुपि युक्तवद्भावे मगधा इति देशाभिधानं साधु भवति । तस्य षष्ठ्यां मगधानामिति वक्तव्यम् ।

५७. सार्वभौमा इत्येव साधु । तत्र विदित इति चेत्यण् (५।१।४३) ।

---

१- पूर्वं परिणीतमनेनेति पूर्वी, स न भवतीत्यपूर्वी ।

५८. अल्पीयांसोऽचोऽस्येत्यल्पाच्तरमित्युच्यतामल्पतराच्कमिति वा । सोपपत्तिकं ब्रूहि ।
५९. उभे अपि भगिन्यौ सुन्दर्यौ । कनीयसी तु सुन्दरीतरा ।
६०. चाक्षुष्ये भूतग्रामे परिस्फुरति महिमा भगवतः ।
६१. कथं काषायौ गर्दभस्य कर्णौ हारिद्रौ कुक्कुटस्य पादाविति ?
६२. रामं सीतां लक्ष्मणं जीविकार्थे विक्रीणीते यो नरस्तं च धिक् धिक् । अस्मिन्पद्ये योऽपशब्दं न वेत्ति व्यर्थप्रज्ञं पण्डितं तं च धिग् धिक् ॥
६३. देवदत्तश्चतुष्कृत्वोऽपि पाठं श्रुत्वा न धारयति, विष्णुमित्रस्तु सकृच्छृणोति चिरं च धारयति ।
६४. इमे कुरव इमे कौरवा इमे च कौरव्याः । को विशेषः ।

---

५८. पूर्वं बहुव्रीहिस्ततस्तरप् प्रत्यय इत्यल्पाच्तरमित्येव साधु । अत्र भाष्यम्—**पूर्वपदातिशये आतिशायिकाद् बहुव्रीहिः, सूक्ष्मवस्त्रतराद्यर्थः** । प्रपञ्चितो ऽयं विषयो वाग्व्यवहारादर्शे समासविवेचनायाम् इति तत्रैव द्रष्टव्यः ।
५९. **घरूपकल्पेत्यादिना** ङ्यन्तानेकाचो ह्रस्वत्वे सुन्दरितरेत्येव साधु ।
६०. चक्षुषा गृहीतश्चाक्षुषः । शैषिकोऽण् । चक्षुषे हिमिति तस्मै हितमिति यति चक्षुष्य इति भवति । ततः स्वार्थेऽणि चाक्षुष्य इति साधु स्यात् ।
६१. कषायेण रक्तौ काषायौ । हरिद्रया रक्तौ हारिद्रौ । काषायाविव काषायौ । हारिद्राविव हारिद्रावित्युपमानाद् भविष्यति ।
६२. **जीविकार्थे चापण्ये** इति पण्यपर्युदासात्कनो लुब्न । तेन रामस्य प्रतिकृतिरित्यर्थे रामक इत्येव साधु । एवं लक्ष्मणादिषु द्रष्टव्यम् ।
६३. **द्वित्रिचतुर्भ्यः सुच्** इति सुच् संख्यायाः क्रियाभ्यावृत्तिगणन इत्यनेन विहितस्य कृत्वसुचोऽपवादः । तेन चतुरपि पाठं श्रुत्वेति वक्तव्यम् ।
६४. **कुरुनादिभ्यो ण्यः** (४।१।१७२) इति कुरुशब्दादपत्ये ण्ये कौरव्यः । क्षत्रियवचनोऽयं कुरुशब्दः । ण्यस्य तद्राजत्वात्तद्राजस्य **बहुषु तेनैवास्त्रियामिति** बहुष लुकि सति **कुरोरपत्यं** बहुल**मिति कुरवः** ।

६५. मूलेनावाहयेद् देवीं श्रवणेन विसर्जयेत् ।
६६. औदरं रेचयेद् वायुम् (अग्नि पु० ३७३।७) ।
६७. पूर्वेण ग्राममभिराम आरामः ।
६८. अनावृष्टिर्जनपदे क्षयाय बाहुवार्षिकी (रा० १।८।१२) ।
६९. द्वारं ररक्षुर्याम्यम् (भट्टि० १४।१५) ।
७०. आर्यस्य मयि पुत्रकल्पः स्नेहः ।
७१. यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये । (मनु० ११।७) ।

---

कुरुशब्दात्कुरोरिमे शैषिकेऽणि कौरवा इति रूपम् । कुर्वादिभ्यो ण्य (४।१।१।१५१) इति विहिताद् ब्राह्मणवचनात्कुरुशब्दाण्ण्ये तस्य च तद्राजसंज्ञाया अभावादसति लुकि कौरव्या इति बहुवचने रूपम् ।

६५. नक्षत्रेण युक्तः काल इति विहितस्य प्राग्दीव्यतीयस्याणो लुबविशेष इति लुपि युक्तवद्भावे च मूलं श्रवण इति च साधू । ततस्तृतीयायां मूलेन, श्रवणेनेति ।

६६. **शरीरावयवाद्यति** उदर्यमिति तु पाणिनीयाः ।

६७. **एनबन्यतरस्यामदूरेऽपञ्चम्याः** इत्यत्र केचित् पूर्वसूत्राद् उत्तराधरदक्षिणाद् इति नानुवर्तयन्ति, सामान्येन सर्वनामभ्यो विधिमिच्छन्ति । तन्मते पूर्वणेत्यत्र एनब् निर्दुष्ट : । **वस्तुतः स्थितस्य गतिश्चिन्तनीयेति समाधानयत्नमात्रमेतत्** ।

६८. बहूनि वर्षाणि भविष्यतीत्यर्थे रामायणस्थः प्रयोगः । वर्षस्याभविष्यतीत्युत्तरपदवृद्धेः पर्युदासात्केवलया पूर्वपदवृद्ध्या 'बाहुवर्षिकी' इति रूपमिच्छन्ति पाणिनीयाः ।

६९. **यमाच्चेति** वक्तव्यमिति काशिकास्थाद्वार्तिकात् प्राग्दीव्यतीये ण्ये याम्यमिति रूपं निर्दोषम् । **भाष्ये त्वेतद् वार्तिकं न दृश्यते** ।

७०. पुत्रकल्प इत्यात्रास्थाने कल्पप् । ईषदसमाप्तः पुत्रः पुत्रकल्प इत्यनिष्टार्थप्रसङ्गात् । न हि स्नेहः पुत्रसदृशो भवति । पुत्रात् किञ्चिदून इति तु वक्तव्यम् । पुत्रशब्दः पुत्रस्नेहे वर्तते । नेदं सुभगं वच इति चेत् पुत्रवत् इति वाच्यम् । **तत्र तस्येव** (५।१।११६) इति सप्तम्यन्ताद् वतिः ।

७१. भविष्यति उत्तरपदवृद्धेः प्रतिषेधात्पूर्वपदवृद्ध्या त्रैवर्षिकमित्येवाभिमतं पाणिनीयानाम् । अपि वा कुल्लूकधृतः पाठोऽपपाठः स्यात् ।

७२. प्रोष्ठपादप्रौष्ठपदयोः को विशेषः । यदि सहसे वक्तुं नूनं शाब्दिकोऽसि ।
७३. शाब्दिकमीश्वरस्वरूपं विद्वांसोऽपि वयं न तत्त्वतस्तद् विजानीमः
७४. चत्वार्याहुः पदजातानि शाब्दाः (ऋक्प्रा० १२।१७) ।
७५. किमत्राश्चर्यं कदन्नं दुःखाकुर्यादशितारम् ।
७६. सांशयिकः संशयापन्नमानस इत्यमरः (३।१।५) ।

---

७२. प्रोष्ठपदा नाम नक्षत्रम्, ताभिर्युक्तः काल इत्यण् । तस्य लुबविशेष इति लुप् । प्रोष्ठपदासु जातः प्रोष्ठपादो माणवकः । सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् (४।३।१६) इत्यण् । **जे प्रोष्ठपदानाम्** (७।३।१८) इत्यनेनोत्तरपदवृद्धिः । प्रोष्ठपदासु भव इत्यर्थे तु यथाप्राप्तं पूर्वपदवृद्धिः । प्रौष्ठपदो मेघः । **यदा प्रौष्ठपदो मेघो धरणीमभिवर्षतीति वृत्तौ ग्रन्थान्तरत उद्धरणम्** ।

७३. शब्दं करोति व्याकरोति इति शाब्दिको वैयाकरण उच्यते । **शब्ददर्दुरं करोतीति** ठक् । तेनास्थानेऽस्य प्रयोगः । तेन शब्दोक्तं शब्दप्रतिपादितमिति वा वक्तव्यम् ।

७४. शाब्दा इति शाब्दिका इत्यत्रार्थे प्रयोगः । शब्दं विदन्तीति शाब्दाः । शैषिकोऽण् (शेषे इति सूत्रेण विहितः) । **ऋषेः शौनकस्य प्रयोग इति मान्यः** ।

७५. **दुःखात्प्रातिलोम्ये** इति सूत्रेण डाचो नात्र प्रसङ्गः । प्रतिकूलाचरणेन यो दुःखमुत्पादयति स उच्यते दुःखाकरोतीति । इह तु प्रतिकूलाचरणं किमपि व्यतिरिक्तं दुःखोत्पादनाय नास्ति । तेन दुःखं कुर्यादशितुरित्येवं वक्तव्यम् ।

७६. संशयमापन्नः संशयविषयीभूतोऽर्थः सांशयिक उच्यते । **संशयमापन्नः** (५।१।७३) इत्यनेन संशयविषयीभूते प्रत्यय इष्यते न तु संशयितरि । तथा च **सांशयिकस्तृतीयः पाद** इति निरुक्ते यास्काचार्यस्य प्रयोगः । तर्हि अमरवचनस्य का गतिः ? संशयमापन्नं मानसं यस्मिन्विषये स विषयः संशयापन्नमानस इत्येवं व्याख्येयम् ।

७७. संयुगे संमुखीनं तमुद्गदं प्रसहेत कः (भट्टि०)।
७८. शमीपलाशमिश्रांश्चतुरञ्जलिमात्राञ्शूर्पेणोपसादयति पश्चादग्नेः (गो० गृ० २।१।१५)।
७९. नभ्यं साधु, नाभ्यं चापि। तत्कस्मात्?
८०. कनीयान्गुणवाञ्श्रेष्ठः श्रेष्ठश्चेन्निर्गुणो भवेत् (अत्रि स्मृ० श्लो० २५६)।
८१. न च ग्रामेयकालापैस्त्वं मां बाधितुमर्हसि (बृ० श्लो० सं० ८।३७)।
८२. कथं शमिनीतरा (शमित्यष्टाभ्यो घिणुन् ३।२।१४१ सूत्रे भाष्ये)।

---

७७. संमुखीन इत्यस्य **संमुखे स्थित** इत्यर्थं विवक्षति, न चायमिममर्थमर्पयितुं शक्तः। **यथामुखसंमुखस्य दर्शनः ख** इति शास्त्रं ह्यत्र खं विधत्ते। दर्शन इत्यधिकरणे ल्युट्। दृश्यतेऽस्मिन्निति। संमुखं सर्वं मुखं दृश्यतेऽत्रेति संमुखीनो दर्पणः। तेन संमुखे स्थितमिति वक्तव्यम्। अभिमुखावस्थानात् साधर्म्याद् भविष्यतीति हरदत्तः। **तदिदं हरदत्तहरेः स्वैरो विहारः।**

७८. चतुरञ्जलिमात्रान् इत्यपाणिनीयम्। **प्रमाणे लो द्विगोर्नित्यम्** इति मात्रचो लोपेन भवितव्यम्। चतुरञ्जलीन् इति ब्रूयात्।

७९. **उगवादिभ्यो** यत् (५।१।२) इत्यत्र गवादिषु **नाभि नभं चेति** गणसूत्रं पठ्यते। तस्यायमर्थः—नाभिशब्दो यत्प्रत्ययमुत्पादयति नभं चादेशमापद्यते इति। नाभये हितो नभ्योऽक्षः। यस्तु शरीरावयवो नाभिशब्दस्ततः शरीरावयवाद् इति यति कृते नाभये हितं नाभ्यं तैलमिति भवितव्यम्। गवादियता संनियुक्तो नभभावोऽत्र न भवति। तस्मान्नभ्यं नाभ्यं चेत्युभयं साधु विषयभेदात्।

८०. श्रेष्ठश्चेन्निर्गुणो भवेद् इत्यत्र स्मृतिकारेण वृद्धस्य श्र आदेशः कृतः, न च स वृद्धस्य स्थाने शास्त्रेण विहितः, किन्तर्हि प्रशस्यस्य। तेनापाणिनीय एष प्रयोगः।

८१. **कत्त्र्यादिभ्यो ढकञ्** (४।२।९५) इत्यत्र कत्त्र्यादिषु ग्रामशब्दः पठ्यते। ततः शैषिके ढकञि ग्रामेयक इति भवति। ग्रामे भवः, ग्रामे प्रायभव इत्यादिरर्थः।

८२. **ताच्छीलिकानां रूढिशब्दतया संज्ञाशब्दत्वेन** संज्ञापूरण्योश्चेति पुंवद्भावनिषेधान्न दोषः।

८३. तिलाश्चम्पकसंश्लेषाः प्राप्नुवन्त्यधिकवासताम् ।
रसोनभक्षास्तद्गन्धं सर्वे साङ्क्रामिका गुणाः ।। (कामन्दकः) ।
८४. मय्यपि योऽभिकः (भट्टि० ८।९२) ।
८५. चङ्क्रमावान् समागत्य सीतामूचे सुखा भव (भट्टि० ५।६४) ।
८६. पश्यामि तामित इतः पुरतश्च पश्चात् (मालती०) ।
८७. वृद्ध्याजीवस्तु वार्धुषिरित्यमरः । अत्र वार्धुषिरित्यस्य साधुत्वं चिन्तय ।
८८. गणपति र्देवताऽस्येति गाणपत्यो मन्त्रः ।
८९. पथकपथिकशब्दयोः को विशेषः ?

---

८३. अधिवास इत्येव भावप्रत्ययान्तः । भावेऽत्र घञ् । अपरो भाव-प्रत्ययो नापेक्ष्यते ।
८४. **अनुकाभिकाभीकः कमिता** (५।२।७८) इत्यनेन क्रियाविशिष्ट-साधनवाचिभ्यामन्वभिभ्यामनुकादयः कन्प्रत्ययान्ता निपात्यन्ते । कर्तरि चायं तद्धितस्तेन कर्मणोऽनुक्तत्वात्कर्मणि द्वितीयया भवितव्यम् । हरदत्तमिश्रोऽपि द्वितीयामुदाहरति ।
८५. सुखा भवेति दुरुपपादम् । **सुखप्रियादानुलोम्य** इति कृञो योगे डाज्विहितो न तु कृभ्वस्तियोगे । अनुकूला भवेत्यर्थः ।
८६. **पूर्वाधरावराणामसि पुरधवश्चैषाम्** (५।३।३९) इति पूर्वशब्दाद-स्तात्यर्थेऽसिः प्रत्ययस्तत्संनियोगेन पुर् इत्यादेशः । तेन पुरत इत्यत्रातसुच्प्रत्ययो दुर्लभः । न केवलं कविरेवात्र प्रमाद्यति, अमरा-दयः कोषकृतश्चापि । तथा चामरः पठति—**स्यात्पुरः पुरतोऽग्रतः ।** विश्वोऽपि—**पुरतः प्रथमे चाग्रे** इति । केचित्तु दक्षिणोत्तराभ्यां तसुज्विधानेनैवेष्टसिद्धौ अतसुच् इत्यकारोच्चारणमन्यतोऽपि विधानार्थम् । तेन पुरत इति सिध्यतीति **तत्त्वबोधिनीकारः** ।
८७. **वृद्धेर्वृधुषिभावो वक्तव्य** इति प्रत्ययसंनियोगेन विधानाद् वृधुषिरिति न सिध्यति । **प्रयच्छति गर्ह्यं** मित्यनेन ठकः प्राप्तेः । **प्रकृत्यन्तरं वा** वृद्धिपर्यायो **वृधुषिशब्दः** । तथापि ठगेव स्यात् ।
८८. गाणपतो मन्त्र इत्येव साधु । **अश्वपत्यादिभ्यश्चे**त्यण् ।
८९. पथि कुशलः पथकः । **तत्र कुशलः पथः** (५।२।६३) इत्यनेन वुन् । पन्थानं गच्छति पथिकः । **पथः ष्कन्** (५।१।७५) ।

९०. ततो यथावद् विहिताध्वराय (रघु० ५।१८)।

९१. द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः (वर्षस्याभविष्यति ७।३।१६ इत्यत्र दीक्षितः)।

९२. अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः (मनु० १२।१०३)।

९३. द्वे षष्टी जीवितपरिमाणमस्येति द्विषाष्टिकः।

---

९०. यथाशब्दस्यासत्त्वार्थकत्वात्कर्मत्वायोगात्तदर्हम् इत्यनेन वति-र्दुर्लभ गति चेत्—अत्राहुः—यथाशब्दो वृत्तिविषये सत्त्वार्थकः, यथात्वमित्यादिषु त्वतलादिदर्शनात्। अन्यथा षष्ठ्यपि नास्तीति त्वतलौ न स्याताम्।

९१. द्विवार्षिको मनुष्य इति दीक्षितप्रयोगश्चिन्त्यः। **चित्तवति नित्य-** इति ठञो लुकि द्विवर्ष इत्येव भवितव्यम्। मनुष्यसदृशः प्रति-मादिरत्र मनुष्यशब्देनाभिप्रेत इति स्थितस्य गतिः कथंचिच्चि-न्तनीयेति तत्त्वबोधिनीकारः। **एवं समादधत्तत्त्वबोधिनीकारो नेक्षते नहि प्रतिमाऽधीष्टा भृता वा भवतीति।** एवं स्थिते वर्ष-स्याभविष्यति इत्युत्तरपदवृद्धिप्रतिषेधादत्र **भविष्यदर्थे** वृद्धिः कुतः। अस्थाने शङ्कितं ते। अधीष्टभृतयोरभविष्यतीति प्रति-षेधो न। गम्यते हि तत्र भविष्यत्ता न तु तद्धितार्थः। **इति वृद्धि-प्रतिषेधाभावस्तु निपुणमुपपादितो भवति।**

९२. **द्विवचनविभज्योपपदे** इति विभज्येषु ग्रन्थिषूपपदेष्वतिशायन ईयसुन्विधीयते तेन श्रेयांस इतीष्यते।

९३. द्वे षष्टी जीवितपरिमाणमस्य द्विषाष्टिक इति साधु। **तदस्य परिमाणम्** (५।१।५७)। अत्र सूत्रे समर्थविभक्तिः प्रत्ययार्थश्च **सोऽस्यांशवस्नभृतय** इति पूर्वसूत्रादेवानुवर्तिष्यते। किमर्थं पुन-र्विधानम्। पुनर्विधानसामर्थ्याद**ध्यर्धपूर्वद्विगोर्लुङ्** न भवति। अयमर्थः—पूर्वसूत्रात्समर्थविभक्तेः प्रत्ययार्थस्य चानुवृत्तेः प्रथमं यः प्रत्ययो विधीयते तस्या**ध्यर्धपूर्वगोर्लुग्** इत्यनेन लुग्विधीयते न पुनर्य इह सूत्रे समर्थविभक्तेः प्रत्ययार्थस्य चोपादानात्पुनर्विधी-यते तस्यापि। तथा सति पुनर्विधानमनर्थकं स्यात्।

९४. विवर्त इति दार्शनिकशब्दस्य कोऽर्थः ?
९५. नैलहारिद्रकौसुम्भवासोराशिमदापयत् (बृ० श्लो० सं० ८।३७)
९६. मन्त्रो हीनः स्वरतो वर्णतो वा । किमत्र दुष्टम् ।
९७. त्वत्पादद्युतिवत् सरागसुभगाः (नारा ७४।२) ।
९८. सर्वा व्यवस्थाः स्वकरी चकार (तुलसी० १।३०) ।
९९. तस्याभवद् वैतानिकी न सेवा (तुलसी० १।३१) ।
१००. वृद्ध्याजीवस्तु वार्धुषिरित्यमरः ।

---

९४. दार्शनिकानां शब्द इति विग्रहश्चेन्न दोषः । दार्शनिकश्चासौ शब्दश्चेति समानाधिकरणसमासे तु दार्शनिकशब्दो दुष्प्रयुक्तो भवति । नायं दर्शनभव इत्यर्थे प्रयुक्तपूर्वः । तेन दर्शने परिभाषितो दर्शने रूढ इति वा वक्तव्यम् ।

९५. नील्या रक्तं नीलम् । **नील्या अन्वक्तव्यः** । तेन नैलमिति परिहार्यम् ।

९६. नैष पञ्चम्यास्तसिर्येनापादाने **चाहीयरुहोरित्यनेन** तसिः सिध्येत् । तृतीयाया एष तसिः । स्वरेण वर्णेन वा हीन इत्यर्थः ।

९७. क्रियातौल्ये वतिर्विधीयते, न तु गुणतौल्ये । तेन इवशब्दः प्रयोक्तव्यः ।

९८. स्वकरी चकार इति दुष्यति । **कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः** (५।४५०) इति सम्पद्यतेः कर्तरि च्विः शिष्यते । अत्र तु सम्पद्यतेरधिकरणात् (सप्तम्यन्तात् करशब्दात्) स विहितः । स शास्त्रातिक्रमः । यदि करशब्देन करस्थो लक्ष्यते न दोषाय भवेत् ।

९९. वैतानिकीत्यपशब्दः । उभयपदवृद्धेरविधेः । इह संस्कारवान् वैतनिकीशब्दोपि दुष्प्रयोगः । वेतनेन जीवतीति वैतनिक उच्यते, न तु वेतनेन कृता परिचर्या वैतनिकीति भण्यते ।

१००. वार्धुषि रिति वार्धुषिकेऽर्थे न सिध्यति । वृद्ध्यर्थ धनं वृद्धिः । वृद्धिं गर्ह्यां प्रयच्छति इति **प्रयच्छति गर्ह्यम्** (४।४।३०) इति ठक् । **वृद्धे र्वृधुषिभावो वक्तव्यः** । स च प्रत्ययसंनियोगेनेष्यते, तेन वृधुषिरिति स्वतन्त्रा प्रकृति र्नास्ति । ठकि सति वार्धुषिक इति सिध्यति । पृषोदरादित्वात्कलोपे वार्धुषिरिति रूपसिद्धिरिति विद्धि ।

१०१. देवेभ्यो मद्भयं नास्ति सत्पथीनस्य वै मनाक् (स्कन्द० का० ४।५८।१६७।
१०२. त्वय्यधीनः शमो राजन् मयि चैव विशांपते (भा० उ० ६५।१३)।
१०३. अत्रान्तरे तस्य राज्ञो धार्मिकी धीरजायत (राज० ७।४९३)।
१०४. सतां साप्तपदी मैत्री (स्कन्द० का० ४।६।३५)।
१०५ अह्नस्त्रिकृत्वः सन्ध्यां च द्विकृत्वो देवदर्शनम्।
एककृत्वस्तु शयनं सज्जनेन्द्रः करोति हि॥
१०६. रोषेण महताविष्टो दन्तान् कटकटाय्य च (रा० ६।८०।१)।

---

१०१. सत्पथीन इत्यपाणिनीयम्। **तत्सर्वादेःपथ्यङ्ग पत्रपात्रं व्याप्नोति** (५।२।७) इत्यनेन सर्वादेरेव पथ्यन्तात्खो विधीयते। एकत्र विषये विहितान्प्रत्ययान् अन्यत्रादिशन्ति बाला अनुकरणशीलाः। तदिदमसदृशमबालानां प्रज्ञानाम्।
१०२. त्वय्यधीनः। आचार्यः पाणिस्त्वध्युत्तरपदात्खमिच्छति। तेनासमासे खो न प्राप्नोति। वाक्यकारः कात्यायनस्तु **वाक्यं वक्तर्यधीनं हि** इत्यसमासेपि खं प्रयुङ्क्ते। **उत्तरोत्तरं मुनीनां प्रामाण्यम्** इति तदपि साधु। इनमधिगतोऽधीनः। **अत्यादयः क्रान्ताद्यर्थे द्वितीयये**ति प्रादिः समास इत्येवमपि समादधते विदां वराः।
१०३. धार्मिकी धीरित्यत्र शब्दसाधुत्वं नाशङ्क्यते, प्रयोगसाधुत्वं खल्वभि शङ्क्यते। **धर्मं चरति** (४।४।४१) इति धर्मं चरति शीलयति यः स धार्मिक उच्यते। धर्मेभवा धार्मिकी। अध्यात्मादित्वाट् ठञि प्रयोगसौष्ठवमवसेयम्।
१०४. सप्तभिः पदैरवाप्यते इति साप्तपदी। **शेषे** इत्यण्। पाणिनेस्त्वविदित एष शब्दः।
१०५. **द्वित्रिचतुर्भ्यः सुच्** (५।४।१८) इति कृत्वसुचः सुचा बाधात्तत्प्राप्तिरेव न। **एकस्य सकृच्च** (५।४।१९) इति सकृदादेशात् संयोगान्तस्य लोप (८।२।२३) सुचो लोपात् सकृद् इत्येव प्रयोगार्हः परिनिष्ठितः शब्दः।
१०६. कटकटाय्येति प्रमादः। कटकटाशब्दो डाजन्तो गतिः। डाच् च कृभ्वस्तियोगे विधीयते। अत्र तु करोतिरेव न श्रूयते। दूरे क्त्वो ल्यबादेशः।

१०७. तदिदं पार्षतेनेह महदाधार्मिकं कृतम् (भा० द्रोण० १९५।११)।
१०८. कथं शाश्वते ब्रह्मणि स्थितः ?

---

१०७. अधर्माच्चेति वक्तव्याद् अधर्मं चरतीत्याधर्मिक इति ठग् भवति। नञ् विरोधे। इह त्वाधर्मिकस्य कर्म आधर्मिकमुक्तमुपचारात्। कर्मप्रत्ययमन्तरेणापि कर्माभिधानम्।

१०८. शश्वद् भवं शाश्वतम्। अव्ययानां भमात्रे टिलोप इति तु न। बहिषष्टिलोपवचनादस्य वचनस्यानित्यत्वम्।

इति तद्धितपरिशेषविवेचनम्।

## अथ समासेषु विवेच्यानि ।

### तत्र नित्यसमासाधिकारः प्रथमः ।

१. मद्यमकरन्द[1]माक्षिकाणां[2] वाची मधुशब्दो द्विलिङ्गः ।

२. चिरमनुनाथितोऽपि कोपनोऽसौ स्वी न कृतवान्प्रणयं शिष्याणाम् ।

३. भुजङ्गानां पयसः पानं विषमेव वर्धयति न तु दशनप्रवृत्तिं तेषामुपरमयति ।

४. आकाशेन संकाशं नीलं विमलं च जलमस्याः सरस्याः ।

५. धर्माधिकारिणंमन्याः शास्त्रिणो बलात्पातितानामपि प्रतिसंस्कारं न प्रतिपद्यन्ते ।

---

१. **सुप्यजातौ णिनिस्ताच्छील्ये** इति केवलाद् (निरुपपदात्) ब्रूधातोर्णिनिर्न संभवति । तेन वाचक इति **वक्तव्यम्** । मद्यमकरन्दमाक्षिकवाचीति वा । **उपपदमतिङ्** इति नित्य समासः । **अस्वपदविग्रहोऽविग्रहो वा नित्यसमासः** ।

२. न स्वीकृतवानित्येव न्याय्यम् । **ऊर्यादिच्विडाचश्चे**ति गतिसंज्ञायां **कुगतिप्रादय** इति नित्यः समासः ।

३. **कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्** इति कर्मण्युपपदे धातोर्नपुंसकलिङ्गे भावे ल्युट् प्रत्ययो भवति । **ल्युट् च** (३।३।११५) इत्यनेनैव सिद्धे प्रत्यये नित्यसमासार्थं वचनम् । तेन पयःपानमित्येव साधु ।

४. **उत्तरपदे त्वमी निभसंकाशनीकाशप्रतीकाशोपमादय** इत्यमरवचनान्निभादय उपमावचना नित्यं समस्यन्ते । **उत्तरपदशब्दो हि समासचरमावयवे रूढः** ।

५ द्वितीयान्ते धर्माधिकारिन्शब्द उपपदे मन्यतेर् **आत्ममाने खश्चे**ति खश्प्रत्यये **नलोपः प्रातिपदिकान्तस्ये**ति (८।२।७) नलोपे तस्यासिद्धत्वाद् **अरुर्द्विषदजन्तस्य मुम्** (६।३।६७) इति मुम्न । तेन धर्माधिकारिमन्या इत्येव शब्दः ।

---

[1] मकरन्दःपुष्परसः। [2] माक्षिकं मधु।

६. वेदिनः स्वस्य परस्य च भाषायां वाग्विशेषं विदुः, नेतरे ।
७. अद्य वाऽब्दशतान्ते वाऽवश्यभावी मृत्युर्जनिमताम् ।
८. साधु खलु पयसः पानं देवदत्तेन । (काशिकायाम्)
९. अस्मास्वधीनं किमु निःस्पृहाणाम् (किराते) ।
१०. प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः । (रघौ १।३)

---

६. सुप्युपपदे णिनेर्विधिरिति केवलाद् विदेस्तदप्रसङ्गाद्वेदिन इत्यसाधु । आवश्यके ऽपि णिनेरप्रसङ्गः । अर्थासाङ्गत्यात् ।
७. अवश्यम्भावीति साधु । अवश्यमिति मकारान्तमव्ययम् ।
८. **कर्मणि च संस्पर्शाद्** इत्यनेन ल्युटि तु नित्य उपपदसमासः स्यात् । तस्माच्छरीरसुखस्याविवक्षायां रोगाद्यभिभूतो यदाऽशक्नुवन्नेव साधु पिबति तदायं प्रयोगः साधुर्द्रष्टव्यः ।
९. **'कल्प्यो हि वाक्यशेषो वाक्यं वक्तर्यधीनं हि'** इति वाक्यकारप्रयोगादस्मास्वधीनमित्यसमासेऽपि साधु । अन्यथाऽ**षडक्षाशितंग्वलंकर्मालंपुरुषाध्युत्तरपदाद्** इत्युत्तरपदात्खेऽस्मदधीनमित्येव साधु स्यात् । केचिद् इनं स्वामिनमधिगतोऽधीन इत्येवं व्युत्पादयन्ति ।
१०. **इवेन समासो विभक्त्यलोपश्चे**ति छन्दसि विधिः । तत्रापि न नित्यः, किन्तर्हि क्वाचित्कः । तेन प्रकृते व्यस्तप्रयोगः सङ्गच्छते ।

## इति नित्यसमासविवेचनम् ।

## अलुक् समासाधिकारो द्वितीयः ।

१. इतः प्राह्णतरे प्रस्थाताह इति मतिर्मम, विघ्नश्चेन्नातर्कितमुपनमति ।
२. इदमस्य वचो वाचस्पतेरपि विस्मयमादधीतेति दृढं प्रतीमः ।

---

१. **घकालतनेषु कालनाम्न** इति विभाषा सप्तम्या अलुक् । तेन प्राह्णेतरे इति साधु । पक्षे प्राह्णतरे इत्यपि ।
२. वाचस्पतेरिति साधु । **षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु** (८।३।५३) इत्यनेन सत्वविधानसामर्थ्यात् षष्ठ्या अलुक् । अपरे तु **द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ चे**ति सामान्यापेक्षज्ञापकात् षष्ठ्या अलुक्, कस्कादित्वाच्च सत्वमित्याहुः ।

३. विंशतिरिमे च्छात्राः, देवदत्तस्त्वात्मचतुर्थः ।
४. विषमेस्थस्य हि न पापाच्छङ्कते चेतः ।
५ यः स्थण्डिलेशायी स स्थाण्डिलो ब्रह्मचारीत्युच्यते ।
६. सततनैशतमोवृतमन्यतः (किराते) ।

---

३. **आत्मनश्च पूरणे** इत्यलुकाऽऽत्मना चतुर्थ इति साधु । आत्मा चतुर्थोऽस्येति बहुव्रीहौ तु न दोषः ।
४. **स्थे च भाषायामिति** निषेधात्सप्तम्या लुक् । तेन विषमस्थस्ये-त्येव साधु ।
५. **नेन्सिद्धबध्नातिषु चेति** सप्तम्या अलुक् न । तेन स्थण्डिलशायी-त्येव शब्दः । स्थण्डिलशायीत्यत्र **व्रते** (३।२।८०) इति णिनिः ।
६. **ओजःसहोऽम्भस्तमसस्तृतीयायाः** इत्यलुगिष्यते । उत्तरपदाधि-कारेऽपि तदन्तविधिप्रवृत्तेः ।

## इत्यलुक्समासविवेचनम् ।

## अविहितनिषिद्धसमासाधिकारस्तृतीयः ।

१. अस्र-वारिस्रवन्नेत्रयुगेन मुखेन स आत्मवृत्तान्तं मन्दमन्दमलापीत् ।[1]
२. व्यवहारे सर्वश्रेष्ठः स्याः शास्त्रे च परिनिष्ठितः ।

---

१. अस्रवारि अश्रुजलं स्रवत् (स्रावयदित्यर्थः) नेत्रयुगं यस्य तेनेति विग्रहः । अत्र अस्रवारीति द्वितीयान्तम् । तस्य शत्रन्तेन स्रवच्छब्देन केन शास्त्रेण समासः । न केनापीति अस्रवारिस्रा-विनेत्रयुगेनेति वाच्यमुपपदसमासेन ।
२. **न निर्धारणे** इति निर्धारणे या षष्ठी सा न समस्यत इति सर्वेषां श्रेष्ठः इति साधु । निर्धारणे सप्तम्यपि विहिता । तस्या अनिषेधात् सर्वेषु श्रेष्ठः सर्वश्रेष्ठ इति साध्विति केचित् । अनर्थ-कस्तर्हि षष्ठीसमासनिषेध इति न शङ्क्यम् । **षष्ठीसमासस्य सप्तमीसमासस्य च स्वरे विशेषात्** ।

---

१. लप व्यक्तायां वाचि, तस्य लुङि रूपम् ।

३. दुःखाग्निदग्धाञ्जीवनोपरमतो जनाननुकम्पन्ते सम्यग्दर्शन-सम्पन्ना महात्मानः ।
४. विद्वत्पूजाकर्तुर्न केवलं व्यतिक्रमः स्वार्थहानं च ।
५. अष्टाध्यायीमधीतवतः कस्य नाम न विदितो महिमा पाणिनि-सूत्रकारस्य ।
६. स षष्टिरूप्यकाणि मासिकं वेतनं लभते न च निर्वृणोति[1]।
७. मत्संमतोऽयं पक्षस्तवाप्यभिमत इति संभावयामि ।
८. सहजं हि काककार्ष्ण्यं तत्क्रौर्यचापले च ।

---

३. विद्वत्पूजां न करोति, तस्येत्यर्थो विवक्षितः । प्रसज्यप्रतिषेधेऽत्र नञ् । स च न समस्यते । पर्युदासेन च नेह क्वचिदर्थः । तेना-साधुरेवायं न्यासः ।
४. जीवनोपरमत इति द्वितीयान्तं पदम् । **जुगुप्साविरामप्रमादार्थाना-मुपसंख्यानमिति** जीवनशब्दात् पञ्चमी । तस्याः पञ्चम्याः अत्र-न्तेनोपरमच्छब्देन केन समासो विधीयत इति भवान्पृष्ट आचष्टाम् पञ्चमीति योगविभागात् समास इति चेन्मैवम् । तस्य शिष्ट-प्रयोगेषु निर्वाहार्थमभ्युपगमात् ।
५. **पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेनेति** षष्ठीसमास-निषेधे पाणिनेः सूत्रकारस्येति साधु । विशेषणं **विशेष्येण** बहुल-मित्यनेन तु समासो भवत्येव । तदा नियोगतो विशेषणस्यैव पूर्वनिपातः । सूत्रकारपाणिनेः ।
६. **दिक्संख्ये संज्ञायामिति** नियमात् संज्ञायामेव संख्यावचनाः समानाधिकरणेन समस्यन्ते । अत्र च संज्ञा नास्तीति षष्टिं रूप्यकाणीति व्यासेन वक्तव्यम् ।
७. **क्तेन च पूजायामिति** सूत्रेण **क्तस्य च वर्तमाने** इति विहितायाः षष्ठ्याः समासो नेति मम सम्मत इत्येव वाच्यम । सूत्रे पूजा-ग्रहणं **मतिबुद्धिपूजार्थेभ्यश्चेति** सूत्रोपलक्षणम् ।
८. अनित्योऽयं गुणेन निषेधः । **तदशिष्यं संज्ञाप्रमाणत्वादिति-**निर्देशादिति पूरणगुणेत्यादिसूत्रे दीक्षितः । **अनित्यत्वं भाष्ये न दृश्यत इति दाधिमथाः** । तेन काकसम्बन्धिकार्ष्ण्यं काककार्ष्ण्य-मित्येवं मध्यमपदलोपिसमासकल्पनया साधुत्वमवसेयम् ।

---

१. सुखायते, सुखितो भवति ।

९. एतत्पर्वतोपरिष्टाद् विस्तीर्णा समतला भूरस्ति ।
१०. परस्परविरोधजनयितार इमे ग्रन्था न विश्वजनीना[1] इति सत्यम् ।
११. अस्त्ययं लोकः पुत्त्राभिलाषुकः ।
१२. अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता (कु० ६।७९) ।
१३. महिलोत्तमायाः श्री सीतायाः के वयं महिमानं परिच्छेत्तुम् ।
१४. कविप्रथमपद्धतिप्रणेता भगवान्वाल्मीकिरद्यापि कवीनामुपजीव्यः।
१५. कार्तवीर्यार्जुनो नाम राजा बाहुसहस्त्रभृद् बभूव ।
१६. शुक्राचार्यकन्यादेवयान्या वृषपर्वदुहितृशर्मिठायाश्च मिथः कलहो भूत् ।

---

९. **पूरणगुणे**त्यादिना शास्त्रेणाव्ययेन षष्ठीसमासनिषेधात् पर्वतस्योपरिष्टादित्येव साधु ।

१०. परस्परविरोधस्य जनयितार इत्यसमासेन वक्तव्यम् । **कर्तरि चे**ति षष्ठीसमासनिषेधात् ।

११. **न लोकाव्ययनिष्ठाखलर्थतृनाम्** (२।३।६९) । इति कृद्योगलक्षणायाः षष्ठ्या निषेधे पुत्राद् द्वितीया । पुत्त्रमभिलाषुकः । अभिलषेरुकञ् । द्वितीयासमासविधेरभावाद् वाक्यमेव साधु ।

१२. अत्र चतुर्थीसमासविधेरभावात् सद्भर्त्रे प्रतिपादितेत्येव साधु । अस्ति च तत्पाठान्तरं मातृकाग्रन्थेषु ।

१३. महिलानामुत्तमाया इत्येव साधु । उक्तोऽत्र हेतुः ।

१४. कविप्रथमपद्धतेः प्रणेतेत्येव न्यासो न्याय्यः । **कर्तरि**इति षष्ठीसमासनिषेधात् ।

१५. **विशेषणं विशेष्येण बहुलमि**ति समासः । कार्तवीर्यश्चासावर्जुनश्चेति विग्रहः । षष्ठी समानाधिकरणेन न समस्यत इति प्रतिषेधे सत्यपि विशेषणं विशेष्येण बहुलमिति समासो भवत्येवेति वृत्तिः ।

१६. शुक्राचार्यकन्याया देवयान्याः वृषपर्वदुहितुः शर्मिष्ठाया इत्येवं व्यासेन वक्तव्यम् । **पूरणगुणे**त्यादिना सूत्रेण षष्ठ्याः समानाधिकरणेन समासनिषेधात् ।

---

१. विश्वजनेभ्यो हिताः ।

१७. मास्म केवलो गमः । एते वयं त्वत्साकं यामः ।
१८. कलहं स राममहितः कृतवान् (भट्टि०)
१९. प्रेम्णा शरीरार्धहरां हरस्य (कु० १।)
२०. पटपाचकाद्याः प्रकृतयः सुप्तिङाद्याः प्रत्ययाः स्वोपस्थाप्यार्थस्य बोधं नियमतः शब्दान्तरं सहकृत्य जनयन्ति (कारिकावल्यां शब्द-शक्तौ षष्ठ्यां कारिकायाम्)
२१. सखे सम्प्रति किंकार्यव्यग्रोऽसि । क्षणं विरम । विश्रम्भालापसुखं निर्विशावः ।

---

१७. **सहयुक्तेऽप्रधान** इति सहार्थैर्योगे तृतीया विहिता । एतल्लक्षणा-यास्तृतीयायाः समासस्तु **क्वचिन्नोक्त** इति त्वया साकमित्येवं व्यासेन वक्तव्यम् ।

१८. **मतिबुद्धिपूजार्थेभ्यश्चेति** क्तस्य वर्तमानकालो भूतकालतां न बाधते । **तेनैक दिक्** (४।३।११२) इत्यतः तेन इत्यधिकारे **उप-ज्ञाते** (४।३।११५) इति निर्देशेन भूतकालस्याबाधज्ञापनात् । उप-ज्ञाते इत्यत्र हि भूते क्तो न वर्तमाने । अन्यथा क्तस्य च वर्तमाने इति षष्ठीविधानादुपज्ञातशब्दस्य तेनेति तृतीयायोगो न स्यात् । सामान्यविषयकं चेदं ज्ञापकमित्येव न्याय्यम् । पूजितो यः सुरा-सुरैरित्यादिप्रयोगा मा स्म व्याकुप्यन्निति । राममहित इति रामेण महितो (योऽभूत्) स राममहितः ।

१९. **अर्धं नपुंसकम्** इति षष्ठीसमासापवादोऽयं योगः, तेनार्धं शरीर-स्येत्यर्धशरीरम्, तद्धरतीत्यर्धशरीरहरा, ताम् इत्येवं भवितव्यम् । स्थितस्य गतिश्चिन्तनीयेति अर्धं हरतीत्यर्धहरा, शरीरस्यार्ध-हरेति शरीरार्धहरा, ताम् । **एकदेशान्वयात्** ।

२०. सहकृत्येति दुष्यति । सहशब्दो गतिर्नेति गतिसमासाभावे क्त्वो ल्यब्दुर्लभः । सहकृत्वेत्येव साधु ।

२१. **किं क्षेप** इति क्षेपे गम्यमाने किंशब्दः समस्यते । तत्पुरुषश्च समासो भवति । न चात्र क्षेपो गम्यते । तेन कस्मिन्कार्ये व्यग्र इतीत्थं व्यासेन वक्तव्यम् । बहुव्रीहौ समासे त्वसत्यपि क्षेपे किं-शब्दः समस्यते निर्बाधम्—**किंसमाचाराः सम्प्रति तातपादाः** ।

२२. अगवि च गोत्वं यदि भवदिष्टं, भवति भवत्यपि सम्प्रति गो-
त्वम् ।।

२३. यावत्साधनदेशमवर्तमानो यावत्साध्यदेशवृत्तिरुपाधिः ।

२४. एव च व्याख्या माने योगभाष्यग्रन्थो प्यनुपपद्येत ।

२५. नानाकर्म निरीक्षमाणहृदया (राज्ञी बिन्दुमती) (मोह० ४।११) ।

२६. पार्श्वापार्श्वि सुपक्वपूगनिवहं···काश्चिद्···गुटिकां संमन्वते
मोहिनीम् (मोह० ५।१७) ।

२७. दिनानुदिनमद्भुतं हृदयाकाङ्क्षतं वर्धितम् (मोह० ७।१०)

---

२२. भवदिष्टम् इत्यपशब्दः । भवत इष्टमित्येवं व्यासेन वक्तव्यम् ।
क्तेन च पूजायाम् इत्यनेन षष्ठीसमासनिषेधात् ।

२३. यावत्साधनदेशम् इति नायं समासः । ततोऽन्यत्रापि दृश्यत
इति यावद्योगे द्वितीया ।

२४. अनुपपद्येतेत्यपशब्दः । लोके तिङन्तेन समासस्याविधेर्नोपपद्येते-
त्येव साधु ।

२५. नानाकर्मेति द्वितीयान्तं पूर्वपदम् । तस्य शानजन्तेन निरीक्ष-
माणेन केन समासः ।

२६. पार्श्वापार्श्वि इत्यत्र किं नाम समास-विधायकं शास्त्रम् ? **तत्र
तेनेदमिति सरूपे** इति चेन्न । तत्र सूत्रे तेन शब्देन प्रहरणविषये,
तत्रशब्देन च ग्रहणविषये पदे गृह्येते । इदमिति युद्धं गृह्यते । इच्च
कर्मव्यतिहारे विधीयते । **प्रकृते सर्वमिदं नास्तीत्यपशब्दः स्व-
कपोलकल्पित एषः ।**

२७. दिनानुदिनम् इत्यविहितदुर्घटोऽयं समासः । अनुगतं दिनमनु-
दिनम् । दिनमनुगतं वाऽनुदिनम् इति प्रादिः समासः । दिनस्यानु-
दिनमिति षष्ठीसमासः । समासार्थस्तु न कश्चिदस्ति । **अन-
र्थकं पदकदम्बकम्** । दिनं दिनमनु अनुदिनम् इति वीप्सायाम-
व्ययीभावः । पूर्वावयवो दिनशब्द उत्तरावयवेनानुदिनेनासमर्थ
गडु भूतः । अनुदिनम् इत्येतावतैव विवक्षितार्थसमर्पणात् ।

२८. भवन्निधनकाम्यया जगति बभ्रमुर्निर्भयाः । कुमारकविमारकाः (नारा० ३९।७) ।

२९. याते कतिपयाहे च (कथा० ४२।१५३) ।

---

२८. नायं षष्ठोसमासः । विमारक इत्यत्र भविष्यदर्थे ण्वुल् । अकेनोर्भविष्यदाधमर्ण्ययोः (२।३।७०) इत्यनेन षष्ठीनिषेधः । तेन वाक्ये द्वितीया श्रोष्यते । द्वितीयासमासस्य चेह विधायकं नेत्यपशब्द एवायम् ।

२९. कतिपय शब्दः संख्या न । तेन द्विगुसमासस्याप्रसङ्गः । यातेषु कतिपयेष्वहःस्विति वक्तव्यम् ।

## इत्यविहितनिषिद्धसमासविवेचनम् ।

## दुर्घटासमर्थसमासाधिकारश्चतुर्थः ।

१ इमां प्रश्नोत्तरीं परिशीलयिष्यसि चेद् ध्रुवं परीष्टिं[1] तरिष्यसि ।

२. न हि मृत्युनिर्भयचेतसां वीराणामजय्यं नाम किञ्चिदस्ति ।

३. पुंसां शरीरं हि पुण्यावासः परमेश्वरस्य । तस्य परासृग्रञ्जनं कथमुपपद्येत ।

---

१. प्रश्नाश्चोत्तराणि चेति प्रश्नोत्तराणि प्रश्नोत्तरं वेति युज्यते वक्तुम् । **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरि**त्युत्तरपदस्य उत्तरशब्दस्य लिङ्गम् । समाहारे तु **स नपुंसकमि**ति समासस्य नपुंसकत्वम् । नात्र बहुव्रीहिः शक्यशङ्कः । चार्थस्य विद्यमानत्वाद् द्वन्द्वस्य दुर्वारत्वात् ।

२. भयशब्दो हि मृत्युसव्यपेक्ष इति निःशब्देन समासमप्राप्य मृत्युशब्देन प्रथमं समसनमर्हति । मृत्योर्भयं मृत्युभयम् । निष्क्रान्तं मृत्युभयात् इति निर्मृत्युभयम् । निर्मृत्युभयं चेतो येषां तेषां निर्मृत्युभयचेतसामित्ययं न्यासो न्याय्यः ।

३. तस्य परासृजा रञ्जनमित्येवं न्यासः कार्यः । कर्तृकरणे कृता बहुलमिति बहुलग्रहणात्समासो न । क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिरित्यादि चतुर्विधं बाहुलकमाहुः ।

---

१. परीक्षाम् ।

४. धर्मिष्ठे राज्ञि[1] बल्यपीडिताः प्रजा नन्दन्ति ।
५. वर्तमानस्य वैषम्यस्य प्रतीकारार्थं यतनीयं साम्यं च कथं-
चित्कल्पनीयम् ।
६. ये संस्कृतपुनरुद्धारमिच्छन्ति ते संस्कृतज्ञान्भूयो मानयन्तु ।
७. प्रश्नान्वक्तु[2]मक्षमोऽसौ चिरं मौनास्थितः स्थितः ।
८. नृणां श्रेष्ठो रामो धर्मज्ञां योषित्सर्वगुणालंकृतां सीतां परिणिनाय ।
९. गीर्वाण[3] समर्पणीया इमे बलयो न दूषणीयाः ।
१०. आगामिपूर्णिमापूर्वप्रकाश्या निबन्धाः सम्प्रेष्या इति सबहुमान-
मभ्यर्थ्यन्ते विपश्चितः ।

---

४. बलिभिः करैः पीडिता इति बलिपीडिताः । तृतीयातत्पुरुषः ।
ततो नञ्समासः । तेन अबलिपीडिता इत्येव साधु ।
५. प्रतीकारार्थमित्यसमर्थसमासोऽयम् । वैषम्यशब्दापेक्षः प्रतीकार-
शब्दोऽर्थशब्देन समसनं नार्हति । **सापेक्षम समर्थं भवतीति ।
समर्थानां च पदविधिर्भवतीति** । प्रतीकाराय, वैषम्यप्रतीकारार्थ-
मिति समासेन वा वक्तव्यम् ।
६. पुनः संस्कृतोद्धारमित्येवं समासो निर्दुष्टः स्यात् । उद्धारशब्दः
(कर्मभूतं) संस्कृतमाकाङ्क्षति । तेन प्रथमं संस्कृतोद्धार इति
षष्ठीतत्पुरुष आस्थेयः, ततः पुनः शब्देन समासः । तस्मात्
पुनःसंस्कृतोद्धार इत्येव साधु । यथा वाक्यपदीयकारस्य
भगवतो हरे **भूयोद्रव्यसमुद्देश** इति प्रयोगः ।
७. मौनमास्थित इति व्यासेन वक्तव्यम् । द्वितीयासमासविधेर-
भावात् । द्वितीयेति योगविभागाद्वा समास इति समाधेयम् ।
८. सर्वयोषिद् गुणालङ्कृतामित्येवं न्यासः श्रेयान् । पूर्वं षष्ठीसमासः
पश्चात्कर्मधारय इत्येष क्रमः प्रायिकः ।
९. गीर्वाणेभ्यः समर्पणीया इत्येवं वाक्यमाश्रयणीयम् । चतुर्थीस-
मासस्याविधेः ।
१०. आगामिपूर्णिमायाः पूर्वमित्येवं विग्रहेण वक्तव्यम् । पञ्चमी
समासस्याविधानात् । न च पूर्वेण पञ्चमीसमासः शिष्टप्रयोगेषु
दृष्ट इत्यलं तत्समाधानयत्नेन ।

---

१. बलिः करः । २. प्रतिवक्तुम् । उपसर्गाणां द्योतकत्वान्नार्थः प्रतिना ।
तथा च भारते प्रयोगः—प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व चेति
(वन०) । ३. गीर्वाणा देवाः ।

११. देहस्यावसानोत्तरस्मिन्समये कां गतिं गच्छति देहीति सर्वस्य जिज्ञासाविषयः ।
१२. हे त्रिलोकनाथ ! दयाकूपारो[1] ऽसि ।
१३. भोः पदार्थमात्रस्य ज्ञातयाथार्थ्य विद्वन् ! किं नाम तेऽविदितं यन्मयाऽऽख्येयम् ।
१४. अद्यत्वे त्रिसहस्राभिर्जातिभि विभक्ता हिन्दवः परोप[2] जापमन्तरेणाप्यन्तर्जर्जरतां गताः ।
१५. स्वोदात्ताचरणेन पुरुष आत्मानमुन्नयति, अनुदात्ताचरणेन चाधो नयति ।
१६ अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति (अनर्घ०)

---

११. अवसानोत्तरस्मिन्नित्यसमर्थसमासः । अवसानमिति देहेन सम्बद्धमिति सापेक्षम् । **सापेक्षमसमर्थं भवति** । तेन देहावसानोत्तरस्मिन्नित्येवं न्यासो न्याय्यः ।
१२. दुर्लभस्त्रिपदस्तत्पुरुष इति त्रयाणां लोकानां नाथ इति समासो न स्यात् । तेन त्र्यवयवो लोकस्त्रिलोकः । मध्यमपदलोपी समासः । त्रिलोकस्य नाथस्त्रिलोकनाथ इत्येवं व्याख्येयम् ।
१३. **सापेक्षत्वेऽपि गमकत्वात्समासो** देवदत्तस्य गुरुकुलमितिवत् । तेन ज्ञातयाथार्थ्येति साधु ।
१४. त्रिसहस्राभिरित्पशब्दः । त्रिषु जातिसहस्रेषु इति वक्तव्यम् । क्वचित् त्रिसहस्रमित्येकवचनान्तं प्रयुज्यते, त्र्यधिकं सहस्रमिति च तद्विग्रहो भवति । त्रीणि सहस्राणीत्यर्थे तु समासो नास्ति । **दिक्संख्ये संज्ञाया**मिति नियमात् ।
१५. पूर्वं षष्ठीसमासः सम्बन्धाख्यायको भवति पश्चात्तत्सम्बन्धवान् विशेष्यत इत्युदात्तस्वाचरणेनेति न्यासः **शोभनः** स्यात् । उत्तरपदार्थप्रधानस्तत्पुरुष इत्युदात्तार्थो गौणतां भजत इत्युदात्तेन स्वाचरणेनेति **शोभनतरो** न्यासः । स्वशब्दमन्तरेणापि तदर्थगतेरुदात्तेनाचरणेनेति **शोभनतमः** ।
१६. सहशब्देन सदृशवचनेन समासो द्रष्टव्यः । **वोपसर्जनस्येति वा** सादेशः । अत एव सत्वाभावपक्षे श्रीरामायणे प्रयोगः—तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ( ) इति ।

---

१. अकूपारः समुद्रः । २. उपजापः कर्णेजपः ।

१७. प्रतिप्रश्नस्योत्तरे द्वे संभवतः पक्षविपक्षसमाश्रयेण ।
१८. रम्यौ हि सूर्योदयास्तौ भवत इति तत्र काले नियतं विहरेत् प्रधीः
१९. को भेदः स्वसुराज्ययोः । यदि जानासि नूनं निपुणोऽसि ।
२०. तत्तद्ग्रन्थानधीतानामबहुश्रुतानामगम्योऽयमर्थः ।
२१. रजोदर्शनस्य पञ्चमदिवसादारभ्याषोडशीं तिथिमृतुदानकालः ।
२२. अन्यैः कृतोपकारावेदन कृतघ्नता नाम ।
२३. सन्तानस्य विनयाधानं हि जनकयोः प्रथमं कर्तव्यम् ।

---

१७. प्रश्नं प्रश्नं प्रतीति प्रतिप्रश्नमिति वीप्सायामव्ययीभावः । **नाव्ययीभावादतोऽम्त्वपञ्चम्याः** इति सुपोऽमादेशः । तेन प्रतिप्रश्नस्येत्यपशब्दः ।

१८. अस्तमिति मकारान्तमव्ययं तिरोभावे वर्तते । अस्त इति चाचलविशेषस्य संज्ञा । तेन सूर्योदयास्तमयाविति वाच्यम् ।

१९. स्वराज्यसुराज्ययोरित्येवं न्यसनीयम् । साधारणमपि राज्यमिति पदं दुस्त्यजम् । न च स्वशब्देन सुरराज्यशब्दावयवभूतो राज्यशब्दः शक्यो विशेषयितुम् । **पदस्य पदान्तरेणान्वयो न तु तदेकदेशेन** ।

२०. तत्तद्ग्रन्थानधीतानामिति दुष्टो न्यासः । अनधीततत्तद्ग्रन्थानामित्येव शोभनः संनिवेशः । यथास्थिते द्वितीयासमासानुपपत्तेः । तत्तद्ग्रन्थाननधीतवतामित्येवमसमासेन वा वक्तव्यम् ।

२१. **आङ्मर्यादाभिविध्योः** इति विभाषाव्ययीभावः । **अव्ययादाप्सुपः** इति सुब्लुकि आषोडशतिथि इति युक्तः समासः । पक्षे आ षोडश्यास्तिथेरिति वाक्यम् । षोडशी चासौ तिथिश्चेति कर्मधारयः । पुंवत्कर्मधारय इति पुंवद्भावः ।

२२. कृतोपकारावेदनमित्यसमर्थः समासः । तेनान्यकृतोपकारावेदनमित्येवं वक्तव्यम् ।

२३. जननी च जनकश्चेति जननीजनकौ, तयोर्जननीजनकयोः । 'पुमान स्त्रिया' इत्येकशेषविधौ **तल्लक्षणश्चेदेव विशेष** इति वर्तते । अत्र स्त्रीप्रत्ययमात्रं भिद्यत इति न, कृत्प्रत्ययावपि भिद्येते । एकत्र कर्तरि प्रत्ययः, अपरत्राधिकरणे ।

२४. त्रिचतुर्वाङ्गुलायामाः समिधः कुर्वीत ।
२५. सर्वैर्यथाशक्ति परोपकर्तव्यं सफलं नोऽस्तु जीवितमिति ।
२६. आचतुश्चत्वारिंशद्वर्षाणि मध्यमं ब्रह्मचर्यम् ।
२७. साङ्गोपाङ्गस्य प्रतिवेदस्याध्ययनं द्वादश वत्सरान्व्याप्नोति ।
२८. स्मृत्युक्तोऽयमर्थ उपनिषद्भिरविरुध्यत इति सुतरामादेयो भवति ।
२९. आर्यदस्यूनां सञ्जातसंग्रामे दस्यवोऽशूरायन्त परं पराजयन्त[1] ।

---

२४. त्रिचतुराङ्गुलायामा इति समासेन वक्तव्यम् । त्रीणि वा चत्वारि वेति सङ्ख्येये वर्तमानयोस्त्रिचतुःशब्दयो र्बहुव्रीहौ समासे त्र्युपाभ्यां चतुरोऽजिष्यत इत्यचि समासान्ते त्रिचतुराण्यङ्गुलान्यायाम आसामिति पुनस्त्रिपदे बहुव्रीहौ सिद्धमिष्टम् । **प्रमाणेऽङ्गुलं नपुंसकं स्वतन्त्रा प्रकृतिरस्ति ।**

२५. उपकर्तव्यमिति विधेयम् । विधेयेन च समासो नेति परेषामुपकर्तव्यमिति वाक्यमेव साधु । परेषामिति कर्मणि शेषत्वेन विवक्षिते षष्ठी ।

२६. आचतुश्चत्वारिंशद्वर्षमित्यव्ययीभावेन सुपोऽमादेशे वक्तव्यम् । आ चतुश्चत्वारिंशतो वर्षेभ्य इति व्यासेन वा ।

२७. वेदं वेदं प्रति प्रतिवेदमिति वीप्सायामव्ययीभावः । **सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणं नेति** भाष्योक्तेर् **वृत्तस्य वृत्तिमतो वेदशब्दस्य साङ्गोपाङ्गस्येति विशेषणेन योगो न भवितुमर्हति** । एकैकस्य वेदस्येति वक्तव्यम् । प्रतिवेदं साङ्गोपाङ्गमध्ययनमित्येवं वा न्यासः कार्यः । तत्र साङ्गोपाङ्गमिति क्रियाविशेषणम् ।

२८. अविरुध्यत इति प्रमादः । भाषायां तिङन्तेन समासाभावात् । सुप्सुपेत्यधिकारात् । न विरुध्यत इत्येवं वक्तव्यम् ।

२९. संजाते संग्रामे इत्येवं व्यासेन वक्तव्यम् । आर्यदस्यूनामित्यपि हेयम् । विलम्बितेष्टार्थसमर्पणात् । दस्यव आर्या न भवन्तीत्यागन्तुकार्थप्रतीतेः कर्मधारयायोगाद् द्वन्द्वसमाश्रयात् । द्वन्द्व समाश्रये न विविच्य ज्ञायते आर्याणां दस्यूनां चोभयेषां मिथः सङ्ग्राम

---

१. पराजयं प्राप्नुवन् ।

३०. अर्जुनः किल पातालदेशस्य नृपकन्यामुलूपीं परिणिनाय ।
३१. इन्द्रश्चाध्येता बृहस्पतिश्च प्रवक्ता, दिव्यसहस्रवर्षाणि चाध्ययनकालः न चान्तं जगाम ।
३२. पञ्च शतानि च्छात्रा अस्यां पाठशालायायाम् । अत्रार्थे पञ्चशतमिति समासोक्तिः सावद्योत निरवद्येत्यत्र निर्णयं ब्रूहि ।
३३. शतवर्षेभ्यः किञ्चिन्न्यूनवर्षाणि पञ्चनदं नाम जनपदमाङ्ग्ला अशासुः ।
३४. अयं महान् विद्वानस्ति । अयं च महद्विद्वान् । अत्र वाक्यार्थे को विशेषः ।

---

उताहो इतरैः साकमिति, तेन तद्व्यक्तये उभयस्मात्पदात् षष्ठी प्रयोक्तव्या, आर्याणां दस्यूनां च संग्रामे संजाते इत्येवं वक्तव्यम् । आर्याणां दस्युभिः सहेति वा ।
३०. नृपकन्यामित्यसमर्थसमासः । नृपस्य कन्यामिति वाक्यमेव प्रयोज्यम् ।
३१. दिक्संख्ये संज्ञायामिति नियमात् असंज्ञायां संख्या समानाधिकरणेन सुबन्तेन न समस्यत इति दिव्यानि सहस्रं वर्षाणीत्येवं न्यसनीयं दिव्यं वर्षसहस्रमिति षष्ठीसमासेन वा ।
३२. अनन्तरोक्तेनैव नियमेन पञ्चशतमिति सावद्यम् । पञ्चाधिकं शतमित्यर्थे मध्यमपदलोपिसमासे तु न किमप्यवद्यम् ।
३३. शताद्वर्षेभ्य इत्येवं निर्दुष्टं स्यात् । निर्दुष्टत्वे उक्तो हेतुः । किञ्चिन्न्यूनानि इति च वक्तव्यं तस्यार्थस्य प्राधान्यख्यापनाय ।
३४. न हि विशेषणानां परस्परं विशेषणविशेष्यभावोऽस्ति । **नह्युपाधेरुपाधिरस्ति विशेषणस्य वा विशेषणमिति** भाष्योक्तेः । **गुणानां पारार्थ्याद्** इति वैशेषिकसूत्राच्च । तस्मादयं महान् विद्वानिति विशेषणद्वयमेकमेवार्थमिदंलक्षणं विशिनष्टि । अयं विद्वानस्ति महांश्च कुलेन वा धनेन वा विद्याधिगमेन वेत्यर्थः । महदस्य वैदुष्यमित्यर्थो न । **नहि महत्त्वेन विद्वत्त्वं विशिष्यते** । महाविद्वानिति समासार्थस्तु **महद् विद्वत्त्वमस्येति सम्भवति । तत्र विद्वानिति भावप्रधानो निर्देशः । एकतरस्य विशेषणस्य विशेष्यत्वकल्पनयाऽयं विशेषणयोः समानाधिकरणस्तत्पुरुषो वा द्रष्टव्यः** । अपि वा **महद्यथा स्यात् तथा विद्वान्** इति विग्रहे महच्छब्दः क्रियाविशेषणम् । **सुप्सुपासमासः** ।

३५. चतुश्चत्वारिंशत्सहस्राधिका लक्षलोकास्तत्र महात्मनो दिदृक्षया समवेताः।

३६. तृणानि शय्या परिधानवल्कलं वरं, बन्धुमध्ये धनहीनजीवनं तु न वरम्।

३७. आमरणान्ताः प्रणयाः कोपास्तत्क्षणभवराः। परित्यागाश्च निःसहा भवन्ति हि महात्मनाम्॥

३८. अहर्निशं वर्षति वारिधारा तथापि पत्त्रत्रितयः पलाशः।

३९. राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः (अमरे २।५।२५)।

४०. पुरा किलाऽऽबालवृद्धाश्चन्दनचर्चितभालाः संस्कृतमधिजगिरे।

---

३५. चतुश्चत्वारिंशत्सहस्राणि च लक्षं च लोका इत्येवं व्यासेन वक्तव्यम्।

३६. वल्कलं परिधानमिति व्यस्तरूपकेण वाच्यम्। यथा तृणानि शय्यात्वेन रूप्यन्ते तथा वल्कलं परिधानत्वेनेति वल्कलं विशेष्यं प्रधानमिति तस्य तृणानीतिवत्पूर्वप्रयोग उचितः।

३७. आमरणान्तमित्येवाव्ययीभावे साधु। समासान्तरं चेह न शक्यं समाश्रयितुम्। आमरणान्तं मरणावधिभाव एषामस्तीत्यामरणान्ता इति मत्वर्थीयेऽर्श आदित्वादचि कथंचित् समाधेयम्।

३८. पत्त्रत्रितयं पलाशो इत्येवं वक्तव्यम्। पत्त्राणां त्रितयमिति पत्त्रत्रितयमिति षष्ठीसमासः। न चायं बहुव्रीहिः, पत्त्राणां त्रितयं यत्रास्ति स इति, व्यधिकरणत्वात्। **अनेकमन्यपदार्थे** इत्यनेकमिति प्रथमान्तम्। तेन प्रथमान्तानामेव बहुव्रीहिः। क्वचिदेवागत्या व्यधिकरणबहुव्रीहेः समाश्रयः।

३९. प्राण्यङ्गत्वाच्चञ्चुचरणैरिति द्वन्द्वनिर्देशो न युक्तः। चञ्चुचरणेनेत्येकवद्भावेन वक्तव्यम्। अवश्यं समाधेयमिति चेत् चञ्चुसहिताश्चरणा चञ्चुचरणा इति मध्यमपदलोपी समास आश्रेयः।

४०. आबालवृद्धं लोका इत्येवं वक्तव्यम्। बालाश्च वृद्धाश्चेति बालवृद्धाः तानभिव्याप्य यथा स्यात्तथेत्यर्थः। आङ् मर्यादाभिविध्योरित्यव्ययीभावः। अव्ययीभावश्चेति नपुंसकत्वम्।

४१. चतुः पञ्चशतं वा रोगिणस्तत्रानुदिनं प्राप्नुवन्ति, इष्टं चोपचारं विन्दन्ति।
४२. सत्यं परिच्छेत्तुमसाध्ययशसो रामादयो भुवः परिवृढाः।
४३. ततः सहसा बिल्वबृहत्फलेन पतता भग्नमस्य खल्वाटस्य शिरः।
४४. मर्कटस्य सुरापानं तस्य वृश्चिकदंशनम्।
४५. पतन्त्येनेके जलधेरिवोर्मयः (किराते)।
४६. आलोकयामास हरिर्महीधरानधिश्रयन्तीर्गजताः[1] परश्शताः (शिशु० १२।५०)

---

४१. चत्वारि शतानि पञ्च शतानि वेति वक्तव्यम्। संख्या समानाधिकरणेन न समस्यत इत्यसकृदुक्तमधस्तात्। चतुष्पञ्चानि शतानीत्येवमपि दुर्लभं वक्तुम्। संख्येये वर्तमाना संख्या संख्यया समस्यते बहुव्रीहिश्च समासो भवति। प्रस्तुते तु चत्वारि वा पञ्च वेति संख्या संख्येये न वर्तते नाम।
४२. परिच्छेत्तुमसाध्ययशस इत्यपार्थकः शब्दसन्दोहः। असङ्गतेः। असाध्ययशस इत्यसमर्थ समासः। अपरिच्छेद्ययशस इत्येव निर्दुष्टोन्यासः।
४३. बृहद्बिम्वफलेनेति व्यवहारानुगो न्यासः। पूर्वं सम्बन्धाख्यायकः षष्ठी समासः, पश्चाद् विशेषणसमास इत्येव क्रम इत्यसकृदुक्तम्।
४४. **कर्मणि चे**त्युभयप्राप्तौ या कर्मणि षष्ठी सा न समस्यत इति सुरायाः पानमित्येव साधु। **केचिदविशेषेण विभाषामिच्छन्ती**ति वचनानान्मर्कटस्येति षष्ठी साध्वी। तस्य वृश्चिकेन दंशनमित्यसमास एव वरम्।
४५. उत्तरपदार्थप्रधानो हि नञ् समासः। एकत्व बुद्ध्या भ्रम इत्यतोऽयमेकशब्द एकस्मिन्नित्येकवचनमेव युज्यते। ज्ञापकं च—अनेकमन्यपदार्थे इति। तथा च माघः—**करेणुः प्रस्थितोऽनेको रेणुर्घण्टाः सहस्रश** (शिशु० १९।३६) इति। **रक्षितस्त्वाह**—अध्यारोपितबहुत्वाद् बहुवचनम्। यथा द्युद्भ्यो लुङि वृद्भ्यः स्यसनोरिति। अनेकश्चानेकश्चानेकश्चेत्यनेके इत्येकशेषाद्वेति **शब्दकौस्तुभे** स्थितम्।
४६. शतात्परा इति परश्शताः। पञ्चमीति योगविभागात् समासः। पारस्करादित्वात्सुट्। लोकाश्रयत्वाल्लिङ्गस्येति न परवल्लिङ्गता

---

१. गजानां समूहः गजता। समूहे तल्।

४७. अत्र देशे निरान्तरयां वृद्ध्यां सत्यां विंशतिवर्षादूर्ध्वं सर्वं साधू भविष्यति ।

४८. स नक्तंदिन (दिवानिशं) परिश्राम्यति न च सिध्यति । बाढं मन्दो [1]भविष्यति ।

४९. क्व वा वेदानां शास्त्राणां वा तुलाधिरूढ पुस्तकम् ?

५०. अद्यतनभूतादिकतिचिल्लकारैर्ज्ञातैर्न खलु वाङ्मयं ज्ञातं भवति ।

५१. गते समरे परस्सहस्राः प्रवीराः सर्वदार्थं वीरशय्यामध्यशेरत ।

५२. कतिपयेऽस्य चान्येषां कवीनां च श्लोकाः सनामग्राहमिहोदाह्रियन्ते ।

५३. पिब मौकुन्द पदमकरन्दम् ।

---

**स्त्रियाः पुंवद्** इति योगविभागात्परशब्दे पुंवत्त्वम् । **उपसर्जनं पूर्वमिति** पञ्चम्यन्तस्य शतशब्दस्य पूर्वनिपातः प्राप्तः । राजदन्तादित्वान्न भवति ।

४७. विंशतेर्वर्षेभ्य इत्येवं व्यासेन वक्तव्यम् । उक्तोऽत्र हेतुः ।

४८. नक्तमित्यधिकरणवृत्ति । तेन नक्तंदिनमिति द्वन्द्वो नोपपद्यते । एवमेव दिवानिशमिति समासोऽप्यनुपपन्नः । नक्तन्दिवमिति तु साधु । **अचतुरविचतुरे**त्यादिना निपातनात् । अहोरात्रमिति वा वक्तव्यम् ।

४९. तुलाधिरूढमित्यसमर्थसमासः । तुलामधिरूढमित्येव शोभनम् ।

५०. अनद्यतनभूतादिकतिचिल्लकारैरिति दुश्लिष्टं पदकम्बकम् । **चिच्छब्दस्तावन्न क्वचिदपि समासमनुप्रविशन्दृष्टः** । अनद्यतनभूताद्यर्थे कतिभिश्चिल्लकारैरिति वक्तव्यम् । **सर्वत्र चिच्चनौ पृथक् पदे भवतः** ।

५१ सर्वदार्थमित्यपशब्दः । सर्वदेति तद्धितश्चासर्वविभक्तिरित्यव्ययम् अधिकरणवृत्ति । सर्वस्मिन्काल इति च तदर्थः । तस्यार्थशब्देन समासोनुपपन्नः । सर्वकालमिति वक्तव्यम् ।

५२. नामग्राहमिति **नाम्न्यादिशिग्रहोरिति** णमुलि रूपम् । उपपद समासः । तत्र सहशब्देन समासान्तरमनर्थकम् ।

५३. पदमकरन्दम् इत्यसमर्थसमासः । मुकुन्दस्येमे पदे मौकुन्दे । **पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः** ।

५४. भारतस्य प्रतिकोणं संस्कृतपाठशालाः प्रवर्त्यन्ताम् । अत्रैव लम्बते हितं प्रजानाम् ।
५५. द्व्यधिकेऽत्राशीतितमे ह्यध्याये वर्ण्यते तमः ।
५६. कीर्तनपरं गरुडध्वजस्य (मोह० ६।२५) ।
५७. के चिन्नूनं समधिकसुनासीरकीर्तिप्रभावाः । (मोह० २।१)
५८. निकाय्यान्तर्भूमौ समधिकसुधर्माधिकधना । (मोह० २।२२)

---

मुकुन्दपदमकरन्दमिति तु निरवद्यम् । मौकुन्दपदमकरन्दमित्यपि न श्रेयः । **समासवृत्त्यैव विवक्षितार्थस्य समर्पणात् तद्धितवृत्त्या नार्थः । एकत्र वृत्तिद्वयाङ्गीकारे गौरवात् ।**

५४ प्रतिकोणम् । कोणं कोणं प्रति प्रतिकोणमित्यव्ययीभावः । भारतस्येति षष्ठ्यन्तं विशेषणम् । तत्र समासगतेन कोणशब्देन विशेष्येण योगं चिकीर्षति । **सत्यस्मिन्विशेषणे समासो न, सति च समासे विशेषणयोगो नेति** कोणे कोणे इति **वक्तव्यम्** ।

५५. द्व्यधिकेऽशीतितमे इत्यनुपपन्नम् । द्व्यधिकस्याशीत्यान्वयायोगात् । द्व्यशीतितमे इति तु वक्तव्यम् ।

५६. कीर्तनपरमित्यसमर्थसमासः । **साकाङ्क्षमसमर्थं भवति** । **कीर्तनं परं प्रधानमस्य** तम् । कस्य कीर्तनम् । गरुडध्वजस्य । तेन कीर्तनार्थस्य गरुडध्वजार्थेन सामर्थ्यम् । कीर्तनं हि गरुडध्वजमाकाङ्क्षति इति नार्हति परशब्देन समासम् ।

५७. समधिकादिरपि दुर्घटः समासः । कीर्तिश्च प्रभावश्चेति कीर्तिप्रभावौ । द्वन्द्वः । सुनासीरस्य कीर्तिप्रभावौ इति सुनासीरकीर्तिप्रभावौ । द्वन्द्वगर्भः षष्ठीसमासः । तौ समधिकौ येषां ते समधिकसुनासीरकीर्तिप्रभावाः । परं नायं कवेरभिमतः । कविस्तु सुनासीरात् समधिककीर्तिप्रभावा इति विवक्षति । न चेममर्थं समासो वक्ति । तेनात्रार्थे दुर्घटोऽयं समासः । **अतिक्रान्तसुनासीरकीर्तिप्रभावाः, अतिशयितसुनासीरकीर्तिप्रभावा** इति वा, **विशेषितसुनासीरकीर्तिप्रभावा** इति वा बहुव्रीहिरास्थेयः । **अतिसुनासीरकीर्तिप्रभावा** इति वा प्रादिः श्रेयः ।

५८. समधिकसुधर्माधिकधनाः । **सर्वथाऽनर्थकं पदकदम्बकम्** । **सुधर्माधिकधना** इत्येव पर्याप्तमर्थवत् ।

५९. सुवर्णरेखातनु मुष्टिमध्या (मोह० ३।२४)।

---

५९. सुवर्णरेखा तनुमुष्टिमध्या (काचित्)। अत्र दुरुन्नयः कवेरभिप्रायः। **कविरयं लुप्तविभक्तिकानां पदानामानन्तर्येणोच्चारणमन्ते च पदत्वलाभाय सुप्करणं समसनं मन्यते**। सामर्थ्यं च न समाद्रियते। समर्थः पदविधिरिति शास्त्रं चावधीरयते। सुवर्णरेखाभिर्युक्तस्तनुर्मुष्टिमेयो मध्यो यस्याः सेऽत्यर्थविवक्षया पदानि यथा तथा संयुनक्ति न तु यथाविधि समस्यति।

## इति दुर्घटासमर्थसमासविवेचनम्।

## पूर्वनिपातपरनिपाताधिकारः पञ्चमः।

१. यो हि कृमिपक्षिमृगादीनि भूतानि समं पश्यति स धीरः।
२. ते नामासमर्था ये हिंसां बलोत्तमं विदुः।
३. शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद्वधः। तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते (मनु० ८।१०४)।
४. शूलपरशुशरचापभृता निर्यान्तु मे योधाः शत्रुनिबर्हणाय।

---

१. 'द्वन्द्वे घि' इति **अनेकप्राप्तावेकत्र नियमोऽनियमः शेषे** इति शास्त्राभ्यां कृमिपक्षिमृगादीनि कृमिमृगपक्ष्यादीनि इति चोभयं साधु। यदि मृगाणां पक्ष्याद्यपेक्षयाऽभ्यर्हितत्वमभिप्रेयते तदा मृगशब्देन पूर्वं निपतितव्यम्।

२. उत्तमबलमित्येव न्यासः साधुः। **सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरिति** समासः। उत्तमशब्द उपसर्जनमिति तस्य पूर्वनिपात उचितः।

३. वर्णानामानुपूर्व्येणेति वचनाद्विप्रक्षत्रविट्शूद्राणामित्येवं न्यासो युक्तः। **शूद्रादिक्रमेणाभिधानं वधस्यामङ्गलत्वादिति कुल्लूकभट्टः**।

४. **अल्पाच्तरमिति** शूलशब्दस्य पूर्वनिपातः परशोश्च परनिपातः। शेषेऽनियमः। **प्रहरणार्थेभ्यः परे निष्ठासप्तम्याविति** भृतशब्दस्य निष्ठान्तस्य परनिपातः। शूलादिधारिण इत्यर्थः॥

५. उद्यतासिर्व्यूढकङ्कटो[1] ऽभीतवद् यात्यरीन्योधः ।
६. मुहूर्तैकं तिष्ठ । अस्ति मया किञ्चिदात्ययिकं कार्यम् ।
७. भसित[2]शरीराः संमुद्रितश्रवणा[3] मृदुपलिप्तवदनविवराः केचित्-तापसलिङ्गिन आत्मानमेवातिसन्दधति[4] केवलम् ।
८. सर्वे मनुष्याः स्वलाभहानिपरिचिता इति न तत्र शास्त्रेणार्थिनो भवन्ति ।
९. स्वकठिनपरिश्रमस्य फलमवाप्नुहि सर्वं चायुरिह ।

---

५. प्रहरणार्थेभ्य इत्यस्युद्यत इति स्यात् । आहिताग्न्यादित्वाद्वा निष्ठायाः परनिपात इति पक्षे उद्यतासिरित्यपि साधु ।

६. **पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेने**ति समासे एकशब्दस्योपसर्जनसंज्ञायां पूर्वनिपाते एकमुहूर्तमिति साधु स्यात् । एकं मुहूर्तमिति व्यासेन वोच्यताम् ।

७. भसितं भस्मेत्यनर्थान्तरम् । शरीरे भसितं येषां ते शरीरभसिता इति वाच्याः स्युः । **सप्तमीविशेषणे बहुव्रीहावि**ति सप्तम्यन्तस्य पूर्वनिपातौचित्यात् । भसितोपलक्षितं भसितोपलिप्तं वा शरीरं येषां ते भसितशरीरा इत्येवं मध्यमपदलोपि समासाश्रयणे तु न दोष इति चेन्न । समानाधिकरणे तत्पुरुष एव लोपविधेः ।

८. **निष्ठे**ति बहुव्रीहौ निष्ठायाः पूर्वनिपातविधानात् परिचितस्व-लाभहानय इत्येवं न्यासः कार्यः ।

९. '**कालाः परिमाणिना**' इत्येकं वर्जयित्वा दुर्लभस्त्रिपदतत्पुरुष इति कठिनस्य स्वपरिश्रमस्य, कठिनस्य स्वस्य परिश्रमस्येति वा वक्तव्यम् । स्वशब्देन समासे सति पश्चात्कठिनेन समासान्तरे कठिनस्वपरिश्रम इति स्यादेव ।

## इति पूर्वनिपातादिविवेचनम् ।

---

१. दंशितः, वर्मितः । २. भसितं भस्म ३. श्रवणः कर्णः ४. प्रतारयन्ति ।

## पुंवद्भावाधिकारः षष्ठः ।

१. वाराणसेयीं प्रथमापरीक्षामुत्तीर्णो मे वत्सः, सम्प्रति मध्यमां तितीर्षति ।
२. तृतीयाप्रकृतिरिति नपुंसकपर्यायः ।
३. कश्चात्र शब्दो दृढभक्तिर्दृढाभक्तिरिति वा बहुव्रीहौ ?
४. याऽऽत्मानं दर्शनीयां मन्यते सा दर्शनीयमानिनीति वक्तव्या स्यादुत दर्शनीयामानिनीति सप्रमाणं ब्रूहि ।
५. नेष्टं पुरो द्वारवतीत्वमासीत् ।
६. नाहमन्यमना अस्मि । अनिर्वर्णनीयं मे परकलत्रम् ।

---

१. **स्त्रियाः पुंवद्भाषितपुंस्कादिति** पुंवद्भावे प्रथमपरीक्षामिति साधु ।

२. **तृतीया प्रकृतिः षण्ढः क्लीबः षण्डो नपुंसकमि**त्यमरे पाठः । मूलेऽसमासोक्तिः । समासे तु तृतीयप्रकृतिरित्येवेति **भानुजिदीक्षितः** । **न कोपधायाः** इति नेति योगविभागान्न पुंवद्भाव इति केचित् । क्षीरस्वाम्यपि मूलेऽसमासं मन्यते यदाह—**स्त्रीपुंसाभ्यां तृतीया प्रकृतिः । लिङ्गान्तरत्वा**दिति ।

३. भक्तिशब्दस्य प्रियादिषु पाठात्पूर्वपदस्य पुंवद्भावो दुर्घटः । तेन दृढाभक्तिरित्येव साधु । अथवा दृढमिति सामान्योपक्रमान्नपुंसकम् । तस्य भक्तिशब्देन समासे दृढभक्तिरिति साधु ।

४. अत्र स्त्रियाः पुंवद् इत्यनेनैव पुंवद्भावे दर्शनीयमानिनीत्येव साधु ।

५. आकडारसूत्रभाष्ये संज्ञाकृदन्ततद्धितान्तसमस्तसर्वनामसंख्यातिरिक्तः शब्दो गुणवचनशब्देनोक्तः । तेन **त्वतलोर्गुणवचनस्ये**त्यनेन पुंवद्भावो नेति नात्र कश्चिद्दोषः । द्वारवतीति तद्धितान्तम् । तद्धितान्तस्यागुणवचनत्वात् ।

६. अन्यस्यां मनोऽस्येत्यन्यमनाः । **सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव** इति टाबन्तस्यान्याशब्दस्य पुंवद्भावः ।

७. न ह्यैश्वरीसृष्टेः समुत्पादकाः परमाणवो भवितुमर्हन्ति ।
८. पश्य प्राचीदिशोऽलङ्कारभूत उदेति भगवान् विवस्वान् ।
९. शूद्रादयोगवः क्षत्ता चाण्डालश्चाधमो नृणाम् । वैश्यराजन्यविप्रासु जायन्ते वर्णसङ्कराः (मनु०१०।१२) ॥
१०. तामसीबुद्धिरसौ पृथग्जनोऽसकृत्प्रेर्यमाणोऽपि न सुकृते प्रवर्तते ।
११. अस्मिन्कर्मणि तस्याः कर्तृत्वं केनापह्नूयते ?
१२. ते हि भगवन्तो नैःस्पृह्यस्य पराकाष्ठां भेजिरे ।
१३. इमे मान्या व्यवस्थापिकासभायाः सभ्याः ।
१४. रसवतीसुरसरस्वतीधाराभिः को नेच्छेदात्मानमभिषेक्तुम् ?
१५. परपुरुषार्थब्रह्मज्ञानहेतुत्वादुपनिषदां पराविद्यात्वम् ।
१६. प्रेक्षावान् खलु पूर्वतरमेव दैवीसम्पत्सम्पादने प्रवर्तेत ।

---

७. **वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे** (६।३।३२) इति पुंवद्भावप्रतिषेधस्य पुंवत्कर्मधारयजातीयदेशीयेष्विति प्रतिषेधाद् ऐश्वरी सृष्टेरिति दुष्टम् । पुंवद्भावे सति ऐश्वरसृष्टेरिति भाव्यम् । ऐश्वर्याः सृष्टेरित्यसमासोक्तिस्तु भव्या ।
८. प्राचीदिश इत्यत्र पुंवद् कर्मधारयेत्यादिना पुंवत्त्वं दुर्वारम् । तेन प्राग्दिश इत्येव साधु ।
९. द्वन्द्वे न क्वचित्पुंवद्भावः शिष्टः शास्त्रेणेति वैश्या-राजन्या-विप्रास्वित्येवं साधूक्तं स्यादिति पाणिनीयाः ।
१०. तामसी बुद्धिरस्येति बहुव्रीहिः । वृद्धिनिमित्तस्य चेति पुंवद्भावप्रतिषेधः ।
११. कर्त्रीत्वमिति तु युज्यते । कृदन्तस्यागुणवचनत्वादित्युक्तमधस्तात् ।
१२. परकाष्ठामित्येव साधु । दुर्निवारः पुंवद्भाव इति परां काष्ठामिति व्यासेन वा वक्तव्यम् ।
१३. पुंवत्कर्मधारयेत्यादिना पुंवद्भावे व्यवस्थापकसभाया इत्येव साधु ।
१४. रसवत्सुरसरस्वतीत्याद्येव निर्दोषं पुंवद्भावस्य दुर्वारत्वात् ।
१५. परविद्यात्वमित्येव । आवश्यकः पुंवद्भावः ।
१६. दैवसम्पत्सम्पादन इत्येवं न्यसनीयम् । पुंवद्भावस्य दुष्परिहरत्वात् ।

१७. निरीक्ष्य मेने शरदः कृतार्थता ।

---

१७. शरत्कृतार्था, तस्या भावे तलि कृतार्थाशब्दस्य समस्तस्य गुणवचनत्वाभावात्पुंवद्भावो न प्राप्नोतीति शङ्क्यते । सत्यम् । सामान्ये नपुंसकमिति कृतार्थमित्यस्मात्तल् बोध्यः ।

## इति पुंवद्भावविवेचनम् ।

## पूर्वपदह्रस्वदीर्घाधिकारः सप्तमः ।

१. अभिरूपः[1] सुकुमारः स कुमारः नरींमन्य इत्यहो अस्य विभ्रमेण जितम् ।
२. न गङ्गदत्तः पुनरेति कूपम् ।
३. इयं हि ब्राह्मणीब्रुवा[2] । अस्या ब्राह्मणीत्वे मानं मृग्यम् ।
४. वैदेहिबन्धोर्हृदयं विदद्रे (रघु० १४।३३)
५. मर्माविध इमा उक्तयः किमपि क्षिण्वन्ति हृदयं श्रोतॄणाम् ।
६ अस्तीह च्छात्राणामेको विश्वामित्रो येन विष्णुमित्रस्य सतीर्थ्यस्य पुस्तकं चोरितम् ।

---

१. **खित्यनव्ययस्येति** पूर्वपदह्रस्वत्वे नारिंमन्य इत्येव साधु ।
२. **ङ्यापोः संज्ञाच्छन्दसोर्बहुलमिति** संज्ञाया गङ्गाया ह्रस्वत्वे गङ्गदत्त इति साधु । बहुलग्रहणात्क्वचिद् गङ्गादत्त इत्यपि ।
३. **घरूपकल्पेत्यादिना** ङ्यन्तस्यानेकाचो ब्राह्मणीशब्दस्य ह्रस्वत्वे ब्राह्मणिब्रुवेत्येव शब्दः ।
४. **ङ्यापोः संज्ञेति** ह्रस्वत्वे वैदेहिबन्धोरिति साधु ।
५. **नहिवृतिवृषिव्यधीत्यादिना** पूर्वपदस्य दीर्घत्वे मर्माविध इत्येव साधु । मर्माणि विध्यन्तीति मर्माविधः ।
६. **मित्रे चर्षाविति** ऋषावभिधेये विश्वशब्दस्य पूर्वपदस्य दीर्घो भवति । अयं तु कश्चिन्माणवकोऽनृषिः, तेन विश्वमित्र इत्येव साधु ।

---

१. मनोज्ञः । २. आत्मानं ब्राह्मणीं ब्रूते । ब्रुवः पचाद्यच् । गुणाभावो निपातनात् ।

७. प्रतिकाशशब्दं निभसंकाशादिभिः सदृशवचनैः समानार्थं पठन्ति कोषकाराः ।

८. केचिच्छस्त्राशस्त्रि युध्यन्ते, परे मुष्टिमुष्टि, इतरे बाहूबाहु ।

९. कियदस्य परीमाणमिति विमाय जानीहि ।

१०. द्वाःस्थे द्वारि प्रतीहारः प्रतीहार्यप्यनन्तरे ।

---

७. **इकः काशे** (६।३।१२३) इत्यनेन दीर्घे प्रतीकाश इति साधु ।

८. **तत्र तेनेदमिति** बहुव्रीहौ इचि कर्मव्यतिहारे **अन्येषामपि दृश्यत** इति पूर्वपदस्य दीर्घे शस्त्राशस्त्रि, मुष्टीमुष्टि, बाहूबाहवि इति रूपाणि साधूनि । तत्र बाहूबाहवीत्यत्र **इच् कर्मव्यतिहारे** इति इचि सत्योर्गुण इति गुणे 'बाहूबाहवि इति शुद्धं रूपम् ।

९. परीमाणमित्यत्र ल्युडन्ते शब्दे पूर्वपदस्योपसर्गस्य दीर्घो दुर्लभः ।

१० **उपसर्गे घञ्यमनुष्ये बहुलमि**त्युपसर्गस्य दीर्घत्वे प्रतीहार इति साधु । क्वचित् प्रतिहार इत्यपि, बहुलग्रहणात् ।

**इति पूर्वपदह्रस्वादिविवेचनम् ।**

## समासनपुंसकताधिकारोऽष्टमः ।

१. आसन्नां कामपि महतीं व्यापदमाशङ्क्यानाहूता एवामात्या नृपितसभामगमन्परामर्शाय ।

२. इक्षुच्छायानिषादिन्यः शालिगोप्यो जगुर्यशः । (रघु० ४।२०।)

---

१. **सभा राजाऽमनुष्यपूर्वे**ति समासस्य नपुंसकत्वे नृपतिसभम् इति साधु ।

२. **छाया बाहुल्ये** इतिच्छायान्तस्तत्पुरुषो नपुंसकं भवतीति इक्षुच्छायनिषादिन्य इत्येव साधु । अत्र सूत्रे पूर्वपदार्थस्य बाहुल्यमभिप्रेयते । एकत्वे तु नपुंसकत्वं न । इक्षोश्छाया इक्षुच्छाया । सा चानर्हा निषदनस्येति इक्षुच्छायानिषादिन्य इत्यनुपपन्नार्थकः प्रयोगः ।

३. इयं भाषान्तरोक्ता विषयग्रहणसरणिर्न मदुपज्ञा ।
४. इदं स्त्रीसभं याति ।
५. सान्द्रासु तरुच्छायास्वपस्किरन्ते श्वान आश्रयार्थिनः ।
६. नेत्रश्रवणनासासु नित्यं तैलं निषिञ्चेत् ।
७. गृहिणो हि नित्यमुलूखलमुसलेन व्यवहारः । शास्त्रकाराश्च तं सूनात्वेन रूपयन्ति ।
८. काकोलूकानां वैरं काकोलूकिकेत्युच्यते तद्धितवृत्त्या ।
९. पिपतिषतीयं गृहस्थूणा, श्च्योतति च च्छदिः ।
१०. शशोर्णं शशलोमनीत्यमरः पपाठ । तत्राद्यस्य पदस्य साधुत्वमुपपादय ।

---

३. उपज्ञोपक्रमं तदाद्याचिख्यासायामिति (२।४।२१) नपुंसकत्वे मदुपज्ञमित्येव साधु । सत्यपि तदादित्वे उपज्ञोपक्रमयोः प्राथम्ये, यदि तस्य विवक्षा नास्ति, तदा समासस्य नपुंसकता नेति न दोषः । भवति च सतोऽप्यविवक्षा यथाऽनुदरा कन्यका । **विनोपदेशमाद्यं ज्ञानमुपज्ञा** ।

४. **अशाला चे**त्यनेन सभान्तस्य तत्पुरुषस्य नपुंसकतायां **ह्रस्वो नपुंसके प्रातिपदिकस्येति** ह्रस्वत्वे स्त्रीसभमिति निरवद्यम् ।

५. सान्द्रे तरुच्छाये इति वक्तव्यम् । अत्र पूर्वपदार्थस्य बाहुल्यमिति **छाया बाहुल्ये** इत्यनेन प्रवर्तितव्यम् । नित्योऽयं विधिः । **विभाषा सेनासुराच्छायाशालानिशानाम्** (२।४।२५) इति विकल्पस्य नायं विषयः ।

६. **द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्** इति समाहारद्वन्द्वे **स नपुंसकमि**ति नेत्रश्रवणनासम् इति वक्तव्यम् ।

७. **न दधिपय आदीनीति** एकवद्भावनिषेधे उलूखलमुसले इति द्विवचनं प्रयोज्यम् ।

८. **येषां च विरोधः शाश्वतिक** इत्येकवद्भावे स नपुंसकमिति **नपुंस**कत्वे च काकोलूकस्येत्येव साधु ।

९. गृहस्थूणमित्येव । असमासे तु गृहस्य स्थूणा स्थूणमिति वा स्यात् ।

१०. **गृहशशाभ्यां क्लीबे** इति लिङ्गानुशासनमेतस्य साधुत्वे मानम् ।

११. राजहंसास्तु चञ्चुचरणैर्लोहितैः सिता इत्यमरः । तत्र दोषं विभावय ।
१२. नृपतिसभामगमत्स वेपमानः (कीचकवधे) ।

---

११. चञ्चुभिः सहिताश्चरणाश्चञ्चुचरणा इति शाकपार्थिवादित्वं कल्पनीयम् । अन्यथा प्राण्यङ्गत्वाद् एकवद्भावे चञ्चुचरणेनेति स्यात् ।
१२. अत्र केचित् ना पतिर्यस्यां सभायामिति बहुव्रीहौ कृते पश्चात्कर्मधारयः । तत्पुरुषोऽनञ्कर्मधारयः(२।४।१९) इत्युक्तेर्न क्लीबत्वमित्याहुः । **सोऽयं वैयाकरणस्य साधुत्वसिषाधयिषायां नातिप्रशस्योऽभिनिवेशः** ।

## इति समासनपुंसकताविवेचनम् ।

## समासाश्रयविधिपरिशेषाधिकारो नवमः ।

१. उदकपेषं पिनष्टि चन्दनं भालं चर्चयिष्यामीति ।
२. काश्मीरेष्वच्छोदकं नाम सरः श्रूयते प्रशस्यते च वैमल्येन शैत्येन चापाम् ।
३. स्वस्त्यस्तु ते पुत्रि ! सहभर्तृकायै । अलमिदानीं रुदितेन ।
४. मातृपित्र्यध्यापका हि बालस्य संस्कारकाः ।

---

१. **पेषंवासवाहनधिषु च**ेत्युदकस्योदभावे उदपेषमित्येव साधु ।
२. **उदकस्योदः संज्ञायाम्** (६।३।५७) । उत्तरपदस्य चेति वक्तव्यमित्युदकशब्दस्योदभावेऽच्छोदमित्येव साधु ।
३. **प्रकृत्याशिषीति** सहशब्दः प्रकृत्या स्यादिति सहभर्तृकायै इति साधु ।
४. मातृपित्र्यध्यापका इति साधु । न ह्ययमृकारान्तानां द्वन्द्वः । अध्यापकशब्दोऽत्रोत्तरपदम् । स च ऋकारान्तो न । तेनानङः प्रसङ्गो न ।

५. अष्टत्रिंशतं मुद्रा राजतीरपेक्षे नातोऽधिका इति तातपादा आवेदिताः ।
६. अष्टगवेन शकटेन याति गोपो विभवो मे प्रथतामिति ।
७. गायकानामेको हरिश्चन्द्राभिधो मुखं व्यादाय दशनान् प्रदर्श्य चक्षुषी च विस्फार्य तथोच्चैर्गायति यथा बाला अट्टहासं हसन्ति वृद्धाश्चान्तर्लीनम् ।
८. स्वस्ति तेऽस्तु सवत्साय च सहलाय च ।
९. सहपुत्त्राऽपि भारं वहति गर्दभी वराकी ।
१०. इदं कामधुरं जलम्, इदं च कालवरणम् । यतरत्ते रोचते तदादत्स्व ।
११. महद्बलेनापि न शक्यं कार्यमेतन्निष्पादयितुम् ।

---

५. **द्व्यष्टनः संख्यायामबहुव्रीह्यशीत्योरि**ति आत्वेऽष्टात्रिंशतमित्येव साधु ।
६. **गवि च युक्त** इति वक्तव्यादष्टन आत्वेऽष्टागवेनेति वक्तव्यम् ।
७. **प्रस्कण्वहरिश्चन्द्रावृषी** (६।१।१५३) इत्यृषावभिधेये सुडागमो निपातितः । तेनानृषौ हरिचन्द्र इत्येव । **भट्टारहरिचन्द्रस्य गद्यबन्धो नृपायत इति हर्षचरिते ।**
८. **प्रकृत्याशिषी**त्यत्र **अगोवत्सहलेष्वि**त्युक्तम् । तेन सवत्साय सहलायेत्यत्र प्रकृतिभावो नावश्यकः । **वोपसर्जनस्येति** पाक्षिकः सहस्य सादेशः ।
९. सहपुत्त्रापि विद्यमानपुत्त्रापीत्यर्थः । भारवहने पुत्त्राणां गर्दभ्या सह तुल्ययोगो न । तेन **तेन सहेति तुल्ययोगे**' **इत्यनेन समासो न । अपि तु अनेकमन्यपदार्थे इत्यनेन** । वोपसर्जनस्येत्यतुल्ययोगेपि विकल्पेन सहस्य सः । सहपुत्त्रा सपुत्त्रेति रूपद्वयम् ।
१० **ईषदर्थे** (६।३।१०५) इति कोः कादेशः । तेन कामधुरं कालवणमित्युभयं साधु ।
११. **आन्महतः समानाधिकरणजातीययो**रित्यात्वे महाबलेनेति वक्तव्यम् ।

१२. उक्षा स द्यावापृथिवी बिभर्तीत्यृच्युक्षाशब्दः कमर्थमाहेति जिज्ञास्यम् ।

१३. प्रत्येकस्य प्रश्नस्य समा अङ्काः । ये केऽपि षट् कामतः प्रतिवक्तव्याः ।

१४. प्रतिकशप्रतिष्कशशब्दयोर्विशेषं ब्रूहि यदि वेत्थ ।

१५. कदाचारा अपि पुरुषाः कदाचिच्चातुर्यवशात्सदाचारा इति प्रसिध्यन्ति ।

१६. वेदान्तेषु यं द्यावाक्षामे व्याप्य स्थितं पूरुषमाहुः स निःश्रेयसाय नोऽस्तु ।

१७. इदं त्र्यृचं सूक्तं इदं सप्तर्चम् ।

१८. इमां समस्यामवश्यावश्यं पूरयेयुश्छात्राश्छन्दोविचित्यां च स्वस्य वैशारदीं प्रमाणयेयुः ।

---

१२. उक्षशब्द इत्येव साधु । सुब्लुकि सर्वनामस्थानं परं नास्तीत्युपधादीर्घस्याप्रसक्तिः ।

१३. प्रत्येकमित्येव साधु । एकमेकं प्रतीति प्रत्येकम् । वीप्सायामव्ययीभावः । **नाव्ययीभावादतोऽम्त्वपञ्चम्या** इति सुप अमादेशे प्रत्येकमिति रूपम् । प्रश्नशब्दोऽपि षष्ठ्यां बहुवचने पठनीयः ।

१४. प्रतिगतः कशां प्रतिकशः प्रादिसमासः । प्रतिकशोऽश्वो यः कशां न गणयति । **प्रतिष्कशश्च कशेः** (६।१।१६२) इति प्रतिपूर्वस्य कशेः पचाद्यजन्तस्य सुट् निपात्यते षत्वं च । प्रतिष्कशः पुरोयायी सहायो वोच्यते । तथा च श्रीरामायणे प्रयोगः । **त्वं मे भव प्रतिष्कश** इति ।

१५. **कोः कत्तत्पुरुषेऽचीति** तत्पुरुषेऽयं विधिः । प्रकृते च बहुव्रीहिः । तेन दुर्लभोऽत्र कदादेशः । कुत्सिताचारा इत्येवं वक्तव्यम् ।

१६. **दिवो द्यावेति** सूत्रेण देवताद्वन्द्वे 'द्यावा' इत्यादेशो विधीयते । तेन नात्र कश्चिद्दोषः ।

१७. तिस्र ऋचो यस्मिंस्तत्तृचम् । **ऋचि त्रेरुत्तरपदादिलोपश्छन्दसीति** वक्तव्यात् त्रेः सम्प्रसारणमुत्तरपदादिलोपश्च । अयं च च्छन्दसि विधिरिति लोके त्र्यृचमित्यपि साधु ।

१८. **लुम्पेदवश्यमः कृत्ये** इत्यस्याप्राप्तेरवश्यमवश्यमित्येव साधु ।

१९. वेधा द्वेधा भ्रमि चक्रे कान्तासु कनकेषु च । तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृतिः ॥
२०. पञ्चापविभाजने मुहम्मदानुगा हैन्दवीषु स्त्रीष्वप्यसच्चेष्टन्तेति महल्लज्जास्पदम् ।
२१. अमूदक्षा[1] विरला एव जगति जायन्ते परदोषेषु वाचंयमाः ।
२२. सायाह्णि बहिर्नगराद्भ्रमणं शरीराय हितं भवति ।
२३. श्वश्रूश्वशुरौ पुत्रेण पुत्त्रवध्वा च कलहायेते ।
२४. शिलामूर्तिरियं रामकान्ताप्रतीका[2] । सैवेयं तत्प्रतिकृतिर्वेति सन्दिहते लोकाः ।
२५. अद्य शुक्लाष्टमीति महद्भूतश्चन्द्रमाः ।
२६. ग्रीवाकुक्षिललाटे च नित्यं स्वेदः प्रशस्यते ।

---

१९. **नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्** इत्येकशेषस्य दुर्वारत्वात्तेष्विति वक्तव्यम् । ताश्च तानि चेति तानि, तेषु ।
२०. महल्लज्जास्पदम् इत्यत्र लज्जा महत्त्वेन विशिष्यते, नास्पदम् । तेन समास एवायम् । समासे च **आन्महत** इति विधिर्दुर्वारः । तेन महालज्जास्पदमित्येव साधु ।
२१. **दृक्षे चेति** वार्तिकेनादस आत्वे सवर्णदीर्घे चामूदृक्षा इत्यवदातम् ।
२२. **संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां** ङाविति सायाह्णि सायाहनि सायाह्ने इति त्रैरूप्यं भवति । **विभाषा ङिश्योरित्य**ल्लोपविकल्पात् प्रथमं रूपद्वयम् । अह्नोऽह्न एतेभ्यः (५।४।८८) इत्यनेन तृतीयम् ।
२३. **श्वशुरः श्वश्र्वा** 'इत्येकशेष श्वशुरावित्येव वक्तव्यम् ।
२४. रामकान्तेत्यादिस्तत्पुरुषः । प्रतिबिम्बवचनः प्रतीकशब्दो नपुंसकम् । तस्माद्रामकान्ताप्रतीकमित्येव निर्दोषं स्यात् ।
२५. महदर्थस्य गौणत्वाद् आन्महत इत्यात्वं न । तेन महद्भूत इति साधु ।
२६. ग्रीवेत्यादि चरकवचनम् । प्राण्यङ्गत्वादेकवद्भावे प्राप्ते **नासिकास्तनयोर्ध्माधेटो**रिति निर्देशादनित्यताज्ञापनाद् यथास्थितं साधु ।

---

१. तादृशाः । २.प्रतीकं प्रतिकृतिः ।

२७. गर्भधारणपोषाभ्यां मता माता गरीयसी ।
२८. मध्यन्दिनार्कसंतप्तः सरसीं गाहते गजः ।
२९. सन्देहद्वापरावेतौ पर्यायवचनौ परिपठति कोषकारः । तत्र पूर्वपद आत्वं केनेति वेत्थ चेच्छब्दविदसि नूनम् ।
३० देवासुरैरमृतमम्बुनिधिर्ममन्थे ।
३१. मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम् (मेघ० १।१०) ।
३२ किमिदं मदर्थमन्यदर्थं वा । अन्यार्थमेवैतत् ।
३३. सर्वाणि श्रेयांस्यधिजग्मुषस्ते कामन्याशिषं प्रयुञ्जीमहि ।
३४. इदं बृहत्तन्त्रम् इदं च कातन्त्रम् ।
३५. अयं मे समानगोत्रः । यथाऽहं वासिष्ठस्तथाऽयम् ।

---

२७. अल्पाच्तरस्य पूर्वनिपाते प्राप्ते **लक्षणहेत्वोः क्रियायाः** (३।२।१२६) इत्यनित्यत्वज्ञापनाद् गर्भधारणपोषाभ्यामित्यपि साधु ।

२८. मध्यन्दिनमित्येकदेशिसमासः । मध्यं दिनस्येति मध्यन्दिनम् । **सर्वोऽप्येकदेशः कालेन समस्यते** । संख्यविसायेति ज्ञापकस्य सामान्यापेक्षत्वात् । मध्यस्य मकारान्तता निपातनात् ।

२९. द्वौ पक्षौ परौ यत्र स द्वापरः । पृषोदरादित्वादात्वम् ।

३०. देवासुराणां कादाचित्को विरोध इति **येषां च विरोधः शाश्वतिक** इत्यनेनैकवद्भावो नेति सर्वं सुस्थम् ।

३१. मन्दं मन्दमिति प्रकारे गुणवचनस्येति द्विरुक्तिः । कर्मधारयवदुत्तरेष्विति सुब्लुकि मन्दमन्दमिति स्यात् । अत्र कथंचिद्वीप्सायामेव द्विरुक्तिर्निर्वाह्येति **मल्लिनाथः** । मन्दं मन्दमित्यत्राप्रकारार्थे द्विर्भाव इति च काव्यालङ्कारसूत्रवृत्तौ **वामनः** ।

३२. **अर्थे विभाषेति** विभाषा दुगागमेऽन्यदर्थमन्यार्थमिति चोभयं साधु ।

३३. अषष्ठ्यतृतीयास्थस्यान्यस्य दुग् इत्यादिना दुगागमेऽन्यदाशिषमिति ब्रूयात् । अन्याऽऽशीः, अन्यदाशीः, ताम् ।

३४. **ईषदर्थे** इति कोः कादेशे साधु ।

३५. **ज्योतिर्जनपदरात्रिनाभिनामगोत्रे**त्यादिना समानस्य सभावे सगोत्र इत्येव साधु ।

३६. निस्त्रिंशानि वर्षाणि चैत्रस्य, मैत्रस्य तूपविंशानि ।
३७. कति वा युष्माकं पञ्चविंशवर्षाधिकवयस्काः ?
३८. मद्दादर्पोऽवरङ्गजीवो महामहतीं चमूमादाय दक्षिणापथे गोल-कुण्डाख्यं राज्यमवास्कन्दत् ।
३९. कुशलवौ मनेराज्ञया श्रीरामायणं स्थानस्थानतो लयतालसहकारेणागासिष्टाम् ।
४०. पितृपादानुध्यातः पुत्रो यथेष्टान् कामानवाप्नोति यथेष्टां च सिद्धिं लभते ।
४१. उदशून्यत्वादूषरा इमा भूमयः प्रायेण ।
४२. एवं सर्वोऽपि दम्पतीवर्गः संस्कृतप्रियः संस्कृतज्ञश्चेत्स्यात् सर्वं साधू स्यात् ।

---

३६. निर्गतानि त्रिंशत इति निस्त्रिंशानि । **संख्यायास्तत्पुरुषस्येति** वक्तव्याद् डचि समासान्ते टिलोपे च निस्त्रिंशानीति साधु । **संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये** इत्यनेन समासे बहुव्रीहौ संख्येये **डजबहुगणादिति** डचि **ति विंशतेर्डिति** इति तिशब्दस्य लोपे उपविंशानीति साधु । विंशतेः समीपे यानि वर्तन्ते तानि उपविंशानि ।
३७. अधिकपञ्चविंश वर्षवयस्का इत्येवं न्यासो निर्दोषः स्यात् । त्रिपदो बहुव्रीहिः । अधिकानि पञ्चविंशतेः (वर्षेभ्यः) यानि वर्तन्ते तान्यधिकपञ्चविंशानि ।
३८. महामहतीमित्यस्य स्थाने महत्या महतीमित्येव निर्दुष्टं वचः । सामनाधिकरण्यविरहाद् आन्महत इति विधेरप्रसङ्गः ।
३९. स्थाने स्थाने इति वक्तव्यम् । वीप्सायां च समासविधायकं नेति व्यासेनैव स्थेयम् । **प्रकारे गुणवचनस्येति** गुणवचनस्य प्रकारार्थे द्विरुक्तिः । तेन **कर्मधारयवदुत्तरेष्विति** विधेरप्यप्रसङ्गः ।
४०. यथेष्टानित्यपशब्दः यथेष्टामिति च । **यथाऽसादृश्य** इत्यनेनाव्ययीभावे यथेष्टमित्येव साधु ।
४१. उदकस्योदभावोऽत्र दुर्लभ इत्युदकशून्यत्वादिति वक्तव्यम् ।
४२. जाया च पतिश्चेति दम्पती । जायाश्च पतयश्चेति दम्पतयः । तेषां दम्पतीनां वर्ग इति दम्पतिवर्गः । अत्र पतिशब्द उत्तरपदे अन्तर्वर्तिन्या विभक्तेर्लुकि पूर्वसवर्णदीर्घाप्रसङ्ग इति न परोक्षं प्रेक्षावताम् ।

४३. जागरेण यापिताशेषरात्रस्य मे क्लान्तानि गात्राणि । घूर्णेते नेत्रे । अपह्रियेऽहं निद्रया ।
४४. इतरामितरां भोजयत इमे ब्राह्मण्यौ ।
४५. श्रियमात्मानं ब्राह्मणकुलं मन्यत इति श्रिमन्यमिति भाष्ये स्थितम् । तत्र साधुत्वं चिन्तय ।
४६. यत्र सपक्षविपक्षसद्भावेनोभयव्याप्तिभ्यां साध्यं साध्यते तदन्वयव्यतिरेकि (अनुमानम्) ।
४७. शूद्रविट्क्षत्रविप्राणां यत्रर्तोक्तौ भवेद्वधः (मनु० ८।१०४) ।
४८. सौम्य ! त्वर्यताम् । इध्माबर्हिरानीयताम् ।

---

४३. यापिताशेषरात्रेर्मे इति वक्तव्यम् । अत्राच्समासान्तस्य दौर्लभ्याद् यापिताशेषरात्रस्येत्येतत् स्खलनमेवेति वृद्धाः ।
४४. **कर्मव्यतिहारे सर्वनाम्नो द्वे भवत** इति वक्तव्यमिति द्विरुक्तिः । **समासवच्च बहुलम्** इति समासवद्भावः । इतरशब्दस्य तु नित्यः समासवद्भावः । **स्त्रीनपुंसकयोरुत्तरपदस्य चाम्भावो वक्तव्य** इति वार्तिकपक्षे आम् । तेनामि सति इतरेतराम् इति स्यात् । तदभावे इतरेतरम् इति । **सर्वनाम्नो वृत्तिमात्रे पुंवद्भाव** इति पूर्वोत्तरपदयोर्द्वयोरपि पुंवद्भावः । **कर्मधारयवदुत्तरेषु** (८।१।११) **इति वार्तिकेषु न सम्बध्यते** ।
४५. **इच एकाचोऽम्प्रत्ययवच्चेत्यनेन** खिदन्त उत्तरपदेऽमागमेऽमि इव कार्ये इयङि च सति श्रियंमन्यमिति स्यात् । अत्रेदं भाष्यकारस्य दर्शनं भाति—अत्रविषये परित्यक्तस्वलिङ्गः क्लीबः श्रीशब्दो ब्राह्मणकुले वर्तते यथा पृष्ठादयः शब्दाः पुंयोगात् स्त्रियां वर्तन्ते पृष्ठी गणिकेति, तत्र ह्रस्वो नपुंसके इति ह्रस्वः । मुम् तु न भवति, अपवादेन अमा बाधात् । अम् प्रत्ययस्य **स्वमोर्नपुंसकादिति** लुक् । लुकि सति तत्संनियोगशिष्टोऽमागमोपि नेति ।
४६. उभयव्याप्त्येति वक्तव्यम् । द्वित्वं तूभयशब्देनैवोक्तमिति न तदभिधायिका विभक्तिरपेक्ष्यते । समासे **उभादुदात्तो नित्यमयच्** ।
४७. वधस्यामङ्गलत्वादभ्यर्हितस्य ब्राह्मणादेः पूर्वनिपातो नेति कुल्लूकभट्टः ।
४८. **न दधिपय आदीनि** इत्यनेनैकवद्भावस्य निषेधाद् इध्माबर्हिषी इत्येव साधु । **अन्येषामपि दृश्यत** इति पूर्वपदस्य दीर्घः ।

४९. महापादपप्रच्छाये नान्यः पादपः प्ररोहति ।
५०. एक एको लगुडप्रहारो लघुरपि मनस्विनं तं भृशमतुदत् ।
५१. कददाः स्म मा नः (भा० पु० ५।५।२८) ।
५२. कथं 'विनासा हतबान्धवा' (भट्टि० ) ।

---

४९. प्रकृष्टा छाया प्रच्छाया । प्रादिस्तत्पुरुषः । महापादपप्रच्छायायामिति वक्तव्यम् । अत्र च्छायाशब्दस्याभावाद् वैकल्पिकं नपुंसकत्वमपि न **संभवति** ।

५०. एकशब्दस्य द्विरुक्तौ एकं बहुव्रीहिवद् इति बहुव्रीहिवद्भावात्सुब्लुकि एकैक इति स्यात् ।

५१. कद् अदाः इत्यत्र कोः कद्भावः केनापि शास्त्रेण नानुशिष्टः । कदिति स्वतन्त्रा प्रकृतिर्भागवतकारेणोत्प्रेक्षिता स्यात् । **सर्वतन्त्रस्वतन्त्रोऽयं कविः** ।

५२. वेर्ग्रो वक्तव्य इति वार्तिकेन विग्रेति युज्यते । स्थितस्य गतिश्चिन्तनीयेति चेत् । विगता नासिका विनासिका । प्रादिः । पश्चाट्टायां **पद्दन्नोमास्** — इति सूत्रेण नसादेशे विनसेति तृतीयान्तं साधु । इत्थम्भूतलक्षणे तृतीया विज्ञेया ।

## इति समासाश्रयविधिविवेचनम् ।

## समासोक्त्यधिकारो दशमः ।

१. सत्याग्रहो नाम परकृतकदर्थनायाः[1] सहर्षं सहनम् नान्यपीडनं च भवतीति तज्ज्ञाः ।
२. शास्त्राणि नाभ्यस्यतः स्नातकस्य महापातकं जायत इति मन्वादयः ।

---

१. नान्यपीडनमित्यत्र नञ्शब्दः प्रसज्यप्रतिषेधे नेष्यते, वाक्यभेदप्रसङ्गात् । तेन पर्युदासेऽर्थे वर्तमानस्य तस्य समासेऽनन्यपीडनमिति भवितव्यम् ।

२. शास्त्राण्यनभ्यस्यत इत्येव निर्दुष्टो न्यासः । यथास्थितम् असमासे तु नञो 'जायत' इति क्रियया योगः स्याद् विवक्षितं च विपरीयात् ।

---

१. कदर्थना उपपीडनम् ।

३. अद्यासन्नानि सहस्रपञ्चतयस्य वर्षाणि महाभारतस्य प्रणीतस्य ।
४. शिरसा तुरुष्कत्राणं न धारयित्वा को नामार्हो राजजीविकामवाप्तुम् ।
५. हन्त धिगिममतटं मे प्रपातम्[1] ।
६. नृणां पुङ्गवा इमे कस्य न नमस्याः ?
७. भिन्नभिन्नविषयाणां ग्रन्थाः साभियोगमध्येयाः प्रज्ञानानि चोपचेयानि ।
८. साधु पयसः पानं देवदत्तस्य ।

---

३. आसन्नपञ्चसहस्राणीति न्यास एव शोभनः । समासोक्तिर्वरम् ।
४. नञ्समासेनाऽधारयित्वेति तु युज्यते । अन्यथाऽस्तिनाऽध्याहृतया क्रियया योगः स्यात् । अनिष्टार्थश्च प्रसज्येत ।
५. अतटो भृगुर्भवति । प्रपातोऽपि । प्रकृते तु प्रपतनं प्रपात इति क्रियाशब्दः । तेन अतटात् प्रपातमिति साधु स्यात् । अथवाऽविद्यमानतटमिति शुद्धयौगिकत्वमङ्गीकृत्य प्रपातविशेषणमभ्युपेयम् ।
६. स्युरुत्तरपदे व्याघ्र पुंगवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ॥ इत्यमरादुत्तरपद एवामी श्रेष्ठार्थस्य वाचकाः । तेन नृपुंगवा इति वक्तव्यम् । श्रीरामायणे त्वनेकत्र स्वातन्त्र्येण प्रयोगः । तद्यथा प्लवंगमानामृषभेण युद्धे (६।५६।०१) इत्यादि ।
७. भिन्ना विषया येषां ते भिन्नविषया ग्रन्थाः । बहुव्रीहिरेवात्रेष्टार्थस्य समर्पको न तु कर्मधारयः । (वीप्साया वृत्तावन्तर्भावाद् द्विरुक्तिर्न) ।
८. कर्मणि येन शरीरसंस्पर्शादिति नित्यसमासो न । इदं तु शरीरसुखस्याविवक्षायां रोगाद्यभिभूतो यदाऽशक्नुवन्नेव साधु पिबति तदा द्रष्टव्यम् ।

## इति समासोक्तिविवेचनम् ।

---

१. प्रपतनम् ।

## व्यासोक्त्यधिकार एकादश। ।

१. स्वकीयसमाजपत्तनविश्वेषां चाभ्युदयं कामयन्ते सन्त: ।
२. पुराकल्पे मनुष्याणां सहस्रवर्षायुरप्यासीदिति केचित् पौराणिका: ।
३. मनोहरनापित आहूयतां वपत्वस्य बालस्य शिरोरुहानिति ।
४. स्वार्थं रिरक्षिषन्न परार्थं हन्यादिति सर्वलोकसम्मतो न्याय: ।
५. आचार्यो हि च्छात्रस्य सुप्तभावनां प्रबुद्धां चिकीर्षति ।
६. ग्रामवसतिर्दीनैकतां प्राप्त: सत्याग्रहव्रतो जन: सततमुन्नयेदात्मानम् ।
७. पाद्यार्घ्याचमनीयं त्रिविधं जलं निवेदयेद् गृहागताय ।

---

१. स्वस्य समाजस्य च पत्तनस्य च विश्वस्य चाप्यभ्युदयं कामयन्ते सन्त इत्येवं न्यसनीयम् । सर्वादिगणे पाठाद् विश्वशब्दस्य सर्वनाम-संज्ञा । **विश्वशब्द: सर्वपर्यायवचन: साक्षाज्जगद्वचनो न, तात्पर्यतस्तु जगति वर्तते** । द्वन्द्वे च सर्वनामसंज्ञानिषेधाद् विश्वेषामिति प्रामादिकम् ।
२. आयु: सहस्रं वर्षाण्यासीदित्येवं व्यासेन वक्तव्यम् । संज्ञायामेव संख्या समानाधिकरणेन समस्यत इति नियमात् ।
३. मनोहरो नाम नापित इत्येवं व्यासोक्तिरेव साध्वी । विशेषणं विशेष्येण बहुलमित्यत्र बहुलग्रहणादत्र समानाधिकरणसमासो न । अर्जुन: कार्तवीर्य: शिंशपा वृक्ष इतिवत् ।
४. सम्मतशब्द इष्टापरपर्याय: । **मतिबुद्धिपूजार्थेभ्यश्चेति** वर्तमानेऽत्र क्त: । **क्तेन च पूजायामिति** षष्ठीसमासनिषेधात् सर्वलोकस्य सम्मत इति वाच्यम् ।
५. समासे सुप्तार्थो गुणीभूत इत्युद्भूततायै व्यासेन वक्तव्यम् । सुप्तां भावनामिति ।
६. दीनै: सहैकतामिति पृथक् पदत्वमाश्रयणीयम् । अविहितश्चायं सहार्थे तृतीयया समास: शास्त्रेणेति नादरणीय: ।
७. प्रत्येकं प्राधान्यख्यापनाय पाद्यम् अर्घ्यमाचमनीयमिति पृथक्त्वमाश्रयणीयम् । तथैव त्रैविध्यं जलस्याभिव्यक्तं भवति । विशेषणसमासे त्वेकस्य विशेषणत्वेऽपरस्य विशेष्यत्वं स्यात्, त्रैविध्यं च विहतं स्यात् ।

८. प्रमीत[1] पतिपत्नीको स्त्रीपुंसौ नियोक्तव्याविति केचित् ।

९. यदभिमुखं पश्यति गोस्वामी तदीयं भाग्योदयं निश्चितमवैति श्रद्धाजडो जनः ।

१०. क्वचित्काणो भवेत्साधुः क्वचित् खल्वाटनिर्धनः ।

११. साम्प्रतं लब्धप्रचारमतानि प्रायशो विरोधमुपजनयन्ति जनतायाम् ।

१२. प्रच्छन्नपापिनो ये स्युः कृतघ्ना दुष्टचारिणः । नरकेषु च पच्यन्ते यावदाभूतसम्प्लवम्[2] ॥

१३. एतदेवान्तरं प्राचीननवीनपरिपाट्योः ।

---

८. प्रमीतपतिपत्नीकाविति प्रत्येकं स्त्रीपुंसाभ्यामभिसम्बध्यते । तेनार्थासङ्गतिः स्फुटा । पतिश्च पत्नी चेति पतिपत्न्यौ । प्रमीते पतिपत्न्यौ ययोः तौ प्रमीतपतिपत्नीकौ । स्त्रीपुंसौ । स्त्री च पुमांश्च । नहि स्त्री प्रमीतपतिपत्नीका भवति न वा पुमान् प्रमीतपतिपत्नीको भवतीत्युभयत्र विशेषणानुपपत्तिः । तेन प्रमीतपतिका स्त्री प्रमीतपत्नीकश्च पुमान् इत्येवं व्यासेन वक्तव्यम् ।

९. यस्याभिमुखमिति पृथक्पदत्वेन वक्तव्यम् । नहि तदीयमित्येतद्गतस्तच्छब्दः समासेऽन्तर्गतं यच्छब्दं परामृशेत् । **सर्वनाम्नां प्रधानपरामर्शित्वात् ।**

१०. खल्वाटो निर्धनः क्वचिद् इत्येवं वाक्यविन्यासः कार्यः । निर्धनो विधेयम् ।

११. लब्धप्रचाराणि मतानीत्येवं पृथक्त्वेन प्रयोज्यम् ।

१२. यावदाभूतसंप्लवमित्यस्य स्थाने यावद् भूतसम्प्लवमिति आभूतसंप्लवमिति वा वक्तव्यम् । **आङाऽव्ययीभावे यावता नार्थः, सति च यावति समासेन नार्थः** । यावद्योगे ततोऽन्यत्रापि दृश्यत इति द्वितीयाविधेः ।

१३. प्राचीनाया नवीनायाश्च परिपाट्या इति विग्रहेणोक्ते प्राचीननवीनयोः प्राधान्यं परिस्फुरति । तदेव चाभिप्रैति वक्ता ।

---

१. प्रमीतौ मृतौ । मीङ् हिंसायां दिवादिरकर्मकः, ततो निष्ठा ।

२. भूतसम्प्लवः प्रलयः ।

१४. अशक्येयं शिबिका[1] शतपुरुषैरपि वोढुम् ।
१५. वात्सल्यातिशयलालिताङ्गयष्टिकतनय-यमसदनातिथिभवने पिता शुचो वशमगात्, चिरं च प्रामुह्यत् ।
१६. एवं वचनोपन्यासः परचक्षुर्धूलिनिक्षेप इव भवति ।
१७. अस्यैकदिनपूर्वं सोऽयं ग्रन्थः पूर्त्तिमगात् ।
१८ देव ! अशरणोऽहं ते चरणशरणमापन्नः । पाहि माम् ।

---

१४. **दिक्संख्ये संज्ञायामिति** संख्यावचनस्य समानाधिकरणेन सुबन्तेन संज्ञायामेव समासो विधीयते । तेनान्यत्र समासोऽवैधः । तस्माच्छतेन पुरुषैरिति वक्तव्यम् ।

१५. वात्सल्यातिशयलालिताङ्गयष्टिकस्य तनयस्य यमसदनस्यातिथीभवने इत्येवं वक्तव्यम् । विशेषणं हि परार्थत्वादुपकारकं गौणं भवति । समासे चोत्तरपदेन संसृष्टं सन्नितरां तथेति केवलं वाक्ये पृथक्छ्रूयमाणं किञ्चिदपरतन्त्रं भवतीति तथा प्रयोग एषणीयः । अतिथीभवन इत्यत्राभूततद्भावे च्विरपेक्ष्यत इति च्वौ सति **च्वौ च** (७।४।२६) इति दीर्घः । अतिथीभवन इत्यत्र सम्पद्यतेः कर्तरि च्विः । अनतिथेरतिथेर्भवनम् ।

१६. परचक्षुषो धूलिनिक्षेप इत्येवं वाक्यं निर्मेयम् । सप्तमीसमासस्य दौर्लभ्यात् । सप्तमोति योगविभागात्समास इति तु शिष्टप्रयोगसमर्थनायागतिकस्य गतिः ।

१७. एकदिनपूर्वमिति सर्वथा दुर्घटोऽयं समासः । एकदिनं पूर्वं यस्मिन् कर्मणि तद्यथा तथेति विग्रहे तु नार्थो विवक्षितः स्फुटति । यत्सत्यं प्रचरद्भाषाच्छायैषा भवति, न तु संस्कृतम् । **संस्कृतेऽयमर्थो भङ्ग्यन्तरेणोच्यते । इत एकाहे, अस्मात्पूर्वस्मिन्दिने इति वा भङ्ग्यन्तरम् ।**

१८. अहं ते चरणौ शरणमापन्न इत्येवं व्यासेन वक्तव्यम् । कर्मधारयसमासे तु शरणचरणाविति स्यात् । विशेषणस्य पूर्वनिपातनात् । मयूरव्यंसकादित्वाद्वा समाधेयम् । चरणावेव शरणमिति चरणशरणम् । तथाऽप्यसमर्थसमासोऽयं भवति । चरणार्थो हि युष्मदर्थेनाभिसम्बद्ध इति सापेक्षः । गत्यन्तरं च नास्तीति चरणौ शरणमित्येव ब्रूयात् ।

---

१. शिबिका याप्ययानं स्यात् ।

१९. संस्कृताधीतिनां[1] कृते बहु कर्तव्यमवशिष्यते शासितृवर्गस्य ।
२०. अज्ञानमेघावृतवेदभानौ चार्वाकादय उद्बभूवुः ।
२१. कृष्णेनानेन कर्मणा स पितुरपि कलुषवदनं चकार ।
२२. योऽभिवादितविप्रस्तु नाशिषं सम्प्रयच्छति......... ।
२३. सैव नक्षत्रमाला स्यात् सप्तविंशतिमौक्तिकैः । (अमरे)
२४. आसुरं कुलमनादरणीयं लीलया भवजलं तरणीयम् ।
२५. यथा भृगोरवपतितो म्रियते तथा प्रासादपतितोऽपि । को विशेषः ।

---

१९. संस्कृतेऽधीतिनामित्येवात्र साधु । अधीतमेभिरित्यधीतिनः । **क्तस्येन्विषयस्य कर्मण्युपसंख्यानमिति** संस्कृते इत्यत्र सप्तमी । तस्याः समासो दुर्लभ ऋते योगविभागात् । स चागतिकगतिरित्यसकृदवोचाम ।

२०. अज्ञानमेघेनावृते वेदभानावित्येवं व्यासेन वक्तव्यम् । वेदभानावज्ञानमेघेनावृते सतीत्यर्थः । यथास्थिते तु समासार्थो न परिस्फुटः । अज्ञानमेघावृतत्वं विधातुमिच्छामः । विधेयं च न समस्यते । **विशेषणत्वे पुनर्भावलक्षणसप्तमीत्वं न प्रतीतिमेति** ।

२१. वदनं कलुषं चकारेत्येवं विग्रहेण वक्तव्यम् । कलुषमिति विधेयम् । समानाधिकरणसमासे तु प्रागेव कालुष्यविशिष्टं पितुर्वदनमिति पुत्रेण तत्र किं चक्रे ।

२२. यो विप्रोऽभिवादितः (सन्) इत्येवं वक्तव्यम् । उक्तोऽसकृद्धेतुः ।

२३. **दिक्संख्ये संज्ञायामिति** नियमेन संज्ञायामेव संख्या समानाधिकरणेन सुबन्तेन समस्यते । तेन सप्तविंशत्या मौक्तिकैरिति व्यासोक्तिः साध्वी ।

२४. अनादरणीयम् इति प्रतिषेधार्थकेन नञा समासो न युक्तः । नादरणीयमित्येवं व्यासेन वक्तव्यम् ।

२५. **अपेतापोढमुक्तपतितापत्रस्तैरल्पशः** (२।१।३८) इत्यनेन अपेतादिभिरल्पा पञ्चमी समस्यते न सर्वा । तेन प्रासादात्पतित इत्यत्र समासो नेति काशिका ।

## इति व्यासोक्तिविवेचनम् ।

---

१. अधीतमेभिरित्यधीतिनः । इष्टादिभ्यश्चेति इनिः ।

## समासान्ताधिकारो द्वादशः ।

१ व्यूढोरा[१] वृषस्कन्ध उग्रम्पश्यः स राजन्यः कस्य भयं न जनयति ।

२. सुराजान[२] इमे देशा यत्र राजहंसो राज्यं शास्ति ।

३. यः सखायं किंसखायं च विविङ्क्ते स सुखं समश्नुते ।

४. नवप्रसूतगावो धेनव उच्यन्ते ।

५. अनर्थ एष वाक्यव्रातः । अलमस्य प्रतिपत्तौ यत्नेन ।

६. अद्य सुप्रातं यच्चिरस्याकाङ्क्षितदर्शनो देवो दृष्टः ।

७. यो दिवारात्रं स्वपिति तस्य का सिद्धिः संभाव्यतेऽधन्यस्य ।

८. नातन्त्रीर्विद्यते वीणा नाचक्रो विद्यते रथः । (श्रीरामायणे)

..........................................

१. **'उरःप्रभृतिभ्यः कप्'** इति नित्ये कपि समासान्ते व्युढोरस्क इत्येव साधु ।

२. शोभनो राजाऽत्रेति सुराजानः । **राजाहः-सखिभ्यष्टच्** इति तु तत्पुरुषसमास एव विधिः ।

३. **किमः क्षेपे** इति समासान्तनिषेधात् किंसखायमिति साधु । कुत्सितः सखा किंसखा ।

४. **गोरतद्धितलुकि** इति टचि नव्यप्रसूतगव्य इत्येव साधु ।

५. **अर्थान्नञ** इति गणसूत्रेण कपि समासान्तेऽनर्थक इत्येव भवति । अनर्थ इति तु तत्पुरुषेऽनवद्यम् ।

६. **सुप्रातसुश्वसुदिवे**त्यादिना सुप्रातमिति बहुव्रीहौ निपातितम् । शोभनं प्रातरस्य । तेन तत्पुरुषे दुःसमाधानम् ।

७. दिवारात्रमिनि दुष्टो न्यासः । **अहः सर्वैकदेशे**त्यादिसूत्रे संख्याव्यया-देरित्यनुवर्तते, तेनाच्समासान्ते सेत्स्यतीति भ्रमः, तत्पुरुषे तद्-विधेः । अहनि पूर्वपदे द्वन्द्वेप्यच्समासान्ते अहोरात्र इति निर्दिष्टम् ।

८. **नाडीतन्त्र्योः स्वाङ्गे** इति स्वाङ्गादन्यत्र **नद्यृतश्चेति** विहितः कब्दुर्वारः । तेनातन्त्रीका वीणेति पाणिनीयाः ।

---

१. व्यूढं विस्तीर्णमुरो यस्य । २. शोभना राजानो यत्र ।

९. वापीकूपतटाकादिभिरलङ्कृता सुपथीयं नगरी किमपि रामणीयकं धत्ते ।
१०. अयं किंगौः, अयं च सद्गवः, जरन्नपि[1] यो वहत्यनोदितः[2] ।
११. एकार्थके इमे ऋक्साम्नी इति न न विदितमल्पश्रुतस्यापि ।
१२. किमित्यवमूर्धः[3] शेषे ? उत शिरोर्तिस्तेऽस्ति ?
१३. अनेकप्रकटितपरिपाटीनटीनर्तकानां वेषलीलेयं ललिता मनो हरति प्रेक्षकाणाम् ।
१४. इह कतिपयाहोवासः शरीरं तवोपस्करिष्यते[4] ।
१५. प्रसन्नललिता सुमाधुरीयं वाग्धोरणी[5] कस्य मुदे न ?

---

९. सुपथी नगरी । शोभनाः पन्थानोऽस्यामिति विग्रहः । **ऋक्पूरब्धूःपथामानक्ष** इत्यकारः समासान्तो न भवति । **न पूजनादिति** (५।४।६९) तन्निषेधात् । नान्तत्वान्ङीपि भस्य टेर्लोपे सुपथीति साधु । ननु **इनः स्त्रियामिति** विहितः कप् कुतो न । न पूजनादिति निषेधः स्यादिति मा स्म शङ्किष्ठाः, षचः प्राचीनानामेव स निषेधः । कप् प्रत्ययश्चायं तदुत्तरः । **तस्मात्समासान्तविधेरनित्यत्वादिति कथंचित्समाधेयम्** ।

१०. किमः क्षेप इति समासान्तनिषेधात्किंगौरिति साधु । कुत्सितो गौः किंगौः । संश्चासौ गौश्चेति सद्गवः । **गोरतद्धितलुकीति टच्** ।

११. **अचतुरविचतुरसुचतुरे**त्यादिनाऽचतुरादयोऽजन्ता निपात्यन्ते । तेन ऋक्सामे इत्येव साधु ।

१२. समासान्ताप्रसङ्गादवमूर्धा इति वक्तव्यम् । **द्वित्रिभ्यां** परस्य मूर्ध्नः षविधिः ।

१३. प्रकटितानेकपरिपाटीकानां नटीनर्तकानामित्येवं न्यासो निर्दोषः । **नद्यृतश्चेति कप्** । **निष्ठेति** बहुव्रहौ निष्ठान्तस्य पूर्वनिपातः ।

१४. **राजाहःसखिभ्यष्टच्** इति टचि कतिपयाहवास इत्येव न्याय्यम् । कतिपयाहान् वास इति कतिपयाहवास इत्**अत्यन्तसंयोगे चेति** द्वितीयासमासः ।

१५. शोभना माधुरी यस्याः सा सुमाधुरीका । **नद्यृतश्चेति** कप् ।

---

१. वृद्धः । २. अप्रेरितः ३. अवनतो मूर्धाऽस्य । ४. गुणमाधास्यति ।
५. वाक् प्रवाहः ।

१६. अहो अन्धतमः प्रविष्टाः स्मः । नेह हस्तस्पर्शादिनापि किंचित्प्रज्ञायते ।

१७. सुगन्धिरयमापणः क्षणमत्रैव तिष्ठामः ।

१८. अयं पथिप्रज्ञ[1] इति पथप्रदर्शको नो भवितुमर्हति ।

१९. पञ्चषड्दिवसान्मयि[2] वस्तुमर्हसि । ततः स्वान्गृहान् गमिष्यसि ।

२०. वाङ्मनसोरगोचरो भगवतो महिमा । तथा हि श्रुतिः—'एतावानस्य महिमाऽतो ज्यायांश्च पूरुष इति ।

२१. आह्वय सुग्रीव वालिनं भ्रातृगन्धिनम् । (श्रीरामायणे)

२२. कल्याणी खलु पूर्वोत्थायिनो जघन्यसंवेशिनो[3]ऽस्यान्तेवासिनोऽहोरात्रिचर्या ।

२३. अन्तर्लोमाऽयं पटः स्पर्शे मृदुः ।

---

१६. **अवसमन्धेभ्यस्तमसः** इत्यन्धतमसमिति तु युक्तम् ।

१७. शोभना गन्धा (द्रव्याणि) अत्रेति सुगन्धः (आपणः) । **गन्धस्येदुत्पूतिसुसुरभिभ्यः** (५।४।१३५) इतीत्वं तु गन्धस्यैकान्तत्व एव भवति । एकान्त एकदेश इव अविभागेन लक्ष्यमाण इत्यर्थ इति **दीक्षितः** । तेन सुगन्धि पुष्पं सलिलं च । सुगन्धिर्वायुः ।

१८. पथिप्रदर्शक इत्येव साधु । **ऋक्पूरब्धूःपथामि**त्यसमासान्तः समासस्यान्तावयवो विधीयते । पूर्वपदस्य पथिन्शब्दस्य तु न ।

१९. पञ्च वा षड् वेति पञ्चषाः । तान् पञ्चषान् **संख्ययाऽव्ययासन्ने**त्यादिना समासः । **बहुव्रीहौ संख्येये डजबहुगणात्** इति डचि पञ्चषा इति रूपं निष्पद्यते ।

२०. वाक् च मनश्चेति वाङ्मनसे, तयोः वाङ्मनसयोः । **अचतुरविचतुरेत्यादिना**ऽजन्तत्वनिपातनात् ।

२१. भ्रातृत्वमल्पमत्रेति भ्रातृगन्धिः । **अल्पाख्यायामि**तीकारः समासान्तः स्यादिति पाणिनीयाः ।

२२. अहश्च रात्रिश्चेत्यहोरात्रः । **अहःसर्वैकदेशे**त्यादिनाऽचसमासान्तेन भाव्यम् । **रात्राह्नाहाः पुंसी**ति समाहारद्वन्द्वस्यापि पुंस्त्वम् । अहोरात्रचर्येत्येवं वक्तव्यम् ।

२३. **अन्तर्बहिर्भ्यां च लोम्नः** (५।४।११७) इत्यपि समासान्तेऽन्तर्लोम

---

१. पन्थानं प्रजानातीति । २. मदन्तिके । ३. पश्चाच्छायिनः ।

२४. रामेण ह्येकेन चतुर्दश सहस्राणि भीमकर्मणां रक्षसां हतानि खरदूषणत्रिमूर्धानश्च ।
२५. इयं च साधारणमेधसामपि न न विदितं सारल्यं सत्तमो नय इति ।
२६. यदि प्रत्यहं पात्रसंमार्गो न स्यात्तर्हि पात्रेषु पूतिगन्धिर्जायेत ।
२७. शोभनगन्धिना प्रातस्तनेन समीरेण यथा सन्तृप्यतीन्द्रियग्रामो न तथार्थान्तरेण
२८. यावदिदं शरीरं स्वस्थमरुजमपरीतं च जरया तावन्निः श्रेयसि प्रयतेत सुधीः ।

---

२४. **द्वित्रिभ्यां ष मूर्ध्नः** इति षप्रत्यये टिलोपे खरदूषणत्रिमूर्धा इति भवितव्यम् । **द्वित्रिभ्यां पाद्दन्मूर्धसु** बहुव्रीहौ (३।२।१९७) इति स्वरसूत्रे मूर्धसु इति निर्देशात्समासान्तोऽनित्यः । **अन्यथा** प्रक्रमाभेदाय मूर्धेष्वित्येव **वदेत्** ।

२५. नित्यमसिच् प्रजामेधयोरित्यसिच् समासान्तो नञ्दुःसुपूर्वादेव मेधाशब्दाद् भवति नान्यपूर्वात्, तेन साधारणमेधसामिति प्रामादिकम् । अस्वरितत्वादेव अन्यतरस्यां ग्रहणाननुवृत्तिसिद्धौ नित्यग्रहणमन्यतो विधानार्थम् । तेनाल्पमेधस इति सिध्यतीति **वृत्तिकारः** । तथा च भारते प्रयोगः '**श्रोत्रियस्येव ते राजन्मन्दकस्याल्पमेधसः अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी** (वन० ३५।१९) ।। सम्प्रति समुपलभ्यमाने महाभारते तु मन्दकस्याविपश्चित इति पाठो दृश्यते । साधारणमेधसाम् इत्यस्य साधुत्वे तु शिष्टानुग्रहो नास्तीति नेदं साधुत्वमवगाहते ।

२६. बहुव्रीहौ समास एव उदादिभ्यो गन्धस्येकारोऽन्तावयवो विधीयते, न तु तत्पुरुषे । तेन प्रकृते पूतिगन्ध इत्येव । पूतिश्चासौ गन्धश्चेति विग्रहः ।

२७. **गन्धस्येदुत्पूतीत्यादिसूत्रे** शोभनशब्दस्यादर्शनात्ततः परस्य गन्धस्येकारोऽन्तावयवो न शक्नोति भवितुम् । तेन शोभनगन्ध इत्येव **प्रयोगार्हम्** ।

२८. निश्चितं श्रेयो निःश्रेयसम् । इदं च **अचतुरविचतुरेत्यादिना**-च्प्रत्ययान्तं निपातितम् । तेन सप्तम्यां निश्रेयसे इति स्यात् ।

२९. अद्यत्वे यश्चिरं जीवति स वर्षशतं जीवति । इदमेव च पुरुषायुरित्यामनन्त्यृषयः ।
३०. ईश्वर एकं विपथेन नयत्यपरं सुपथेन। तेन भगवतोऽनुग्रहः सततमेषणीयः ।
३१. नहि रात्रिन्दिवा प्रयस्यन्तः समे[1] समं समृद्धमनोरथा भवन्ति ।
३२. मध्येदिवं तपति दिनकरः । महांश्च नः क्लमः । तेनेहैव विश्राम्यामः ।
३३. यत्र समेधितमेधसोऽपि विमुह्यन्ति तत्र हता दुर्मेधस इति किमु वाच्यम् ।
३४. आगामिवर्तमानाहर्युक्तायां निशि पक्षिणी । (अमरे)
३५. वरतनु ! सम्प्रवदन्ति कुक्कुटाः ।

---

२९. **अचतुरविचतुरे**त्यादिना सूत्रेण पुरुषायुषमित्यच्प्रत्ययान्तं निपातितम्, तेन पुरुषायुरित्यसाध्वेव ।
३०. **न पूजनात्** (२।४।६९) इति समासान्तनिषेधे 'सुपथा' इति तृतीयान्तं स्यात् ।
३१. **अचतुरविचतुरे**त्यादिना रात्रिन्दिवमित्यच्समासान्तान्तं निपातितम्, । तेन रात्रिन्दिवेति प्रमादः ।
३२ अदन्तोऽपि दिवशब्दोऽस्ति दिवौकसि दर्शनात् । तेन षष्ठचन्तेन सह **पारेमध्ये षष्ठ्या वेति** समासः । **नाव्ययीभावादतोऽम्त्वपञ्चम्याः** इति सुपोऽमादेशे मध्येदिवमिति साधु ।
३३. समेधितमेधा इत्येव बहुवचने रूपम् । असिचोऽप्रसङ्गात् ।
३४. आगामिवर्तमाने अहनी युक्ते अस्यामिति बहुव्रीहिः । तेन तत्पुरुषस्य **राजाहःसखिभ्यष्टच्** इति विधीयामनष्टच्समासान्तो नेह प्रसज्यते ।
३५. वरतनु इत्यत्र यदि नदीसंज्ञकस्तनूशब्दः तदा **अम्बार्थनद्योर्ह्रस्वः** इति ह्रस्वः । **नद्यृतश्चेति** कप् च प्राप्नोति । परत्वात् कप् स्यात् । ह्रस्वोकारान्ते तनुशब्दे च **ह्रस्वस्य गुण** इति गुणे 'वरतनो' इति स्यात् । संज्ञापूर्वकविधेरनित्यत्वान्न भवतीति यथास्थितं साधु ।

---

१. सर्वे ।

३६. धावकादिभिः कविभिः स्वराज्ञो नाम्ना प्रकाशितानि काव्यानीति प्रथते प्रवादः ।

३७. सर्वाहं यत्किमपि गृहकृत्यं सम्पादयन्ती सा परं निर्वृणोति ।

३८. गणरात्रं निशा बह्व्यः । (अमरे १।३।६)

३९. पुरा किल सुकर्मार्जितशान्तिसम्पदं भारतं वर्षं लोकस्य स्पृहणीयं बभूव ।

४०. धर्मस्यैकपादेवाऽवशिष्टः कलावित्याहुः ।

४१. अज्ञानान्धतमसि दन्द्रम्यमाणा[1] न जातु परं पुमर्थं साधयन्ति ।

४२. इदानीमर्धरात्रिर्गतेति विरमामोऽध्ययनात् ।

४३. न गर्दभा वाजिधुरं वहन्ति ।

---

३६. स्वस्य राजा स्वराज तस्य स्वराजस्य इति भवितव्यम् । **राजाहःसखिभ्यष्टच्** ।

३७. अह्नोऽह्न एतेभ्य इति सर्वाह्णमिति युक्तम् । **अह्नोऽदन्तादिति** णत्वम् ।

३८. '**बहुगणवतुडति संख्या**' इति गणशब्दः संख्या । गणानां रात्रीणां समाहारो गणरात्रम् । **अहःसर्वैकदेश**ेत्यादिनाऽच्समासान्तः । सूत्रे पठितेन चेन पूर्वसूत्रादव्ययसङ्ख्ये अनुकृष्येते । **संख्यापूर्वं रात्रं क्लीबमिति** क्लीबता ।

३९. **शान्तिश्च सम्पच्चेति** समाहारे द्वन्द्वाच्चुदषहान्तात्समाहारे इति टचि शान्तिसम्पदमिति रूपम् । पश्चाद् बहुव्रीहिः । सुकर्मार्जितं शान्तिसम्पदं येन तत् । अहो नेह किञ्चिदनवदातम् ।

४०. **संख्यासुपूर्वस्य** पादशब्दस्य बहुव्रीहावन्तलोपो विधीयते । तेन प्रकृते एकपादः, एकः पाद इति वा वक्तव्यम् ।

४१. **अवसमन्धेभ्यस्तमस** इत्यचि समासान्तेऽज्ञानान्धतमसे इत्येव साधु ।

४२. **अर्ध**रात्रो गत इत्येवं न्यसनीयम् । **अहःसर्वैकदेश**ेत्यादिनाऽच् समासान्तः । **रात्राह्नाहाः पुंसीति** पुंस्त्वम् ।

४३. **ऋक्पूरब्धूः पथामानक्षे** इत्यकारे समासान्ते स्त्रियां टापि वाजिधुरामिति वक्तव्यम् ।

---

१. जङ्गम्यमानाः । बम्भ्रम्यमाणा इत्यर्थः ।

४४. एकपादा द्विपादाश्च नर्दन्तो युद्धकाङ्क्षिणः (हरि० १।४३।२५)।
४५. निःश्रेयस्कः पुरुष इत्यत्र (अच्प्रत्ययो) न भवति, (स हि निःश्रेयसे तत्पुरुषे निपातितः) (काशिका ५।४।७७)।
४६. वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः (भा० पु० १२।१३।१)।
४७. अयं प्रजाः पुत्रवत्पालयतीति सुराजा, अयं च तासु प्रमत्तः केवलं षष्ठांशभुगिति कुराजा।
४८. नगरवर्णनमपि सिद्धगवीनां कवीनां प्रतिभापरीक्षाया निकषोपलो गण्यते।
४९. प्रथमं विलीढमधवः पिबन्ति कटु भेषजम्।
५०. केचित्तत्तदर्थार्जनाय नक्तंदिवा यतन्ते न च लभन्ते।

---

४४. **संख्यासुपूर्वस्येति** पादान्तलोपः समासान्तो विहितः, स न कृत इति दोष इति पाणिनीयाः। एकपादो द्विपादश्चेत्युक्ते पाणिनीयशासनानुरोधः कृतः स्यात्।
४५. निःश्रेयस्कः (पुरुषः) इति बहुव्रीहौ न सिध्यति। ईयसश्च (५।४।१५६) इति कपो निषेधात्। **स्खलनधर्माणो मनुष्या इति वृत्तिकारेणापि स्खलितम्।**
४६. **द्वन्द्वाच्चुदषहान्तात्** समाहारे इति समाहारे टज्विधेरत्र टज् दुर्लभः। तेन साङ्गपदक्रमोपनिषद्भिरित्येव शास्त्रस्य सम्मतं रूपम्।
४७. शोभनो राजा सुराजा। **न पूजनादिति** समासान्तनिषेधः। कुत्सितो राजा कुराजः। **कुगतिप्रादय** इति समासः। **राजाहःसखिभ्यष्टच्** इति टच्।
४८. सिद्धा गावो वाचो येषां ते सिद्धगवः, तेषां सिद्धगूनाम्। **गोस्त्रियोरुपसर्जनस्ये**ति ह्रस्वः। **गोरतद्धितलुकी**ति गोशब्दान्तात्तत्पुरुषाट् टचं विधत्ते। तेन प्रकृते टचोऽप्रसङ्गः।
४९. मधुशब्दः उरःप्रभृतिषु पठितस्तेन **उरःप्रभृतिषु कप्** इत्यनेन नित्यः कब् इष्यते।
५०. 'नक्तं दिवा' इति चेदसमासो न कश्चिद् दोषः। समासे तु **अचतुरविचतुरे**त्यादिना सूत्रेणाच्प्रत्ययान्तं नक्तन्दिवम् इति निपातितम्।

५१. वाली हेमाब्जमाली गुणनिधिरिषुणा निर्मितो दक्षिणेर्मा ।

५२. वरदः करोतु सुप्रातमह्लामयं हि नायकः ।

५३. परमस्वधर्मः परमस्वधर्मेति च साधुनी शब्दरूपे । तत्र समासा-न्तसत्त्वासत्त्वयोर्हेतुं चेद् वेत्थ नूनं शाब्दिकोऽसि ।

५४. पशवश्च मृगाश्चैव व्यालाश्चोभयतोदतः (मनु० १।४३) ।

५५. सामध्वनावृग्यजुषी नाधीयीत कदाचन (मनु० ४।१२३) ।

---

५१. **दक्षिणेर्मा** इतीह लुब्धयोगेऽसत्यपि हिंसामात्रे प्रयुक्तम् । **दक्षिणे इर्मं व्रणो घातो** यस्य सः । तच्चिन्त्यम् ।

५२. **सुप्रातसुश्वे**त्यादिना सूत्रेण सुप्रातादयो बहुव्रीहिसमासा अच्प्रत्य-यान्ता निपात्यन्ते । शोभनं प्रातरस्येति सुप्रातः । प्रातः शब्द-स्याधिकरणप्रधानत्वात्सामानाधिकरण्याभावात्प्रातस्तनं **कर्म** प्रातःशब्देन लक्ष्यत इति **हरदत्तः** । तत्पुरुषे शोभनं प्रातरित्य**र्थे** तु सुप्रात इति न सिध्यति ।

५३. **स्व**श्चासौ धर्मश्चेति कर्मधारयः । पश्चाद् परमशब्देन बहुव्रीहिः । अत्र **स्वधर्म**शब्द उत्तरपदं न धर्मशब्दः, तेन समासान्तो न । परम-श्चासौ स्वश्चेति कर्मधारयपूर्वपदात्परमस्वशब्दात्परस्य धर्मशब्द-स्य तु स्यादेव । **बहुव्रीहिणा पूर्वपदाक्षेपे केवलादिति पूर्वपदविशे-षणमिति दीक्षितादयो नव्याः** । **केवलशब्देनैकं पदमुच्यतेऽखण्डं सखण्डं वा समस्तम्** । तेन **निवृत्तिधर्मा स्थानी भवति, अनुच्छित्ति-धर्मा वा अरेऽयमात्मे**त्यादिषु निवृत्तिधर्मा इत्यत्र, **अनुच्छित्ति-**धर्मा इत्यत्र चानिच् सिद्धो भवति । परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ तु न भवति । केवलात्पदाद्यो धर्मशब्दस्तदन्ता-दनिच्, न तु यः पदसमुदायादित्यर्थः ।

५४. **उभयतोदतः** इत्यस्योभयतोदन्ता इत्यर्थः । पद्दन्नोमास् इत्यनेन शास्त्रेण शसादिषु दन्तस्य ददादेशविधानादिहादेशो दुर्लभः । दन्तशब्दसमानार्थो दच्छब्दः प्रकृत्यन्तरमस्तीति **कुल्लूकः** ।

५५. अचतुरविचतुरेत्यादिना सूत्रेण ऋग्यजुषम् इत्यच्प्रत्ययान्तं निपा-तितम् । ऋक् च यजुश्चेति विग्रहः । **वाचि स्वतन्त्रा महर्षयः** ।

५६. कृष्णमुखी न मार्जारी द्विजिह्वा न च सर्पिणी । पञ्चभर्त्री न पाञ्चाली यो जानाति स पण्डितः ॥
५७. सौमित्रिश्च बद्धलक्ष्यः कर्णान्ताकृष्टमौर्विस्तिष्ठति प्रतिभयाकारः ।
५८. सरजसमकरन्दनिर्भरासु प्रसवविभूतिषु (शिशु० ७।४२) । सरजसमपहाय केतकीनाम् (किरात०) ।
५९. प्रियमधुरसनानि षट्पदाली मलिनयति स्म नीलबन्धनानि (कि० १०।२६) ।
६०. समरात्रिन्दिवे काले विषुवद् विषुवं च तत् (अमरे) ।
६१. आसीदेको वशितकरिणी गन्धिनामा गजेन्द्रः (मोह० २।१३) ।

---

५६. पञ्चभर्तृकेति तु युज्यते । नद्यृतश्चेति कपा समासान्तेन भवितव्यम् ।
५७. कर्णान्ताकृष्टमौर्विरिति दुष्यति । **परेण समासान्तेन कपा उपसर्जनह्रस्वत्वं बाध्यते** । सति च कपि उपसर्जनस्त्रीप्रत्ययान्तान्तस्य प्रातिपदिकस्याभावाद् ह्रस्वत्वाप्रसङ्गः । तेन कर्णान्ताकृष्टमौर्वीक इत्येव साधु ।
५८. अचतुरविचतुरेत्यादिना सूत्रेण सरजसमित्यच्समासान्तान्तं निपातितम् । साकल्येऽव्ययीभावोऽयमिति च वृत्त्यादिषु स्थितम् । कवयस्तु बहुव्रीहिमभिमत्य प्रयुञ्जते तदेषां निरङ्कुशत्वमात्रम् ।
५९. 'प्रियमधुः' इत्यस्य स्थाने प्रियमधुकेति साधु स्यात् । उरः प्रभृतिषु मधुशब्दः पठ्यते, तेन नित्येन कपा समासान्तेन भवितव्यम् ।
६०. रात्रौ च दिवा चेति रात्रिन्दिवम् । अचतुरविचतुरेत्यादिनाऽच्समासान्तान्तं निपात्यते । दिवा इति सप्तम्यर्थवृत्त्यव्ययम् । निपातनादेव समासः । समं रात्रिन्दिवं यत्र काले स कालः समरात्रिन्दिवः । **वृत्तौ प्रातिपदिकार्थमात्रता शब्दशक्तिस्वाभाव्यात्** । तेन समशब्देन सामानाधिकरण्योपपत्तिः ।
६१. वशितकरिणी गन्धिनामा गजेन्द्रः । अत्र वशितकरिणीरिति बहुव्रीहिराश्रितः । गजेन्द्र इत्यन्यपदार्थः । परं नैतद्रूपं सिध्यति । **नद्यृतश्चेति** कपा समासान्तेन भवितव्यम् । अनित्याः समासान्ता इति चेद् **गोस्त्रियोरुपसर्जनस्येति** ह्रस्वः प्राप्नोति, वशित-

६२. शूर्पान् शमीपर्णकान्···साज्यादिसामग्रिकान् (मोह० ४।२३)।

६३. कौसल्यासुप्रजा राम पूर्वा सन्ध्या प्रवर्तते ।
उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥ (रा० १।२३।२)।

६४. महारात्र इति रात्रेः पश्चिमो यामो भवति । शब्दस्तु न सिध्यति ।

६५. विषयाकृष्यामाणा हि तिष्ठन्ति सुपथे कथम् (कथा० २०।२९२)।

६६. श्रुतिपथि विचरामः सत्यगामुच्चरामः । (हनुमत्कृतायां खण्डप्रशस्तौ रामावतारे)।

---

करिणीरिति वक्तव्यम् । असति ह्रस्वे ङीबन्तात् करिणी शब्दाद् **हल्ङ्याब्** इति सुपो लुक् कुतो न । **सर्वथा हेयोऽयं प्रयोग** इति स्थितम् ।

६२. साज्यादि सामग्रिकान् इत्यत्र **नद्यृतश्चे**ति कप् समासान्तः स्थाने । ह्रस्वस्त्वस्थाने । **न कपी**ति निषेधात् । **गोस्त्रियोरुपसर्जनस्ये**त्यनेनापि ह्रस्वो नार्हति भवितुम् । समासान्तो ह्युत्तरपदावयवो भवति । तेन कबन्तमुत्तरपदम्, अत उपसर्जनस्त्रीप्रत्ययान्तान्तं प्रातिपदिकं नास्तीति ह्रस्वस्याऽप्राप्तिः ।

६३. **नित्यमसिच् प्रजामेधयोः**(५।४।१२२)इति बहुव्रीहावसिचं समासान्त शास्ति प्रकृते तु कौसल्यासुप्रजा इति तत्पुरुषः, तेनासिचोऽभावे सम्बुद्धौ कौसल्यासुप्रजे (राम) इति रूपमिष्टम् । **परवल्लिङ्गं द्वन्द्वतत्पुरुषयो**रिति समासस्य स्त्रीत्वम्,'विशेष्ये पुँल्लिङ्गेऽपि ।

६४. महारात्र इत्यत्राच्समासान्तो दुर्लभः । सति समासान्ते रात्ररूपे निष्पन्ने पुंस्त्वं सुस्थम् ।

६५. सुपथे इत्यपाणिनीयम् । **न पूजना**दिति (५।४।६९) समासान्तनिषेधात् ।

६६. श्रुतिपथि इत्यत्र **ऋक्पूरब्धूःपथामानक्षे** (५।४।७४) इति समासान्तोऽकारो विहितः, स न कृत इति दोषः । अनित्याः समासान्ता इति न शरणीकरणीयम् । यत्र तत्र शरणीक्रियमाणे तस्मिन्वाग्भ्रंशोऽनियन्त्रितो भविष्यति ।

६७. कुन्तीमातर्यथा मे त्वं तथा राजा युधिष्ठिरः (भा० सभा० २६।१६)।

---

६७. कुन्तीमातेति तु पाणिनीया रूपमिच्छन्ति। **मातॄणां मातच् पुत्रार्थमर्हते** इति वार्तिकेन कपोऽपवादो मातजादेश इष्यते। प्रकृते तु समासान्त एव न कृतः। सम्बोधनादन्यत्र तु मातज्मातृकमातृषु वा इति वार्तिकबलात् कप्विकल्पो नासाधुः।

**इति समासान्तविवेचनम्।**

# अथ लिङ्गेषु विवेच्यानि

१. अयं पद्मः किम् ? न खलु । महीतलसंचार्येषः, स च सरोविहारी ।

२. शुचौ[1] शुष्यन्ति पल्वलाः ।

३. वित्तं खलु समस्तकार्यकरम् ।

४. महानयमाजि[2]र्न जाने कदाऽवसास्यति ।

५. अयं ते धनुः । तूणीरं क्व निहितमिति नाहं वेद ।

६. क्षमे ! सत्यं सर्वसहाऽसि यदतिनृशंसस्य जनस्यापि समाश्रयासि ।

---

१. यद्यपि **वा पुंसि पद्मम्**मित्यमरः पाक्षिकं पुंस्त्वमभ्यनुजानाति तथापि पुंस्त्वे कविभिरप्रयुक्तत्वादालङ्कारिकाणां चासम्मतत्वात्पद्म इत्यपप्रयोग एव ।

२. **वेशन्तः पल्वलं चाल्पसर** इत्यमरात्पल्वलशब्दो नपुंसकम् ।

३. **पुंसि संज्ञायां घः प्रायेणेति** घान्त आकरशब्दः पुंसि व्युत्पादितः । सर्वरत्नानामाकर इति षष्ठीसमासोऽयं न बहुव्रीहिः । तेन सर्वरत्नाकर इति ब्रूयात् ।

४. **आजिः स्त्रियाम्** इति लिङ्गानुशासनान्महतीयमाजिरिति वक्तव्यम् । छन्दसि त्वाजिः पुमान् ।

५. अथास्त्रियौ धनुश्चापावित्यमराद्धनुः शब्दः क्लीबे पुंसि च । तेनायमिति सर्वनाम्ना निर्देशो नानुपपन्नः । तूणीरशब्दश्च नित्यं पुमान् । **तूणोपासङ्गतूणीरनिषङ्गा** इत्यमरः । तेन तूणीरः क्व निहित इति वक्तव्यम् ।

६. समाश्रयशब्द एरच् इत्यजन्तः । घाजन्तश्चेति लिङ्गानुशासनात् पुंसि प्रयोगो युक्तः । समाश्रयोऽसीति वक्तव्यम् ।

---

१. आषाढे २. युद्धम् ।

७. अतीते महायुधि लक्षशो योधाश्चायोधाश्च विगतविग्रहा अभूवन् ।

८. पुराणीयं कलिरेतद्वंशजानाम् । नैषा शक्या शमयितुम् ।

९. दुर्भेदा इमा ग्रन्थग्रन्थयः । सर्वतन्त्रस्वतन्त्र एव कश्चिद् एतद्भि-भेदनायालं स्यात् ।

१०. धनधान्यसमृद्धायामस्यां नीवृति[1] बह्व्यः प्रजा दुर्विधाः[2] सन्तीति किमेतत् ?

११. प्रतिष्टम्भनिः स्पन्दीकृता सव्या मे बाहुः ।

१२. नेमा इषवः शिखण्डिनः ।

१३. कियत्यो वितस्तयो वरिमा[3]ऽस्य पटस्य ?

---

७. **समित्याजिसमिद्युध** इति स्त्रीलिङ्गो युच्छब्दः । तेनातीतायां महायुधीत्येवं वक्तव्यम् ।

८. **सम्प्रहाराभिसम्पातकलिसंस्फोटसंयुगा** इत्यमरे कलिः पुंसि पठित । तेन पुराणोऽयं कलिः । नैष शक्यः शमयितुमित्येवं विपरिणमनीयम् ।

९. **ग्रन्थिर्ना पर्वपरुषी** इत्यमराद्ग्रन्थिशब्दः पुमान् ।

१०. **नीवृज्जनपदौ देशे** इति जनपदशब्देन सहोक्तौ नीवृच्छब्दः पुमान् तेन धनधान्यसमृद्धेऽस्मिन्निति वक्तव्यम् ।

११. द्वौ परौ द्वयोः । **भुजबाहू प्रवेष्टो दोरित्यमराद् बाहुः** स्त्रियामपि । तेन सर्वमनवद्यम् ।

१२. **इषुबाहू स्त्रियां चेति** लिङ्गानुशासनाद् इषुशब्दः स्त्रीपुंसयोः । तेन इमा इति स्त्रीलिङ्गनिर्देशो न दुष्यति । छन्दसि च स्त्री-लिङ्गता विशेषतः प्रसिद्धा । तद्यथा **याश्च ते हस्त इषवः परा ता भगवो वप** । (यजुः १६।६)

१३. **अङ्गुष्ठे सकनिष्ठे स्याद्वितस्तिर्द्वादशाङ्गुल** इत्यमराद् वितस्ति-शब्दः पुंसि नियत । तेन कियन्तो वितस्तय इत्येव साधु ।

---

१. जनपदे । २. दुर्गता दरिद्राः । ३. विस्तारः ।

१४. पञ्चालास्तव पश्चिमेन त इमे वीरा गिरां भाजनाः। (बाल-रामायणे)
१५. भूमिरियं सर्वेषामाधेयानामाधाराऽतो महदावपनमुच्यते।
१६. नायं सारः[१], स्वयं रथेन यासि, उपाध्यायं च पदातिं गमयसि।
१७. केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वलाः। (भर्तृ० १)।
१८. वर्धनं वाऽथ सम्मानं खलानां प्रीतये कुतः?
१९. देहमनसी दुःखाश्रये न त्वात्मा।
२०. कण्टकं मे पादे लग्नम्। तदुद्धर।
२१. वत्स! सद्य आपणं याहि। आम्रांश्च स्वादीयसः कियतोप्याहर।
२२. द्वौ द्वौ चत्वारो भवन्ति।

---

१४. गिरां भाजनं भाजनानीति वा वक्तव्यम्। पदमास्पदं भाजनमित्यादयोऽजहल्लिङ्गाः शब्दा वाङ्मये प्रसिद्धाः। तेन लेखकप्रमादोऽयं न तु नाटककारस्य स्खलितम्।

१५. आधारशब्दो घञन्तः। **अवहाराधारावायानामुपसंख्यानम्** इत्यौपसंख्यानिकोऽत्र घञ्। **घञबन्त** इति लिङ्गानुशासनादयं पुंसि नियतः। तेनाधारेत्यपशब्दः।

१६. **सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिष्वि**त्यमरान्न्याय्येऽर्थे सारशब्दो नपुंसकम्। तेन नेदं सारमिति ब्रूयात्।

१७. **केयूरमङ्गदं तुल्ये** इत्यमरात् केयूरशब्दो नपुंसकम्। तथा च पाठान्तरम्—'**केयूराणि न भूषयन्ति पुरुषमि**ति। **नाहं जानामि केयूरे** (४।६।२२) इति च श्रीरामायणे प्रयोगः।

१८. सम्मानशब्दो मन्यतेर्घञि व्युत्पाद्यते। तेन सम्मान इत्येव साधु।

१९. दुःखाश्रय इति पुंस्येकत्वे च साधु। उक्तोऽत्र हेतुः पूर्वत्र।

२०. **पुंनपुंसकयोः शेषोऽर्धर्चपिण्याककण्टका** इत्यमरप्रामाण्यात्कण्टकमित्यपि साधु। पुंसि तु प्रायिकः प्रयोगः।

२१. प्रकृत आम्रफलमभिप्रेतमित्याम्राणीति वक्तव्यम्। **फले लुक्** (४।३।१६३) इदि विकारावयवप्रत्ययस्य मयटः फले लुकि **लोकान्नपुंसकत्वम्**।

२२. सामान्ये नपुंसकमिति वचनाद् द्वे द्वे चत्वारि भवन्तीत्येव साधु।

---

१. न्याय्यम्।

२३. इमाः पुष्करिण्य इमानि च सरोवराणि कस्य मुदे न ?

२४. वल्मीकं नाम पिपीलिकाभिरुत्क्षिप्तं मृदां पुञ्जम् ।

२५. बृहदिदं राष्ट्रियं सङ्घमिति सर्वं एनत् सन्नमन्ति ।

२६. सस्याढ्या ग्रामाः समृद्धिमन्ति च नगराणि प्रसृतश्च वणिजां व्यवहार एतद्देशवैभवस्य व्याख्यातारः ।

२७. योऽबलेषु परकृता बलात्कृतीस्तूष्णीं सहते स सत्त्वहीनो नपुंसकः ।

२८. येन केन प्रकारेण सर्वस्य जन्तुनः सन्तोषं जनयेत् ।

२९. धनेन मानस्य विनिमयो न वरम् ।

३०. दुःखाकराभिर्गृहकृत्याभिरहरहः क्लिश्यन्ते गृहिणो निर्विद्यन्ते च ।

---

२३. **देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये** इत्यमराद्वरशब्दः श्रेष्ठवचनस्त्रिलिङ्गः । मयूरव्यंसकादित्वाद् विशेषणस्य परनिपातः । वरस्य त्रिलिङ्गत्वेपि पुंस्येवायं सरोवरशब्दः प्रयुज्यते **लोकाश्रयत्वाल्लिङ्गस्य** ।

२४. वल्मीकं पुन्नपुंसकम् । पुञ्जशब्दस्तु नियतं पुमान् । तथा चामरः—**स्यान्निकायः पुञ्जराशी तूत्करः कूटमस्त्रियाम्** इति ।

२५. **सङ्घोद्घौ गणप्रशंसयोरिति** सङ्घशब्दोऽप्प्रत्ययान्तः । घञन्त इति पुंसि रूढः । तेन बृहन्नयं राष्ट्रियः सङ्घ इति सर्वं एनं संनमन्तीत्येवं विपरिणमय्य वक्तव्यं सर्वदोषापहतये ।

२६. **नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामिति** नपुंसकैकशेषे व्याख्यातृणीत्येव साधु ।

२७. पुमान् स्त्री नपुंसकमित्येवं प्रायो लिङ्गनिर्देशो दृश्यते । सूत्रकारप्रयोगश्च—स नपुंसकम् (२।४।१७) इति । भाष्यकारप्रयोगात्तु पुंस्यपि साधु ।

२८. **प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः** इत्यमराज्जन्तुशब्दः पुमान् । तथा च सूत्रकारप्रयोगः—क्षुद्रजन्तव (२।४।८) इति ।

२९. क्लीबं मनाक्प्रिये इत्यमरोक्तेर्वरम् इति साधु स्यात् । न चेह मनाक् प्रिय इत्यर्थः ।

३०. दुःखाकरैरित्येव साधु । उक्तोऽत्र हेतुः पूर्वत्र ।

३१. क्लिश्यतेऽसौ नाडीव्रणेन । नेदमद्यापि संरोहति ।
३२. स्वरपि मे न मनोहर उत्त्रसत्पृषतलोचनया[1] रहितस्त्वया ।
३३. अमित्रा मित्ररूपेयं पाणिगृहीती मम । (श्रीरामायणे)
३४. इमानि कन्दराणि श्वापदाकुलानीति भयं जनयन्ति यात्रिकाणाम् ।
३५. जर्जरिता गृहस्थूणेति पित्सति पटलम्[2] ।
३६. अपीयं खे सम्पतन्ती बलाकपङ्क्तिर्दृष्टेस्ते गोचरा ?
३७. अहो रमणीया अस्य बर्हिणस्य[3] बर्हाः[4] । प्रत्युप्यत[5] इवात्र दृष्टिः ।
३८. वर्तमाना हिन्दवः सभ्यानामार्याणां सन्तानानि सन्तीति लोकस्यादृता भवन्ति भूयसा ।

---

३१. **नाड्यपजनोपपदानि व्रणाङ्गपदानीति** पुंल्लिङ्गाधिकारे लिङ्गानुशासने पठितम् । तेन व्रणशब्दस्य पुन्नपुंसकत्वेपि नाडीव्रणस्य पुंस्त्वमेव ।
३२. स्वरिति स्वर्गपर्यायवचनम् । **स्वरादिनिपातमव्ययमि**त्यव्यय**संज्ञा । क्रियाव्ययानां भेदकानि क्लीबानि भवन्ती**ति मनोहरम्, रहित**मि**ति च वक्तव्यम् ।
३३. मित्रशब्दो नपुंसकम् । अमित्रशब्दस्तु स्त्रीपुंसयोर्यथाविवक्षम् इति प्रकृते न किञ्चिदाक्षेप्यम् ।
३४. **दरी तु कन्दरो वा स्त्री**ति कोषप्रामाण्यात्कन्दरशब्दः पुँल्लिङ्गः। तेन इमे कन्दरा इमाः कन्दरा वेति वक्तव्यम् ।
३५. **स्थूणोर्णे नपुंसके च**ेति सूत्रेण केवले स्थूणोर्णे स्त्रियां क्लीबे च । गृहशशपूर्वे तु नियमेन नपुंसके । तथा च सूत्रम्—**गृहशशाभ्यां क्लीबे** इति । तेन जर्जरितं गृहस्थूणमित्येव साधु ।
३६. गोचरसंचरेत्यादिना गोचरशब्दो घान्तो निपातितः । घाजन्त इति चायं नैयत्येन पुमान् । गोचर इत्येव साधु । दृष्टे गोचरो विषयः ।
३७. **पिच्छबर्हे नपुंसके** इत्यमराद्बर्हं नपुंसकम् ।
३८. सन्तान इति समुपसृष्टात्तनोतेर्घञि रूपम् । तेन पुंस्त्वं व्यवस्थितम् । सन्तान इति कुलनामधेयम् अपत्येऽपि वर्तते ।

---

१. पृषतलोचना हरिणाक्षी ।
२. छदिः । ३. बर्हिणः, मयूरस्य । ४. पिच्छानि । ५. सज्जति ।

३९. उत्तरस्याः पश्चिमायाश्चान्तराला दिगुत्तरपश्चिमोच्यते ।
४०. घनधान्येन समृद्धिमदिदं जनपदम् इति सुकृतिनो जनपदिनः ।
४१. नैत्यशब्दिका वैयाकरणाः कार्यशब्दिकाश्च नैयायिकाः । इतरत्रापि भिद्यन्ते सिद्धान्तानि विमर्शकानाम् ।
४२. मयि दूरिभूते त्वयैव मे जनन्या योगक्षेममवेक्षणीयम् ।
४३. नाको मे स्यान्नरकं मा भूदिति सर्वस्य हृदि स्थितः कामः ।
४४. अस्ति कश्चित्पुस्तको यमवलोकयेयं कालं च साधु नयेयम् ?
४५. इह ग्रामे क्षारवारयः सर्वेऽप्युदपानास्तेनेतो दूराद् ग्रामान्तरादाहरन्ति पानीयं ग्रामीणाः ।
४६. अत्र सद्मनि किमपि गवाक्षं नास्तीति नेदं वासार्हम् ।

---

३९. अन्तरालमिति नित्यं नपुंसकम् । अभ्यन्तरं त्वन्तरालमित्यमरः ।
४० **नाड्यपजनोपपदानि व्रणाङ्गपदानीति** लिङ्गानुशासनस्थसूत्रेण जनपदशब्दः पुमान् ।
४१. सिद्धान्त इति पुंसि नियतम् तथा चामरः—**समौ सिद्धान्तराद्धान्ताविति** । केवलोऽन्तशब्दस्तूभयलिङ्गः, प्रयोगस्तु प्रायेण पुंसि ।
४२. **कुशलं क्षेममस्त्रियामि**त्यमरात्क्षेमशब्दः पुंनपुंसकम् । तथापि योगपूर्वोऽयं भूत्यर्थे वर्तमानः प्रायः पुंसि दृष्ट इति योगक्षेमोऽवेक्षणीय इत्येव श्रेयः । तत्र योगसहितः क्षेमो योगक्षेमः, योगपूर्वो वा क्षेमो योगक्षेम इति विग्रहः ।
४३. **स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियामि**त्यमरान्नरकशब्दः पुमान् ।
४४. पुस्तकशब्दः पुन्नपुंसकम् । अर्धर्चादिषु पाठात् ।
पञ्चतन्त्रे कामसूत्रेषु वात्स्यायनीयेषु नागरकवृत्ते च पुंसि प्रयोगदर्शनात् ।
४५. **पुंस्येवान्धुः प्रहिः कूप उदपानं तु पुंसि वेति** कोषादुदपानः पुंसि साधुः । पक्षे नपुंसकम् ।
४६. **वातायनं गवाक्ष** इत्यमरे पुंस्त्वनिर्देशात्कोपि **गवाक्ष** इत्येवं **वक्तव्यम्** ।

४७. अयं विपथः, नैनेन गन्तव्यं गन्तुमर्हसि ।
४८. क्रव्यादस्यास्य तालुस्तीक्ष्णेनास्थ्ना विद्ध इति वराकः परं दुःखायते ।
४९. द्रव्य[1]मियं ब्राह्मणी । धन्यावस्या मातरपितरौ ।
५०. जीर्णेयं छदिः पिपतिषति नूनम् ।
५१. कुकूलं[2] विरच्यताम् । संस्करिष्याम्यनेनात्मनो देहम् ।
५२. यो हि मित्राणि वा बन्धून्वा नित्यं याचते स बहुतृणो[3] नरः ।
५३. कस्येदं कुटीरं स्यात् । अपि नामास्य स्वामी वासं नो दास्यत्येकरात्रम् ?
५४. इयं कुतूस्त्रिंशत्सेटकमितं तैलं संभवति । इदं कुतुपं तु पञ्चदशसेटकमितम् ।

---

४७. **पथः संख्याव्ययादेः क्लीबतेष्यत** इति विपथमित्येव साधु ।

४८. **तालु तु काकुदम्** इत्यमरात्तालु नपुंसकम् ।

४९. **द्रव्यं भव्य** इति भव्यार्थे द्रव्यशब्दो निपातितः । स चाजहल्लिङ्ग इति ब्राह्मणीत्यनेन सामानाधिकरण्येऽपि नपुंसकम् । **द्रव्यं भव्ये गुणाश्रये** इति चामरः । अत्र भव्ये वाच्यलिङ्गकमिति नोक्तम् । उभयस्मिन्नर्थे समानलिङ्गता ।

५०. **छदिः स्त्रियामेवेति** लिङ्गानुशासनात्स्त्रीत्वं साधु । कोषान्तरे तु छदिर्नपुंसकम् । **द्व्यच्कमसिसुसन्तमिति** वचनात् । **छन्दसि** तु च्छदि नियमेन नपुंसकम् ।

५१. **कुकूलं शङ्कुभिः कीर्णे श्वभ्रे ना तु तुषानले** इत्यमरात्तुषानलवचनः कुकूलशब्दः पुंसि ।

५२. ईषदसमाप्तं तृणं बहुतृणम् । **विभाषा सुपो बहुच् पुरस्तात्तु** इति बहुच् । **स्यादीषदसमाप्तौ तु बहुच्प्रकृतिलिङ्गके** इति वचनात् बहुच्पूर्वस्य तृणशब्दस्य प्रकृतिलिङ्गता । तेन बहुतृणं नर इत्येव ।

५३. कुटीरः कुटीरमित्युभयं साधु ।

५४. ह्रस्वा कुतूः कुतुपः । अमरे **कुतुपः पुमानिति** पाठः ।

---

१. भव्या । २. तुषानलः । ३. तृणप्रायः । बहुच्प्रत्ययः ।

५५. रौद्रश्चतुष्पथ इत्यृषय आमनन्ति। तथाम्नाने च न दुष्करो हेतुरुन्नेतुम् ।
५६. शुक्ले अपाङ्गे (नेत्रान्तौ अस्येति) शुक्लापाङ्गो मयूरः।
५७. अयमपथः, एनेन चेद्यास्यसि पदे पदे स्खलिष्यसि ।
५८. गभीरमिदं जलाशयम् । नात्र बाहुकस्तरेत्[1] ।
५९. प्राचीनं ग्रामादाम्राः । (भाष्ये)
६०. अन्तरेण स्वार्थहानं परार्थं न सिध्यतीति प्रायिकम् ।
६१. कैरध्युषिता इमेऽन्तरा गेहकाः । इमे हि मलवन्तो भवन्ति ।
६२. अत्र कियन्त्यक्षतान्यपेक्ष्यन्ते तिलकक्रियायाम् ।

---

५५. चतुर्णां पथां समाहारश्चतुष्पथम् । **स नपुंसकम्** इति वा, **पथः संख्याव्ययादेः क्लीबतेष्यते** इति वा नपुंसकं साधु ।

५६. **नाङ्यपजनोपपदानि व्रणाङ्गपदानीति** लिङ्गानुशासनात् अपाङ्ग इत्येव साधु । **अपाङ्गौ नेत्रयोरन्तावि**ति चामरः ।

५७. **अपथं नपुंसकम्** इति निपातनादपथ इत्यपशब्दः । अपन्था इति तु पुंसि साधु ।

५८. गभीरोऽयं जलाशयः । आशेरते जलान्यत्रेति जलाशयः । पुंसि संज्ञायां घः प्रायेण (३।३।११८)इति घः । **घाजन्त** इति पुंस्त्वम् । जलानामाशय इति षष्ठीसमासः ।

५९. प्राचीनमिति सामान्ये नपुंसकम् । कंचिद्विशेषमविवक्षित्वा नपुंसकेनोपक्रमः । **शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिन** (रा० ४।२८।८) इत्यत्र **शक्य**मितिवत् ।

६०. अर्थशब्दो नित्यं पुमान् । **अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वि**त्यमरः ।

६१. गेहं गेहकमिति च नित्यं नपुंसकम् । अतोऽन्तराणि गेहकानीति वक्तव्यम् । गृहशब्दस्य तु पुंबहुत्वे प्रयोगः प्रसिद्धः ।

६२. लाजा अक्षता इत्यादयः पुंभूम्नि प्रयुज्यन्ते । तेन कियन्तोऽक्षता इति वक्तव्यम् ।

---

१. बाहुभ्यां तरतीति ।

६३. कस्य नाम न वन्द्या स्युर् मुनयः प्रशमायनाः ?
६४. अहो अवश्यायसिक्ता इमे किसलया बालार्कोपरक्ताः कामप्यभिख्यां पुष्यन्ति ।
६५. स्वर्दृतिः क्षालिता तीर्थे किं शुद्धिमधिगच्छति ?
६६. भारतोपनिबद्धमिदं वृत्तान्तं सत्यं स्यान्नासत्यमिति नः प्रत्ययः ।
६७. किं धर्मः किमु वाऽधर्म इति प्रश्नश्चिरन्तनः ।
६८. बहूनि विघ्नानि कुर्वन्ति दुर्जनाः सुजनक्रियासु ।
६९. भवन्ति चात्रार्थे यजुषः प्रमाणम् ।
७०. प्राणस्य निग्रहादिन्द्रियपूगं स्वायत्तं भवति ।
७१. शास्त्रसहकारेण बुधजनोपासनया च सत्यसत्यौ विविञ्चीत ।

---

६३. अयनमास्पदमित्यनर्थान्तरम् । अयनमिति नित्यं नपुंसकम् । प्रशमस्यायनं प्रशमायनम् । **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति** परवल्लिङ्गतयां नपुंसकमेव साधु ।

६४. **पल्लवोऽस्त्री किसलयमित्यमरा**त्किसलयं नपुंसकम् । तत्समानार्थकं पल्लवं द्वयोः ।

६५. अमरे दृतिः पुमान् । **दृति सीमन्त हरित** इति पुँल्लिङ्गसङ्ग्रहे पाठात् । क्तिचि पुंस्त्वं क्तिनि तु स्त्रीत्वम । प्रायेण पुंसि प्रयोगः ।

६६. **वार्ता प्रवृत्तिर्वृत्तान्त उदन्त** इत्यमराद् वृत्तान्तः पुमान् ।

६७. धर्मः किम्, अधर्मश्च किम्, इत्येवमन्वये किमिति सामान्ये नपुंसकं युक्तमेव । को धर्मः ? भूतदयेत्यादिषु किंलक्षणको धर्म इति विवक्षायां पुंसि किंशब्दः सूपपन्नः ।

६८. विहन्यतेऽस्मिन्निति विघ्नः । **घञर्थे कविधानम्** । **विघ्नोऽन्तरायः प्रत्यूह** इत्यमरात् पुंस्त्वम् ।

६९. **द्व्यच्कमसिसुसन्तमि**ति यजुः शब्दो नपुंसकम् । तेन यजूंषि प्रमाणमित्येवं वक्तव्यम् ।

७०. **पूगः क्रमुकवृन्दयो**रिति नानार्थवर्गेऽमरः । इन्द्रियग्राम इति तु व्यवहारः ।

७१. सत्यं चासत्यं चेति सत्यासत्ये । सामान्ये नपुंसकम् ।

७२. अप्रमोदात्पुनः पुंसः प्रजनं[1] न प्रवर्तते। (मनु० ३।६१)
७३. मञ्चाः क्रोशन्तीत्यत्र तास्थ्योपाधिरवगन्तव्या।
७४. सूर्यादीनि लोकान्तराणि सर्वे चैहिका भोग्यार्था भगवतैव विनिमिता इति सत्यम्।
७५. तदिदं धर्मचक्रमनादिकालात्प्रवृत्तं प्रवर्तिष्यते च निरवधिम्।
७६. ननु किं नाम मुक्तिः ? कैवल्यमिति साङ्ख्याः, आत्मोपलब्धिर्ब्रह्मभावो वेति वेदान्तिनः, अपवर्गो दुःखात्पृथग्भाव इति च नैयायिकाः।
७७. ब्रह्म च जीवश्च भिन्नावेवेति मध्वादयः।
७८. वत्स ! कपाटौ पिधायान्तस्तिष्ठ। प्रवाति वातो रजोविक्षिपः[2]।
७९. इदमस्य प्रमत्तगीतं भङ्गमदवशं गतस्य।
८०. रे रे पान्थ ! व्रतशुचेर्ममायं कङ्कणः प्रतिगृह्यताम्।

---

७२. प्रजनशब्दो घञन्तः। **जनिवध्योश्चे**ति वृद्ध्यभावः। घञबन्त इति पुंसि प्रयोगो युक्तः।
७३. **उपसर्गे घोः कि**रित्युपाधिशब्दः किप्रत्ययान्तः। **घोः किः प्रादितो न्यत** इत्यमरवचनात्पुंसि।
७४. **नपुंसकमनपुंसके**नेत्यादिना नपुंसकैकशेषे विनिर्मितानीत्येव साधु।
७५. विशेषणत्वे क्रियाविशेषणत्वे वा निरवधिशब्देन नपुंसकेन भवितव्यम्। तेन **स्वमोर्नपुंसका**दिति स्वमोर्लुकि 'प्रवर्तिष्यते निरवधी'ति वक्तव्यम्।
७६. किंलक्षणेत्यर्थविवक्षायां का नाम मुक्तिरिति वक्तव्यम्।
७७. भिन्न एवेति नपुंसकैकशेषे साधु स्यात्।
७८. **कपाटमररं तुल्ये** इत्यमरात्कपाटं क्लीबे।
७९. भङ्गेति टाबन्तं **स्त्रियाम्**।
८०. **कङ्कणं करभूषण**मिति कोषात्कङ्कणं क्लीबम्।
८१. तादृशं वाहनं खर इत्येवं न्यासो निरवद्यः स्याम्। वाहनं नपुंसकम्। तथा च भगवतः सूत्रकारस्य प्रयोगः—**वाहनमाहितात्**

---

१. गर्भाधानम्। २. विक्षिपतीति विक्षिपः। कः प्रत्ययः। रजसो विक्षिप इति षष्ठीसमासः।

८१. यादृशी शीतला देवी तादृशो वाहनः खरः ।

८२. निरर्थकाश्च जटा वर्धयित्वा तापसव्यञ्जनोपेता अमी भिक्षुकाः कदाचारवृद्धये कल्पन्ते ।

८३. आर्हताः[1] खलु जगज्जीवो जीवकर्माणि बन्धश्चानादिरिति मन्यन्ते ।

८४. शिखिपिच्छमयो मुकुटः कमपि शोभातिशयं जनयति रुक्मिणी-जानेः ।

८५. यदा नभसि तारको दृश्यते तदाऽयं[2] वाचं विसृजति[2] ।

८६. अत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसत इत्ययं भूभागस्त्रिदिव एव ।

८७. अद्य सहस्रमब्दानि महमूदेन भरतभुव आक्रान्तायाः ।

८८. ब्रह्मसूत्राण्युपनिषदो गीताश्चेत्यध्यात्मविद्या । इमा एव प्रस्थान-त्रयीत्युच्यते ।

---

(८।४।८) । न चेदमिह खरविशेषणं येन पुंसि प्रयोगः सङ्गतः स्यात् ।

८२. **प्रत्ययस्थात् कात्पूर्वस्येत्**यादिना टापि कात्पूर्वस्यात इकारे निर-र्थिका इति साधु स्यात् ।

८३. अनादि, अनादीनीति वा नपुंसकैकशेषे युज्यते वक्तुम् ।

८४. **अथ मुकुटं किरीटं पुन्नपुंसकम्** इत्यमरान्मुकुटं नित्यं नपुंसकम् ।

८५. तारक इत्यसुराख्यायामेव पुमान् । ऋक्षे तु **तारका स्त्रियां तारकं च क्लीब** इति प्रयोगचरणाः । तथा च शाश्वतः—**नक्षत्रे चाक्षिमध्ये च तारकं तारकापि चे**ति । लक्ष्यं च **द्वित्रैर्व्योम्नि पुराणमौक्तिकमणिच्छायैः स्थितं तारकैः** (इति विद्धशाल-भञ्जिकायाम्) ।

८६. **स्वरव्ययं स्वर्गनाकत्रिदिवत्रिदशालया** इत्यमरात् त्रिदिवः पुमान् ।

८७. **अब्दौ जीमूतवत्सराव्**इत्यमरेऽब्दशब्दः पुमान् ।

८८. इमान्येवेति वक्तव्यम् । नपुंसकशेषो हि युक्तः ।

---

१. जैनाः । २—२. मौनं त्यजति ।

८९. स्त्रीशूद्रद्विजबन्धूनां त्र न श्रुतिगोचरा। इति भारतमाख्यानं कृपया मुनिना कृतम् ॥ (भा० पु० ११।२५)

९०. सर्वे पदाः हस्तिपदे निमग्नाः।

९१. न साहसैकान्तरसानुवर्तिना न चाप्युपायोपहतान्तरात्मना। विभूतयः शक्यमवाप्तुमूर्जिताः।

९२. विशेषणैर्यत् साकूतै[1]रुक्तिः परिकरस्तु सः।

९३. यो हि भूयसः शब्दार्थजातान्वेद, साधीयांस्तस्य वाचि भागः।

९४. पूर्णिमायां सामुद्रा वीचयः कामपि शोभां पुष्णन्ति।

---

८९. गोचरशब्दः पुंसि नियत इत्यसकृदुक्तमधस्तात्। षष्ठीसमासश्चायं गोचरान्तः। तेन परवल्लिङ्गत्वाच्छ्रुतिगोचर इत्येव न्याय्यमिति पाणिनीयाः। **भागवतकारस्त्वनेकत्र तन्त्रमाकुलयति**।

९०. **पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्य**मरात्पदमिति नित्यं नपुंसकम्। तेन सर्वे पादा हस्तिपादे निमग्ना इत्येवं परिवर्त्य पठनीयम्। शालिनी वृत्तमिदम्।

९१. शक्यमिति सामान्ये नपुंसकम्। तथा च वामनसूत्रम्—**शक्यमिति विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात्**। एवं विलिङ्गवचनस्य शक्यशब्दस्य वाक्यादावेव प्रयोग उपपत्तिमान्भवतीति सुधीभिर्मनसि करणीयम्।

९२. **उद्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि पर्यायेण तल्लिङ्गमुपाददत**/इति कामचार इति कैयटः। प्रकृते तु यच्छब्देन नैकतरस्यापि लिङ्गमुपादीयत इति यदिति नपुंसकं चिन्त्यम्। कथं वान्तर्वाणयः पश्यन्ति ?

९३. जातिर्जातं च सामान्यमिति जातशब्दो नपुंसकम्। शब्दार्थजातम् शब्दार्थजातानीति वा साधु स्यात्।

९४. **भङ्गस्तरङ्ग ऊर्मिर्वा स्त्रियां वीचि**रित्यमराद्वीचिः स्त्रीति सामुद्र्य इति स्त्रीलिङ्गं विशेषणं युक्तम्।

---

१. साभिप्रायैः।

९५. वश्यवाचः श्रीवाचस्पतिमिश्रा दर्शनेषु वैदुष्यनिकषाणि दार्शनिकहृदयहारीणि व्याख्यानानि वितेनिरे।

९६. देवदत्तः परीक्षोत्तीर्णानां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितोऽभूदिति प्राश्निकाः[१] पुष्कलः पारितोषिकोऽस्मै देय इति निरचैषुः।

९७. प्रणेष्यमाणमिदं काव्यं श्रमप्रसूरेव भविष्यति नार्थकृत्।

९८. प्रजनं नाम प्रजननं प्रथमगर्भग्रहणमुच्यते। तदेव चोपसर इत्युक्तः सूत्रकारेण।

९९. सत्यं लोकेऽस्मिन्प्रमेयशतांशमपि स्वानुभवेन ज्ञातुं न शक्यम्।

१००. पावको लोहसङ्गेन मुद्गरैरभिहन्यत इत्याभाणकं[२] न जात्वलीकं भवति।

१०१. त्वदुक्तोऽर्थः सत्यमेव भाति, नासत्यम्।

१०२. स्त्रीणां वेदेऽधिकारोऽस्ति न वेति विवादास्पदो विषयः।

---

९५. निकष्यतेऽत्रेति निकषः। **पुंसि संज्ञायामिति** घः। वैदुष्यस्य निकषा इति वैदुष्यनिकषा इति साधु स्यात्। वैदुष्यनिकषभूतानीत्येवं न्यसनीयम्।

९६. परितोषः प्रयोजनमस्येति पारितोषिकम्। **प्रयोजनम्** (५।१।१०९) इति ठक्। यत् किञ्चित्परितोषफलकमभिप्रेतं न विशिष्टार्थः कश्चिदिति सामान्ये नपुंसकमेव युज्यते।

९७. श्रमं प्रसूत इत्यर्थे **सत्सूद्विषे**त्यादिना (३।२।६१) क्विपि कृदन्तत्वात्प्रातिपदिकत्वे ह्रस्वो नपुंसके प्रातिपदिकस्येति ह्रस्वत्वे तुकि स्वमोर्नपुंसकादिति सोर्लुकि 'श्रमप्रसुत्' इति साधु स्यात्।

९८. प्रजन इति तु युक्तम्। युक्तत्वे चोक्तो हेतुः।

९९. शततमोंऽशः शतांशः। अंशभागौ तु वण्टके इत्यंशः पुमान्।

१००. आभाणकः पुंसि। तथा च लौकिकानामाभाणक इत्यादिषु तथा दर्शनात्।

१०१. सत्य एव भाति नासत्य इत्येवं वक्तव्यम्।

१०२. आस्पदमित्यजहल्लिङ्गं नित्यं नपुंसकम्। विवादास्पदं विषय इति निरवद्यम्। विषयशब्दः सुत्यजः।

---

१. प्रश्ने नियुक्ता इत्यर्थः। २. लोकोक्तिः।

१०३. सज्जं तवेदं कुङ्कुमकर्दमम्, यथेष्टमुपयुङ्क्ष्व ।
१०४. मृत्युर्वै प्राणिनां ध्रुवा ।
१०५. अवनतेश्चरमं सीमानं विलोक्य परं दुःख्यन्ति[1] सहृदयाः ।
१०६. जैनसाधूनामुपाश्रयाणीमानि निःशब्दलेशानि ।
१०७. मल्लिकायाः कण्ठस्वरमतिमधुरमिति प्रसिद्धिः ।
१०८. दानशौण्डेन देवशर्मणाऽत्र ग्रामे औषधालयमप्येकं प्रतिष्ठापितम् ।
१०९. न हि कश्चिद् व्यक्तिरत्र दुष्यति, समष्टिरेव तु दोषभाक् ।
११०. अयं सुपन्थाः, अयं च विपथः, येनेष्टं तेन गम्यताम् ।
१११. शेषं स्पष्टम् ।
११२. दरिद्रस्य मृतिरेव वरा न तु बन्धुमध्ये जीवितम् ।
११३. मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम् । (कुमारे)

---

१०३. **पङ्कोऽस्त्री शादकर्दमावि**त्यमरः । तेन कर्दमशब्दः पुमान् ।
१०४. **अन्तो द्वयोर्मृत्युर्मरणं निधनोऽस्त्रियाम्** इत्यमरान्मृत्युः स्त्रीपुंसयोः । तेन नात्र कश्चिद्दोषः ।
१०५. **सीमसीमे स्त्रियामुभे** इत्यमरप्रामाण्यात्सीमन् इति नकारान्तमपि स्त्रियामेव । तेन चरमां सीमानमिति वक्तव्यम् ।
१०६. उपाश्रयशब्द **एरच्** इत्यजन्त इति पुंसि नियतः ।
१०७. **कण्ठस्वरो**ऽतिमधुर इति तु युक्तम् ।
१०८. पुंसि संज्ञायां घः प्रायेण इति आलयशब्दो घान्तः । घाजन्त इति पुंसि नियतः ।
१०९. विपूर्वाद् अञ्जेः क्तिनि व्यक्तिरिति व्युत्पद्यते । तेन स्त्रीत्वं नियतम् । व्यज्यते जातिरत्रेति व्यक्तिः पृथगात्मता ।
११०. पथः संख्याऽव्ययादेः क्लीबतेष्यत इति विपथमिति वक्तुमुचितम् । यत्तु व्यध्वो दुरध्वो विपथः कदध्वा कापथः समा इत्यमरो विपथशब्दं पुंसि पपाठ तच्चिन्त्यम् ।
१११-११२. शेषशब्दो घञन्तः । घञबन्त इति पुंसि प्रयोग इष्यते । **भावे घञं प्रति पुंस्त्वमुक्तम्, करणादिघञन्तस्य नानालिङ्गतेति वल्लभः।**
११३. मनाक्प्रिये वरमित्येव युक्तम् । तथा च शब्दार्थार्णवसंक्षेपे **केशवः**—देवादीप्सितजामात्रोर्वरः श्रेष्ठे पुनस्त्रिषु । मनागिष्टे **भवेत्क्लीबमन्ये त्वाहुस्तदव्ययम्** ॥

---

१. दुःखमनुभवन्ति ।

११४. गरुडो ध्वजायां यस्य सोऽयं गरुडध्वजो विष्णुः ।
११५. किमित्यनर्थसार्थं मौनं सुखं सेव्यते ?
११६. यं यमक्षरं तैलङ्गपण्डितोऽवोचत्स स सत्योऽभवत् ।
११७. खगबाल्यादिनो वयः । (अमरे)
११८. यः सतामालवालः[१] शुष्यद्गीर्वाणवाणीसुमनः[२]स्तृप्तये मेघमालोऽभूत् क्वासौ सम्प्रति पुण्यायतनं पण्डितो मदनमोहनो मालवीयः ।
११९. परिमितसंख्यैः संख्यातीतानामाक्रमणादात्मघातमेवेति स्थितम् ।
१२०. इयमुक्तिर्न मे चाटुश् चिन्तनीयः ।
१२१. कामं सर्वस्वं नो नश्येन्न तु मानम् । मानेन हीनास्तु न जीवामः ।

---

११४. **केतनं ध्वजमस्त्रियामिति** ध्वजः स्त्री न । ध्वजो ध्वजं वेति **वक्तव्यम्** ।
११५. अनर्थसार्थ इत्येवोचितम् । सार्थशब्दः पुंसि नियतः । **संघसार्थौ तु जन्तुभिरित्यमरात्** । मुख्यया वृत्त्या संघः सार्थश्च प्राणिसमूहमेवाचक्षाते । तत्पुरुषश्च प्रकृतः समासः । तत्पुरुषे सम्भवति व्यधिकरणबहुव्रीहिपरिग्रहस्यान्याय्यत्वात् ।
११६. अक्षरशब्दो नपुंसकम् । वर्णो ब्रह्म मोक्षश्चाक्षराणि ।
११७. खगश्च बाल्यादि चेति विग्रहः । द्वन्द्वः । बाल्यादि इति च बहुव्रीहिः । बाल्यमादिर्यस्येति तद्विग्रहः । **परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति** द्वन्द्वे बाल्यादीत्युत्तरपदस्य नपुंसकत्वात्खगबाल्यादिनोरिति सप्तमीद्विवचने रूपं साधु ।
११८. **स्यादालवालमावालमावाप** इत्यमर आलवालशब्दं क्लीबे पठतीत्यालवालमित्येव पठनीयम् । मेघमालेति टाबन्तं युक्तम् । मेघानां माला मेघमाला । सेवेत्यौपमिकः प्रयोगः । तत्र भवति मदनमोहन आलवालत्वं मेघमालात्वं चारोप्यते ।
११९. आत्मघात इति तु न्याय्यम् ।
१२०. चाटुशब्दः पुन्नपुंसकयोरित्याभिधानिकाः । तथा च ऋतुसंहारे प्रयोगः—'**प्रियः प्रियायाः प्रकरोति चाटुम्**' इति । तेन प्रकृतेऽदोषः ।
१२१. मान इत्येवोचितं वक्तुम् । मन्यतेर्घञि मानः ।

---

१. आवापः, जलाधारः । २. सुमनाः पुष्पम् । इदमेकत्वेऽपि प्रयुज्यते ।

१२२. तरुराजित्रलयिताः सानवः सस्यश्यामलकेदारालंकृताश्चोपकण्ठाः[1] पर्वतानां हृदयानि हरन्ति यात्रिकाणाम् ।

१२३. अद्य मे दर्पणं कराद्विगलितमत्रुटीत्[2] । त्वं मे दातुमर्हसि क्षणम्।

१२४. विशालोऽस्य ललाटो व्यूढं चोरः प्रलम्बौ च बाहू इति भाग्यवानयं भाति ।

१२५. मन्ये दूरमुत्सारिता दोषनिकुरम्बाः[3] । इदानीं सर्वमवदातम् ।

१२६. इदं कथककोलाहलं कर्णयोर्ज्वरमिव नः समुत्पादयति ।

१२७. नूनं पातित्याङ्कुराणि प्ररोहोन्मुखानि द्विजेषु ।

१२८. सा देवी मम च प्राणा रावणेनोभयं हृतम् (रा० ३।६७।१५) ।

१२९. अनृतं वदन्नपि यदयमृतं वदामीत्याभासयति स परः सीमा चातुर्यस्य ।

१३०. इदं कौक्षेयकं[4] गृह्यतां निकृत्यन्तां च शिरांसि द्विषाम् ।

---

१२२. उपकण्ठशब्दोऽव्ययमनव्ययं च । अव्ययत्वे तूपकण्ठमित्येकवचनान्तं क्लीबमेव साधु स्यात् । प्रादिसमासे त्वनव्ययम् । तथाभूतः स पुन्नपुंसकयोः । **स्नुः प्रस्थः सानुरस्त्रियामिति** त्रीणि पुन्नपुंसकलिङ्गानि । तस्मात्प्रकृते न कश्चिद्दोषः ।

१२३ **दर्पणे मुकुरादर्शावित्यमरादेते** त्रय एव पुमांसः ।

१२४ **ललाटमलिकं गोधिरित्यमराल्ललाटं** नपुंसकम् ।

१२५ **निकुरम्बं कदम्बकमित्यमरः** । तेन दूरमुत्सारितानि दोषनिकुरम्बाणीति वक्तव्यम् ।

१२६. कोलाहलः कलकल इत्यमरः ।

१२७. **अङ्कुरोऽभिनवोद्भिदीत्यमरादङ्कुरः** पुमान् । अङ्कुराः प्ररोहोन्मुखा इति वाच्यम् ।

१२८. उभयमिति सामान्ये नपुंसकम् । उभयं हृतम् । किं तदित्याह—सा देवी मम प्राणाश्चेति ।

१२९. **सीमसीमे स्त्रियामुभे** इति परा सीमेति वक्तव्यम् ।

१३०. **कौक्षेयको मण्डलाग्रः करवालः कृपाणवत्** इत्यमरात् कौक्षेयकः पुमान् ।

---

१. प्रत्यन्तभूमयः । २. त्रुटेस्तौदादिकाल्लुङि । कुटादित्वाद्गुणाभावः । ३. समूहाः । ४. खड्गः ।

१३१. सर्षपाणि स्वया पीतिम्ना दिङ्मुखानि पिञ्जरयन्ति ।
१३२. वसूनि सुखहेतूनि भुञ्जते सर्वमानवाः ।
१३३. यथा घुणो नाम कीटः क्वचिद् दारौ दैवादक्षराणि विलिखति, एवं निष्कर्मणोपि क्वचित्सम्पद्योगो दृश्यते ।
१३४. परिव्राजकामुकशुनामेकस्यां प्रमदातनौ । कुणपं[1] कामिनी भक्ष्यमिति तिस्रो विकल्पनाः ॥
१३५. युद्धभेर्या इवैषा ध्वनिर्मूर्छति[2] श्रवणयोः ।
१३६. प्रभातकल्पा सम्प्रति शर्वरी । नैकोऽपि तारको दृश्यते गगने ।
१३७. किं[3] जानास्यायुर्वेदं यन्मेदोमज्जयोर्विशेषं न वेत्थ ।
१३८. अत्युदारामुपाधिं दधतो महाजना जनवत् प्रवर्तन्ते बत[4] ।
१३९. अहो मनोज्ञमिदं सुमनोगुच्छकम् ।
१४०. तानि धर्माणि प्रथमान्यासन् (ऋ० १।१६४।५०)

---

१३१. स्वेन पीतिम्नेति वक्तव्यम् । इमनिजन्तं पुंसि नियतम् ।
१३२. सुखहेतून् इति तत्पुरुषे परवल्लिङ्गतायां साधु । न चायमन्यपदार्थप्रधानो बहुव्रीहिः । अर्थासङ्गतेः । रचनासौष्ठवाय तु वसूनि सुखहेतुभूतानीत्येवं वक्तव्यमिति प्रयोगचणाः ।
१३३. **काष्ठं दार्वित्यमरः** । तेन दारुणीति साधु स्यात् ।
१३४. **कुणपः शवमस्त्रियामित्यमरः** ।
१३५. ध्वनिः पुमान् । तथा चामरः—**शब्दे निनादनिनदध्वनिध्वानरवस्वना** इति ।
१३६. तारका तारकं वेति युज्यते वक्तुम् ।
१३७. मेदश्च मज्जा चेति मेदोमज्जानौ । तयोर्मेदोमज्ज्ञोरिति न्याय्यम् । **सारो मज्जा नरीत्यमरः** ।
१३८. उपसर्गे घोः किरिति क्यन्त उपाधिशब्दः पुमान् ।
१३९. स्याद् गुच्छकस्तु स्तबक इत्यमरः ।
१४०. धर्मशब्दोऽर्धर्चादिषु पठ्यते । अपूर्वे पुंल्लिङ्गः, तत्साधने नपुंसकम् । तत्साधनं यागः । स चेह श्रुतौ विवक्षितः ।

---

१. शवः । २. वर्धते । ३. अल्पं जानासि । बतेति खेदे ।

१४१, इयं नौरियं चार्धनावी यां नौकेति व्यवहरन्ति ।
१४२. न च नरकाण्येव न सन्ति (उदयनः) ।
१४३. स्वगतेनैव कालिम्ना दर्पणं मलिनं यथा । अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।। (मानसोल्लासे विश्वरूपाचार्यः ।
१४४. सा तिथिस्तदहोरात्रं स योगः स च चन्द्रमाः । लग्नं तदेव विख्यातं यत्र संस्मर्यते हरिः ।। (श्रीमद्भागवते)
१४५. अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः (हरि० ३।३।१२, भा० वन० १८८।४२) ।
१४६. गजैर्गजा हयैरश्वाः पादाताश्च पदातिभिः । रथै रथा विमिश्राश्च योधा युयुधिरे नृप (हरि० २।३६।५) ।।
१४७. पिठरं क्वथदतिमात्रं स्वपार्श्वानेव दहतितराम् (पञ्चतन्त्रे) ।
१४८. आश्रमाणि च चत्वारि कर्मद्वाराणि मानद (ब्र० पु० ८८।१४) ।

---

१४१. **अर्धाच्चेति** टच्समासान्तः । परवल्लिङ्गतायां टित्त्वान्ङीपि अर्धनावीति प्राप्नोति, लोकाश्रयत्वाल्लिङ्गस्येति न भवति । अर्धनावम् इत्येव प्रयोगः ।

१४२. नरकशब्दो नपुंसकमिति भ्रमति न्यायाचार्यः ।

१४३. दर्पणशब्द आदर्शेऽर्थे पुंसि रूढः । **रूढेश्चानादरो न युक्तः** ।

१४४. अहोरात्रमित्यत्र नपुंसकत्वं पाणिनीया न सहन्ते । रात्राह्नाहाः पुंसीति भगवत आचार्यस्य शासनं जागर्ति ।

१४५. चतुष्पथा इति न सिध्यति । पथः संख्याव्ययादेः क्लीबतेष्यत इति पुंस्त्वमसाधु । कृतसमासान्तस्य पथशब्दस्योत्तरपदस्य क्लीबतानेन वचनेन विधीयते । चतुर्णां पथां समाहारश्चतुष्पथम् ।

१४६. पदातीनां समूहः पादातम् । **भिक्षादिभ्योऽण्** । **समूहार्थास्तद्धिताः प्रायेण नपुंसके—स्त्रैणम्**, राजकम्, राजन्यकम्, कैदार्यम्, कैदारिकम्, धैनुकम्, हास्तिकम्, इत्यादयो यथा, विशिष्य चाण्णन्ता भैक्षादयः । अमरोऽपि **पादातं पत्तिसंहतिरिति** पपाठ ।

१४७. पिठरशब्दः पुंसि नियतः । तथ चामरः पठति—**पिठरः स्थाल्युखा कुण्डम्** इति । **पार्श्वमस्त्री तयोरध** इति पार्श्वशब्द उभयलिङ्गः ।

१४८. आश्रमशब्दोऽर्धर्चादिषु पठित इति पुन्नपुंसकयोः साधुः ।

१४६. गुडकल्पेयं द्राक्षाऽतितर्पयति रसनाम् ।
१५०. विषामृतयोराकरी जिह्वा ।
१५१ चक्षुर्हि शरीरिणां नेता ।
१५२. अकार्यप्रवृत्तेः शास्त्राङ्कुशं वारयति ।
१५३. अनिष्टकर्मक्षयहेतूनि हि प्रायश्चित्तानि भवन्ति ।
१५४. जाताः स्थलानि सरितः सरितो मरूणि रोधांसि रुद्धवनवेणि-
रयाणि पेतुः (अभिनन्दकृते रामचरिते २५।१६) ।

---

१४६. विभाषा सुपो बहुच् पुरस्तात्तु (५।३।६८) इति सूत्रे तुशब्दोऽव-धारणार्थः । अवधारणार्थस्यास्य तुशब्दस्य त्वन्यदेव प्रयोजनम् । पुरस्तादेव सर्वं यथा स्यादिति । तेन लिङ्गसंख्ये अपि प्राक् प्रत्ययोत्पत्तेः प्रकृत्यवस्थायां ये दृष्टे ते एव स्तः । तेन बहुगुडो द्राक्षा लघुर्बहुतृणं नर इत्यादौ प्रकृतिवल्लिङ्गं भवति । नेदं तुग्रहणस्य प्रयोजनमिति भाष्यकारः । स्वार्थिकोऽयं (बहुच्) । स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते । एवं तर्हि सिद्धे सति यत्तुग्रहणं करोति तज्ज्ञापयत्याचार्यः स्वार्थिका अतिवर्तन्तेपि लिङ्गवचनानीति । तेन गुडकल्पा द्राक्षा तैलकल्पा प्रसन्ना पयस्कल्पा यवागूरित्येतत् सिद्धं भवति । **अयमर्थः—ईषदसमाप्तौ येऽन्ये स्वार्थिकास्तेष्वभिधेयवदेव लिङ्गसंख्ये भवत** इति ।

१५०. खनिः स्त्रियामाकरः स्यादित्यमरवचनादाकरः पुमान् । घ-प्रत्ययान्तोऽयं पुंसि नियतः ।

१५१. चक्षु हि शरीरिणां नेतृ इत्येवं वाच्यम् । उद्देश्यस्य चक्षुषो नपुंसकत्वाद्विधेयस्य नेतृशब्दस्यापि नपुंसकतेष्यते ।

१५२. **अङ्कुशोऽस्त्री सृणिः स्त्रियामि**त्यमरोक्तेरङ्कुशम्पुन्नपुंसकम् । तेन यथास्थितं साधु ।

१५३. हेतुशब्दः पुंसि नियतः । षष्ठीतत्पुरुषश्चायं समासोऽनिष्टकर्म-क्षयादि । परवल्लिङ्गता च द्वन्द्वतत्पुरुषयोः प्रसिद्धेत्यनिष्टकर्मक्षय-हेतव इत्येव साधु । उद्देश्यस्य नपुंसकत्वेऽपि ।

१५४. **अत्र मरूणीत्यत्र क्लीबता दुष्यति दुःखयति च रामचरित-काराद् व्यतिरिक्तान् पठकान्पाठकांश्च** । समानौ **मरुधन्वानौ** । **मरू धन्वधराधरावित्युभयत्रा**मरो मरुं पुमांसमाचष्टे । प्रयोगाश्च यत्र तत्र पुंसि प्रथन्ते ।

१५५. कथमास्ते तमो भानौ कथमास्ते हिमोऽनले (यो० वा० ४।१।२१)।
१५६. द्विविधो भवति प्रष्टा तत्त्वज्ञोऽज्ञोऽथापि च। अज्ञस्याज्ञतया देयो ज्ञस्य तु ज्ञतयोत्तरः॥ (यो० वा० ६ (उ०) २६।३२)।
१५७. भूमिर्धनं श्रमो बुद्धिर्यस्यास्ति सविधे च यत्।
तद् दत्त्वा क्रियतामार्याः पूर्णं भूदानयज्ञकम्॥
१५८. कणं कणं धान्यमितस्ततो बिले चितम्।
१५९. ये चाष्टावश्रयो रत्नं परितो लक्षितास्त्वया (बृ० श्लो० सं० ५।५१)
१६०. तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः (रघु० १५।२३)।
१६१. पार्श्ववर्ती स्नेहपात्रीमपि धात्रीमभीषयत् (शि० भा० ५।२३)।
१६२. रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते।
मेदसोऽस्थि ततो मज्जा मज्जायाः शुक्रमुच्यते॥

---

१५५. **तुषारस्तुहिनं हिमम्** इति कोषाद् हिमं नपुंसकम्।
१५६. अत्र वाक्य उत्तर इति पुंसि प्रयोगो दुष्टः। वस्तुत उत्तरमित्युत्तरवाक्यमित्यर्थे संक्षिप्तं वचः। अनन्तरोक्तं यत्किञ्चिदित्यर्थसामान्ये नपुंसकमिष्यते।
१५७. भूदानयज्ञकम् इत्यत्र नपुंसकत्वं दुःसमाधानम्। स्वार्थेऽत्र कन्। स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्त इति यल्लिङ्गो यज्ञशब्दस्तल्लिङ्ग एव यज्ञको युज्यते। यज्ञशब्दश्च नङ्प्रत्ययान्तः पुमान्।
१५८. कणः कण इत्येव शोभनम्।
१५९. अश्रिशब्द इह पुंसि प्रयुक्तः, स्त्रियां चायं नियतः। **स्त्रियः पाल्यश्रिकोटय** इति चामरः।
१६०. **भुजबाहू प्रवेष्टो दोरि**त्यत्रामरे दोरिति भुजादिभिः पुम्भिः समं पठितम्, तेन दोरपि पुंसि विज्ञायते। विशेषश्च नोक्तः। कविना तु दक्षिणं दोरुद्यम्येत्यत्र द्वितीयान्तं नपुंसकं प्रयुक्तम्। तेन प्रमाद एवायम्।
१६१. स्नेहपात्रीमपि धात्रीम् इत्यत्र **स्नेहपात्रमिति वक्तव्यमवक्तव्यतायै**। अत्राहार्थे पात्रमजहल्लिङ्गम्।
१६२. मज्जेति दुष्टम्। **डाबुभाभ्यामन्यतरस्यामि**त्यनेन डापोऽप्राप्तेः। अन्नन्ताद् बहुव्रीहे र्डाब्विकल्पः। न चायं बहुव्रीहिः।

१६३. कपिध्वजस्य गाण्डीवगाण्डिवौ पुन्नपुंसके (अमरः) ।
१६४. यच्चोपकारकं तदुपकार्यं प्रधानमपेक्ष्य गुणो भवति (न्यासे १।४।५१) ।
१६५. केचिल्लक्ष्मीदरीशब्दौ प्रातिपदिकौ पठन्ति (गणरत्न० पृ० १७३)
१६६. यथा लोके ऋषभस्योपरि ककुदुन्नतं भवति (तै० ब्रा० ३।८।३।३ सायणभाष्ये) ।
१६७. क्वचित्प्रेक्षागेहाः (मोह० १।१०) ।
१६८. वीणावेणू मधुरमधुरे वाद्यमाने च शृण्वन् (मोह० २।११५)
१६९. कन्यारत्नोत्तमोऽसौ (मोह० ३।१२) ।

---

१६३. गाण्डीवगाण्डिवशब्दौ मत्वर्थे व-प्रत्ययान्तौ । पुन्नपुंसके इति प्रथमाद्विवचनमजहल्लिङ्गम् । तेनेदं निर्दुष्टं वचः ।
१६४. गुणः पुमानजहल्लिङ्गश्च । तेनोद्देश्यस्य भिन्नलिङ्गत्वेऽपि न दोषः ।
१६५. प्रातिपदिकाविति दुष्यति । प्रातिपदिकमिति शब्देन पुंसा सामानाधिकरण्येपि स्वं लिङ्गं न जहाति । आचार्योऽपि **अर्थवदधातुरप्रत्ययः प्रातिपदिकम्** (१।२।४५) इत्यत्र तृतीया प्रकृतिः प्रातिपदिकशब्द इति मनुते ।
१६६. ककुदिति दकारान्ता स्वतन्त्रा प्रकृतिर्वेदेऽनेकत्र प्रयुक्ता । सा च स्त्रियां नियतेति कथङ्कारं व्यस्मार्षीत्सर्ववेदभाष्यकारः । स्खलनधर्माणो मनुष्याः ।
१६७. प्रेक्षागेहाः । गेहं नित्यं नपुंसकम् । गृहशब्दस्तु पुम्भूम्नि प्रयुज्यते । गेहशब्दे तु स व्यवहारो नाभ्यनुज्ञायते ।
१६८. वीणा च वेणुश्चेति वीणावेणू । वेणुरिति पुमान् । तथा सति मधुरमधुरे इति क्लीबं विशेषणं कथम् । मधुरमधुराविव्येव साधु ।
१६९. कन्यारत्नोत्तम इत्यत्र न समासो घटते न च पुंस्त्वम् । **कन्या रत्नमिवेति कन्यारत्नम्** इत्युपमितसमासः । उत्कृष्टा कन्येति चार्थः । **जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयत** इत्युक्तेः । एवं सति गडुभूतेनोत्तमशब्देन किम् । असाविति कन्यामभिधत्ते । नात्र पुरुषः कश्चित् प्रत्यवमृश्यते । तेनोत्तमान्तात्प्रातिपदिकात्

१७०. त्रिदशतरुमधोः श्रौतवाचां च सेकः (करुणा० ६४)।
१७१. रमाशती क्षीरनिधेः सुतेव (मोह० ५।३३)।
१७२. ज्ञानासिना नहि हता यदि मोहतन्त्रा (मोह० ८।१२)
१७३. असत्यशेषोहि पदार्थजातः (मोह० ८।४)।
१७४. धेनून् नागतुरङ्गमांश्च बहुशः शालासु बद्धान् (मोह० ६।४)।
१७५. मुञ्चे मगधाचारं प्रमाणा यदि ते वयम् (भा० वन० १७१।१७)।
१७६ गभस्तिभिः प्रदीप्ताभिः संशोषयति सागरान् (हरि० ३।६।१)।

---

स्त्रियां टाप् कुतो न। **सर्वमिदमाकुलम्। न चेह किञ्चिदनाकुलम्।**

१७०. त्रिदशतरुमधोरित्यत्र मधुशब्दः पुष्परसवचनः पुंसि प्रयुक्तः। नपुंसकं चायमिति नाविदितं विदुषाम्।

१७१. रमाशती त्यत्र स्त्रीत्वं दुर्लभम्। शतशब्दो हि लोक वेदयो नपुंसकत्वे रूढः। रमाणां शतम् इति विग्रहे षष्ठीसमासे स्त्रीप्रत्ययो दुर्लभः। नैष द्विगुः, येन **द्विगोरिति** ङीप् स्यात्। अद्यत्वे हिन्द्यां स्त्रीत्वे शतीति व्यवहारः। **हन्त गड्डरिकाप्रवाहमनुपतितः कविः।**

१७२. मोहतन्त्रा इत्यत्र तन्त्रं नपुंसकमिति लिङ्गानादरः। षष्ठीसमासोऽयं न बहुव्रीहिः।

१७३. पदार्थजात इत्यत्र पुंस्त्वं किमपि दुनोति चेतः सचेतसाम्। **लोकतन्त्रं लिङ्गं न प्रयोक्तुरायत्तम्।** लोकस्तु समूहे जातशब्दं नैयत्येन नपुंसकत्वे प्रयुङ्क्ते।

१७४. धेनून् इत्यत्र पुंस्त्वे धेनुशब्दप्रयोगो मनोऽस्वास्थ्यं गमयति प्रयोक्तुः। स्वस्थचेतास्तु नैवं प्रयुञ्जीत।

१७५. प्रमाणशब्दो भाजनादिवदजहल्लिङ्गं नपुंसकम्। तेन प्रमाणं यदि ते वयम् इत्येवं वक्तव्यम्।

१७६. गभस्तिः पुंसि नियतः। मरीचिः स्त्रीपुंसयोः। दीधितिः स्त्रियाम् इत्येतौ वर्जयित्वा सर्वे किरणवाचकाः शब्दाः पुंसि नियताः।

१७७. इत्येषा द्वयोर्विशोका विषयवती अस्मितामात्रा च प्रवृत्तिर्ज्योतिष्मतीत्युच्यते (यो० सू० भा० १।३६)।

१७८. यावन्ति विष्वक्तेजांसि सिद्धरूपगुणानि च । नेत्रातिथीनि तावन्ति (स्कन्द० का० ४)।

---

१७७. **मात्रं कार्त्स्न्येऽवधारणे** इत्यमरान्मात्रं (समासान्ते वर्तमानं) नित्यं क्लीबम्। यथा ऋगेव ऋङ्मात्रम्। कृत्स्ना मनुष्या मनुष्यमात्रम्।

१७८. **अतिथि र्ना गृहागत** इत्यमरः। विषयभावगतोऽर्थ इति गौणेऽर्थेपि नातिथिशब्दः स्वं लिङ्गमतिहास्यति।

## इति लिङ्गविवेचनं समाप्तम्।

# अथ प्रकीर्णकम्

१. त्वमसि करुणागाधपय:पयोनिधि: । अभ्युपपद्यस्व[1] न: ।

२. मूषका: स्वतीक्ष्णदन्तै: कपोतानां पाशानच्छिन्दन् ।

३. मान्यास्ते मातापित्रध्यापका: ।

४. बङ्गस्य श्रीचित्तरञ्जनं को न वेद वदान्यम् ।

५. तस्य नेतृत्वे समागता भूयांसो जना: कर्मठा:[2] कर्माश्चर्याणि चक्रिरे ।

६. इह लोकेऽहिंसया कथं शान्ति: संभवा स्यादिति चोदयन्ति लौकिका अदृष्टसतत्त्वा: [3] ।

७. द्वित्राणि स्वनिबन्धानां मे प्रेर्याणीति विज्ञप्ति: ।

---

१. करुणैव पय इति करुणापय: । मयूरव्यंसकादि: । करुणापयसां पयोनिधिरिति करुणापय:पयोनिधि: । स चागाध इति अगाध-करुणापय.पयोनिधिरित्युचितं वक्तुम् ।

२. तीक्ष्णै: स्वदन्तैरिति वक्तव्यम् । उक्तो हेतु: समासविवेचने ।

३. नायमृकारान्तानां समास इत्यानङ् नेत्यदोष: ।

४. बङ्गानामिति साधु स्यात् । बाङ्गकमिति तूच्यमानं साधीय स्यात् । पूर्वत्र बङ्गानां (क्षत्रियाणां) निवासो जनपदो बङ्गा: । उत्तरत्र अवृद्धादपि बहुवचनविषयादिति शैषिको वुञ् ।

५. तं नेतारमाश्रिता इति तन्नेत्रा इति वा वक्तव्यम् । अत्र नेतृ-पर्यायो नेत्रशब्द: । इयमेव संस्कृतभाषितभङ्गि: ।

६ शान्ति: संभविनीति वक्तव्यम् । संभवनं संभव: । ऋदोरप् । सोऽस्या अस्तीति संभविनी ।

७. द्वित्रशब्द: संख्येय एव वर्तते न तु संख्यायाम् । तेन द्वित्रा: स्व-निबन्धा मे प्रेर्या इति विज्ञप्तिरित्येवं विपरिणमय्य वक्तव्यम् ।

---

१. अनुगृहाण । परित्रायस्वेत्यर्थ: । २. कर्मशूरा: । अदृष्टवस्तुस्वरूपा: । तत्त्वसतत्त्वशब्दौ समानार्थकौ ।

८. न हि पथभ्रष्टः कश्चिद् गन्तव्यं स्थानं गतः ।
९. हितं सम्पादयेन्नृणां मनोवचनकर्मणा ।
१०. अक्षुषां गोचरो नाऽयं बुद्धेश्च विषयो न च ।
११. विनाशः परिवर्तनमिति सर्गनिसर्गः ।
१२. अहोऽस्मि परमप्रीतो यस्य मे तादृशः सुतः ।
१३. अविनश्वराऽऽकल्पान्तस्थायिनी कीर्तिरस्य महात्मनो भविष्यति ।
१४. अत्रार्थे किमप्युपष्टम्भकं प्रमाणं नोपलभामहे ।
१५. निर्गुणे निरञ्जने परब्रह्मणि गुणान् विशेषांश्च कल्पन्ते मन्दाः ।
१६. यदस्य जीवितध्येयं तन्नायं विस्मरेत् ।
१७. किमित्यज्ञवदनुकुरुषे परेषाम् । सदसती विविच्य प्रवर्तस्व ।

---

८. न हि पथिभ्रष्टः कश्चिदित्येवं वक्तव्यम् । यदि नाम पथशब्दोऽप्यस्तीत्याग्रहस्तर्हि यथान्यासमेवास्तु ।

९. मनोवचनकर्मभिरित्येवं वक्तव्यं मनसा वाचा कर्मणा चेति वा । पूर्वत्र समाहारस्तु नेष्टः, पृथगात्मताया अभिव्यक्तेरिष्टत्वात् ।

१०. चक्षुषामिति बहुवचनमपार्थकम् । चक्षुषोर्गोचर इत्येव साधु । एकत्र गोचरशब्दप्रयोगोऽपरत्र विषयशब्दप्रयोग इति वैषम्य सहृदयमाकुलो करोति ।

११. विनाशः परिवर्तनं चेति वक्तव्यम् । अत्र चकार उपेक्षितः, स दोषः ।

१२. अहो अस्मीति साधु । ओत् इति प्रगृह्यसंज्ञायां प्लुतप्रगृह्या अचि नित्यमिति प्रकृतिभावः ।

१३. अविनश्वरीति वक्तव्यम् । इण्नशजिसर्तिभ्यः क्वरप् । टिड्ढाणञ् इत्यादिना ङीप् ।

१४. उपस्तम्भकमिति वक्तव्यम् । मूर्धन्यादेशस्याप्रसङ्गात् ।

१५. कल्पयन्तीति ण्यन्ताल्लटि साधु स्यात् । कृपू सामर्थ्ये इत्यकर्मक एष धातुः ।

१६. यदर्थमयं जीवेत्तन्नायं विस्मरेत् । योऽस्य परमः पुरुषार्थस्तं नायं विस्मरेत्, इह (लोके) यदस्य लक्ष्यं तन्नायं विस्मरेदिति वा वक्तव्यम् ।

१७. अनुकरोषीत्येव साधु । अनुपराभ्यां कृञ इति परस्मैपदम् ।

१८. यत्त्वं प्रास्तौषीस्तन्नाहमनुमोदे ।
१९. यज्ञदत्तः षोडशवर्षां गुण्यामात्मसदृशीं कन्यामुपायत ।
२०. स पापो यः परकीयमर्थं गृध्यति ।
२१. अस्मभ्यं तु न किमपि प्रतिभाति ब्रह्मणो विनेति रूढिसाधवः[1] ।
२२. दण्डस्य हि भयात्सर्वं जगद् भोगाय कल्पते ।
२३. त्रिपाद् गायत्री भवति न तु चतुष्पात् ।
२४. तातं क्षमां प्रार्थयित्वा लघयति स्वमागः[2] कुमारः ।
२५. अनुक्तमप्यूहति पण्डितो जनः ।
२६. अद्यतनीयाः पण्डितमानिनः केचन शिष्टजुष्टां वाग्वर्तनीं व्यतिक्रामन्ति न च तत्र दोषं पश्यन्ति ।

---

१८. **स्तुसुधूञ्भ्यः परस्मैपदेषु** इति नित्यमिट् प्रास्तावीदित्येव साधु ।
१९. उपायतेति साधु । **विभाषोपयमने** इति वा सिचः कित्त्वेऽ**नुदात्तोपदेशवनतितनोत्यादीनाम्**इत्यादिनाऽनुनासिकलोपः । पक्ष उपायंस्तेत्यपि ।
२०. गृधु अभिकाङ्क्षायामिति धातुरकर्मक इति प्रसाधितं वाग्व्यवहारादर्शे धातुस्वरूपविवेचने, तेन परकीयेऽर्थे गृध्यतीति वक्तव्यम् ।
२१. प्रतिभातियोगे द्वितीया भवति यथा यावद्योग इति **दुर्घटवृत्तिकारः** । अस्मांस्तु न किमपि प्रतिभातीत्येवं वक्तव्यम् । भातीति वोपसर्गपरिहारेण । अस्माकमिति च शेषे षष्ठी प्रयोज्या ।
२२. **पञ्चमी भयेने**ति समाससूत्राल्लिङ्गाद् भयशब्दयोगे पञ्चमीष्टा । तेन दण्डाद्भयादित्येव साधु । एवं भीषाशब्दयोगेऽपि पञ्चमी । यथा—**भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्चं मृत्युर्धावति पञ्चमः** (तै० उ० २।८) ॥
२३. **टाबृचीति** पादन्ताट्टापि त्रिपदा गायत्री भवति न तु चतुष्पदेति वक्तव्यम् ।
२४. **समासेऽनञ्पूर्वे क्त्वो ल्यप्** इति प्रार्थ्येति साधु ।
२५. ऊह वितर्के इत्यनुदात्तेत् । तेन ऊहत इति वक्तव्यम् ।
२६. अद्यतना इत्येव साधु । **सायं चिरं प्राह्णे प्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् चे**ति ट्युल् प्रत्ययस्तुडागमश्च । छप्रत्ययस्य तु प्रसङ्ग एव नास्ति ।

---

१. रूढ्या साधवः । येषां साधव इति प्रसिद्धिः । ये तापसव्यञ्जनाः ।
२. आगोऽपराधः । सकारान्तं प्रातिपदिकं क्लीबम् ।

२७. युधिष्ठिरः श्रेष्ठतमः कुरूणाम् ।
२८. वापीकूपतटाकादिभिरलंकृता सुपथीयं नगरी किमपि रामणीयकं धत्ते ।
२९. अहिंसयैव वार्या आक्रन्तारः शत्रव इति श्रीगान्धी स्माह ।
३०. उषः पुत्रि ! चिरायुषी भूयाः, सुखं च जीव्याः ।
३१. व्यापारेण विदेशेषु यथेष्टं वित्तमुपार्ज्य पात्रेषु प्रतिपादयेत्[1] ।
३२. आत्मनिर्भरा लोकाः प्रसीदन्ति सीदन्ति चेतरे ।
३३. प्रेम्णः पयः पायं पायं रमन्ते चिराय प्रजाः ।
३४. अपाङ्गानामशक्तानमेव गवां रक्षणं गोरक्षा न भवति ।
३५. परनिन्दयैव रिक्तं कालं यापयन्ति केचिदधन्याः ।

---

२७. यदा प्रकर्षवतामपि प्रकर्षो विवक्ष्यते तदाऽऽतिशायिकादपर आतिशायिकः प्रत्यय इष्यत इति श्रेष्ठतम इत्यदुष्टम् ।
२८. ननु **इनः स्त्रियामिति** कपः प्रसङ्गः । शोभनाः पन्थानोऽस्यां नगर्यामिति सुपथिकेति स्यात् । **न पूजनादिति** निषेधस्तु षचः प्राचीनानामेव । कप्प्रत्ययस्तु षच उत्तरः । सत्यम् । समासान्तविधेरनित्यत्वात्समाधेयम् । युवोरनाकौ इति सूत्रे **सुपथीति भाष्याच्च** । सुपथीति रूपं च स्त्रियां नान्तलक्षणे ङीपि भत्वाट्टिलोपे सिद्धम् ।
२९. क्रमेरुदात्तत्वादिटि आक्रमितार इति साधु ।
३०. चिरायुर्भूया इत्येव साधु । स्त्रीप्रत्ययानां ङीप्ङीष्ङीनामप्राप्तेः । अदन्तात् तद्विधेः ।
३१. वणिग्व्यापारेणेति वक्तव्यम् । व्यापारशब्दः केवलो वाणिज्यं नाह ।
३२. आत्मावलम्बाः स्वाश्रया इति वा वक्तव्यम् । निर्भरशब्दस्तु नात्रार्थे क्वचित्प्रयुक्तपूर्वः ।
३३. प्रेमपय इति वक्तव्यं समस्तेन व्यस्तेन वा रूपकेण । षष्ठ्या तु नार्थः ।
३४. अपाङ्गशब्दो नेत्रप्रान्ते रूढः । **रूढिर्योगापहारिणीत्यपाङ्गशब्दो बलान्नेत्रप्रान्तं स्मारयति** । तेन न्यङ्गानामिति वक्तव्यम् ।
३५. रिक्तमित्यनुक्त्वाऽनुपयुक्तमनुपयोगं निर्व्यापारमिति वा वक्तव्यम् ।

---

१. वितरेत् ।

३६. साङ्ख्ये मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृति विकृतिः पुरुषः। इत्येवं पञ्चविंशतिः पदार्थव्यूहः।

३७. स वै श्वश्रुरात्मजाया य इमां शिक्षया रहयति।

३८. यदाऽयं गाढनिद्रायां शेते तदा न किमपि बाह्यं स्मरति।

३९. मया मौखिकमुत्तरितः प्रश्नः, तेन प्रासदन्प्राश्निकाः।

४०. लोकमान्यस्य गाङ्गाधरेः श्रीबालस्यादर्शचरितं कस्य नानुकरणीयम्।

४१. केचिदनात्मज्ञाः पाकिस्तानस्था भारतं युद्धभयं दर्शयन्ति।

४२. अनपत्यो नृपतिः शुचा परीतो राज्ञीमाह—यत्तया राज्यहिताय कश्चिद्बालो दत्तक इति स्वीकार्यः।

---

३६. पञ्चविंशक इति तु वक्तव्यम्। पञ्चविंशतिस्तत्त्वानि परिमाणमस्य पदार्थव्यूहस्येति विग्रहः। **तदस्य परिमाणमिति** ठञि प्राप्ते विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायामिति ड्वुन्। प्रातिपदिकग्रहणे तदन्तस्याग्रहणमिति पञ्चविंशतेर्न प्राप्नोतीति मास्म शङ्कि। प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति इष्ट्या भविष्यति।

३७. योऽनया शिक्षां रहयति (त्याजयतीत्यर्थः) इति वक्तव्यम्। रह त्यागे चुरादिष्वदन्तः।

३८. यदाऽयं गाढं निद्रातीति वक्तव्यम् गाढया निद्रया शेत इति वा। तत्रेत्थम्भूतलक्षणे तृतीया ज्ञेया। शेते इति च निपद्यत इत्यनेन समानार्थकम्। यथा शयाना वर्धते दूर्वेत्यत्र।

३९. मया मुखेनोत्तरितः प्रश्न इति वक्तव्यं मया वाचा प्रत्युक्तः प्रश्न इति वा। तद्धितवृत्त्या नार्थः।

४०. श्रीबालस्यानुत्तमं चरितमिति वक्तव्यम्। आदर्शो मुकुरो भवति। तेन श्रीबालस्य चरितं लोकस्य लोकचरितस्य वाऽऽदर्श इति वक्तव्यम्। आदर्श इवादर्शः।

४१. दृशेश्चेति वक्तव्यमिति णिच्यणौ कर्तुः कर्मत्वम्। अभिवादिदृशोरात्मनेपद इत्यात्मनेपद एव विकल्पः। दर्शयन्त इति च वक्तव्यम्।

४२. यत्परमभिसम्बोध्याभिधीयते तत्र युष्मच्छब्द उपपदमुपतिष्ठते (मध्यमश्च पुरुषोनुप्रयुज्यते) **इति संस्कृतस्वालक्षण्यम्**। तेन त्वया राज्यहितायेत्यादि वक्तव्यम्।

४३. कश्मीरो नाम जनपदो भूशेखरायमाणो विधातुरुत्तमः सर्गः ।

४४. अतीतान्मासत्रयात्प्रवृत्तस्य मिश्राङ्गलदेशयोः कलहस्य नाद्याप्युपशमः ।

४५. ये नाम विरला हिन्दवः पाकिस्थानेऽवशिष्टास्तेपि यत्नेन विष्ठाप्यन्ते[1] तत्रत्यैरधिकारिभिः ।

४६. देवदत्ताया द्वे सुते, सुकन्या च सुरुचिश्च । तयोः सुरुचिर्विदुषीतरा ।

४७. अस्या गमने मुहूर्तमन्तरायो भवन्त्या त्वया ममेष्टमाचरितम् ।

४८. विश्वजनीनाः का अपि मर्यादाः पुरातन्य इत्येव तासां ध्वंसाय मा स्म पराक्रामत ।

---

४३. कश्मीरा नाम जनपद इत्येवं बहुत्वे कश्मीरशब्दः प्रयोज्यो व्यवहारं चेदनुविधित्ससे । **लक्षणैकचक्षुष्को** मा स्म भूः ।

४४. अतीतं मासत्रयं प्रवृत्तस्येत्यादि वाच्यम् । अत्यन्तसंयोगे द्वितीयैव साध्वी । मासत्रयं स्वयं निर्मितः कालोऽस्ति न तु यतः कालनिर्माणम् । यतः कालनिर्माणे च पञ्चमीष्यत इति पञ्चम्या अप्रसङ्गः ।

४५ प्रस्थाप्यन्ते तत इति **वक्तव्यम्** । विष्ठापयतिस्तु विशिष्टं स्थापनमाह ।

४६. विदुषितरेति वाच्यं विद्वत्तरेति वा । **उगितश्चेति** ह्रस्वविकल्पः । ह्रस्वाभावपक्षे **तसिलादिष्विति** पुंवत्त्वम् ।

४७. अन्तरायेण भवन्त्या त्वयेति **वक्तव्यम्** । प्रातिपदिकार्थे प्रथमा तु नेह युज्यते ।

४८ विश्वजनेभ्यो हिता इति विश्वजनीनाः । **आत्मन्विश्वजनभोगोत्तरपदात्खः** । **उपपराभ्यामित्यनेन** सर्गेर्थे परापूर्वात्क्रमेरात्मनेपदमेव साधु । तेन मा स्म पराक्रमध्वमिति **वक्तव्यम्** ।

---

१. प्रस्थाप्यन्ते, बहिष्क्रियन्ते निर्वास्यन्त इत्यर्थं विवक्षति ।

४६. वसिष्ठद्वेषिणी चैषा ऋक्, अहं च वसिष्ठगोत्रीयस्तस्मान्नैनां व्याख्यास्ये। (निरुक्ते दुर्गः)

५०. कियन्तो बन्दिनोऽस्यां कारायाम् ?

५१. अहं हि तं धर्ममुत्सृजेयं योऽस्पृश्यतां शूद्राणां शिष्यात्।

५२. अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः।

५३. त्रयोऽपि सखायः सहोदराणामिव प्रीतिमन्त ऐक्यमैकार्थ्यं च गताः सुखं संवसन्ति।

५४. गभीरमपीदं जलाशयं प्रसादादुत्तानमिव भाति।

५५. समानेप्युद्योगे फलं विपरीयते। तत्कुतः।

५६. यः सुनोत्युत्पादयति सकलं जगत्स सविता।

५७. न हि धीरान् विपदः पराभवन्ति।

---

४६. वासिष्ठो गोत्रेणेति वा वसिष्ठेन सगोत्र इति वा वक्तव्यम्। गोत्रान्ताच्छस्य तु प्रसङ्ग एव न।

५०. संयतेऽर्थे बन्दिरिति बन्दीति च प्रयुज्येते स्त्रियां नियत[illegible]। कियत्यो बन्दयः कारायामिति वक्तव्यम्। पु[illegible] स बन्दिरिति बन्दीति वोच्यते स्त्रीलिङ्गेन।

५१. तमाम्नायं वा संप्रदायं वोत्सृजेयमिति युक्तं वक्तुम्।

५२. मामिकेति तु साधु। **केवलमामकभागधेये**त्यादिना छन्दसि स्त्रियां ङीब्विधीयते। मामकशब्दश्चाणन्त इत्यणन्तत्वादेव सिद्धेस्तद्ग्रहणं नियमार्थम्। तेन भाषायां ङीब्न।

५३. सहोदरा इवेति वक्तव्यम्। षष्ठ्या नार्थः।

५४. गभीरोऽयं जलाशय इति वक्तव्यम्। जलाशयः पुमान्।

५५. विपरीयत इति विपरिपूर्वाद् ईङ् गतवित्यस्माद्दिवादेः कर्तरि लटि रूपम्।

५६. षुञ् अभिषवे। अभिषवः स्नानं सुरासन्धानं च। तेन सुनोत्युत्पादयतीति यदुक्तं तन्न साधु। सवितृशब्दश्च षू प्रेरणे इति तुदादेः परस्मैपदिनो व्युत्पाद्यते। सुवति लोकं कर्मणीति सविता।

५७. प्रायेण पराभवतिरकर्मको दृष्टः। तेऽसुरा हेलयो हेलय इति कुर्वन्तः पराबभूवुरित्यत्र भाष्ये तथा दर्शनात्। परिपूर्वस्तु सकर्मकः। तेन विपदः (कर्त्र्यः) परिभवन्तीति वक्तव्यम्।

५८. परितः पतन्ति दुष्कृतां विपदः ।

५९. ग्लास्नु[1] हि प्रायेण परिग्लायति मधुरादभ्यवहारात् ।

६०. क्षीरस्रुतिविरतये प्रसूतायाः कुचाग्रयोरौषधविशेषं लिम्पेत् ।

६१. राजा च प्रजाश्च द्वावपि स्वस्वकर्मसु स्वतन्त्राः ।

६२. यदि भिषङ्नामौषधमेव जानाति निर्मातुं तदा भिषजाभिषजोः को विशेषः ?

६३. तदानीमयं नो देशः सुवर्णमयोऽर्थात्सम्पत्तिशाली बभूव ।

६४. विद्याभ्यासेऽस्य प्रशस्यः पुरुषार्थो वर्णितः[2] ।

---

५८. **अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि** इति परितोयोगे द्वितीयैव साध्वी । तेन दुष्कृत इति वक्तव्यम् ।

५९. परिग्लायति मधुरायाभ्यवहारायेति वक्तव्यम् । **पर्यादयो ग्लानाद्यर्थे चतुर्थ्या** इति समासविधानाल्लिङ्गाच्चतुर्थ्येव साधुः ।

६०. कुचाग्रे औषधविशेषेण लेपयेत् इत्येवं वक्तव्यं णिचा । अणौ तु औषधविशेषः कुचाग्रे (द्वितीया द्विवचनम्) लिम्पतीति प्रयोगः । लिप उपदेह इति धातुस्तस्येदृशो व्यवहारः । लिम्पतीव तमोऽङ्गानीतिवत् ।

६१. द्वयेऽपि, उभयेऽपीति वा वाच्यम् । द्वयमिति चोभयमिति च स्वभावत एकत्वे बहुत्वे च प्रयुज्येते । द्विशब्दस्तु द्वित्वाविष्टां संख्यामाह । बहवश्च ते राजा च प्रजाश्च ।

६२. भिषगभिषजोरिति वक्तव्यम् । **चोः कुरिति** कुत्वे **झलां जशोऽन्त** इति जश्त्वे च निर्दिष्टं रूपं साधु ।

६३. सुवर्णमयः सम्पत्तिशाली वाऽऽसीदिति वक्तव्यम् । **अर्थादिति पञ्चम्यन्तं मध्येवाक्यं पदान्तरेणानन्वितं न प्रयोगमर्हति** । नायं संस्कृतवाग्व्यवहारः ।

६४. पुरुषस्यार्थः प्रयोजनमिति व्युत्पत्त्या पुरुषार्थशब्दो धर्मार्थकाममोक्षाणामन्यतममाह । ते धर्मादयश्चतुर्वर्ग इत्युच्यन्ते । मोक्षवर्जं च त्रिवर्ग इति । मोक्षश्च परः पुरुषार्थ इत्याख्यायते । **पौरुषं तु नायं पुरुषार्थशब्दः कदाचिदाचष्टेऽन्यत्र हितोपदेशात्** । तस्मात् पुरुषकार उद्योगोऽभियोगो वेति वक्तव्यम् ।

---

१. रुजा ग्लानः क्षीण उच्यते ।  २. ब्रह्मचारिणः ।

६५. द्वाः स्थ[1] ! कमप्यागन्तुकमन्तरेतुं मा स्म दिक्षः ।
६६. चतुर्दशोत्तरैकोनविंशतिशतमिते ख्रिस्तवत्सरे विश्वं व्याप्नुवन्भीषणः सम्परायः प्रावर्तत ।
६७. भोः पुरोहित ! वैतरणीतरणार्थं दत्ता गौरद्यापि त्वदन्तिके तिष्ठति । न जाने जनको मे कति वारान् वैतरण्यां निमग्नोमग्नोऽभविष्यत् ।
६८. इमे श्लोकाः प्रक्षिप्ता इति यदात्थ तत्कथं जानासीति पृष्टोऽसौ जोषमभजत् ।
६९. तेषामियती विद्या नास्ति यया सत्यात्ये विवेक्तुं प्राभविष्यन् ।
७०. बहिः सन्नर्थः प्रत्यक्षं भवति न त्वन्त इत्यभिमन्यते ।
७१. उत्तरेण मे निकेतनं काञ्चनी वासयष्टिरित्युपलक्षय ।
७२. न संमुखमुपागतं शरणवाञ्छया दूरये ।

६५. कस्मा अप्यागन्तुकायेति वक्तव्यम् । अत्र तुमुन्प्रयोगविषये पुरस्ताद् विस्तरशो निगदितमिति नेह भूयो वितायते ।
६६. चतुर्दशोत्तरेष्वेकोनविंशतौ ख्रिस्त-वत्सरशतेष्विति वक्तव्यम् । अन्यथा एकोनविंशत्यधिकं शतमिति मध्यमपदलोपिसमासः स्यात्, अर्थश्च विपरीयात् । एकोनविंशतिशतीति द्विगुर्वा स्यात् ।
६७. भवेदिति तु वाच्यम् । लिङ्निमित्ते लृङ् ङनुशिष्टः क्रियातिपत्तौ गम्यमानायाम् । हेतुहेतुमद्भावश्च लिङो निमित्तम् । स चेह नास्तीति कुतो लृङोऽवसरः ।
६८. जोषमिति तूष्णीमित्यर्थे पठितम्, मौनं तु नाह, येनाभजदित्यनेनान्वियात् । **जोषमिति मकारान्तमव्ययम्** ।
६९. प्रभवेयुरित्येव साधु । हेतुहेतुमद्भावो लृङो निमित्तम् । हेतुहेतुमद्भावश्च शब्दोक्त इष्यते न त्वार्थिकः । स चेह नास्तीति लृङोऽविषय एषः ।
७०. अन्तर् इत्यभिमन्यत इत्येव साधु । **अन्तरिति रकारान्तमव्ययम्** । तेन रुत्वयत्वयलोपानामप्रसङ्गः ।
७१. नित्यं वृद्धशरादिभ्य इति मयटा भवितव्यम् । क्वचिदुत्सर्गा अपवादविषयेऽभिनिविशन्त इत्यणि काञ्चनीति साधु ।
७२. **णाविष्ठवद्बहुलमिति** बहुलग्रहणात्क्वचिदिष्ठवद्भावो न । तेन दवयामीत्यस्य प्रसङ्गे क्वचिद् दूरयामीत्यपि ।

१. दौवारिक ।

७३. मौहम्मदा अकारणमेव हिन्दूनद्विषुः ।

७४. महार्घता पिशाची मुखं व्यादाय निगलितुमिवोपधावति ।

७५. अवसितं नो नगरे कृत्यम्, सम्प्रति ग्रामं गन्तुमुपक्रम्यामहे[1] ।

७६. इदमभ्युपेयं भवति न खलु दैवानुग्रहादृते सिध्यन्ति कर्माणि यत्नारब्धान्यपीति ।

७७. अद्य ह्यो वा प्रातः शाकमभुञ्ज्महीति न सुष्ठु स्मर्यते ।

७८. मन्ये मूर्तिमदस्य पापजातं समुदस्थीयत[2] ।

७९. अयं श्रुतपूर्वी भारतम्, तेनाऽस्य विदिता वृत्तान्ताः कुरुपाण्डवानाम् ।

८०. सेयं सेव्यतां सुधीभिः सुरसरिदिव पावना देववाणी ।

---

७३. **द्विषश्चे**ति लङो झेर्जुसीति साधु । पक्षेऽद्विषन्निति रूपम् ।

७४. निगलितुमिति वा निगलीतुमिति वा वक्तव्यम् । तुमुनि इटि गुणो दुर्वारः । **ग्रोऽचि विभषे**ति पाक्षिकं लत्वम् । **वृतो वेतीटो** वा दीर्घः ।

७५. **प्रोपाभ्यां समर्थाभ्यामि**ति क्रमेरात्मनेपदं साधु । शपः श्यन्वा ।

७६. अभ्युपेयमित्यस्य साधुत्वमभिशङ्क्यते । **एतिस्तुशास्वृदजुषः क्यप्** इतीण गतावित्यस्मात्क्यपा भवितव्यम् । सत्यम् । ईङ् गतौ दैवादिकाद्यत् ।

७७. अनद्यतने लङ् इत्यत्रानद्यतने इति बहुव्रीहिः । अविद्यमानोऽद्यतनो (कालः) ऽस्येति विग्रहः । अत्र तु व्यामिश्रः कालः, अद्यतनानद्यतनयोर्व्यतिकरात् । तेनात्राभुक्ष्महीत्येव वाच्यम् ।

७८. समुदस्थादिति वक्तव्यम् । चेष्टाया अभावादात्मनेपदं न । कर्तरि समुदस्थीयतेति रूपमनुपपाद्यम् ।

७९. पूर्वं श्रुतमनेति श्रुतपूर्वी । **सपूर्वाच्चेतो**निः । इनिरयं तद्धितः । तद्धितप्रत्ययेनानुक्ते कर्मणि द्वितीया ।

८०. पावनी देववाणीति वक्तव्यम् । पूञ् पवने इत्यस्माण्ण्यन्ताल्ल्युप्रत्यये पावनमिति निष्पद्यते । पावयतीति पावनम् । **पावनशब्दो गौरादिषु पठ्यते** । ततो ङीषि पावनीति शब्दरूपनिष्पत्तिः ।

---

१. आरभामहे । २. उत्थितम् उदितम् ।

८१. ऋचया यदुक्तपूर्वं तदेव साम्नोच्यते ।
८२. न पठेद्यावनीं भाषां प्राणैः कण्ठगतैरपि ।
८३. अप्यन्तराणार्य ?
८४. विराडादिशब्दानां सन्ति मुख्यार्थाः सन्ति च गौणाः ।
८५. यदमात्याः कर्तव्यं निर्दिशन्ति तत्रौमिति ब्रूमः ।
८६. दुर्लभां मानुषीं तनुमत्रवार्य दुष्कृतं करोषि, हा हतोऽसि ।
८७. भीतो बालः क्व मेऽम्बेति पृच्छत्यन्तिकादतिक्रामन्तमागन्तुम् ।
८८. दृष्टिपूतं न्यसेत्पादम् । (मनु० ६।४६)
८९. बहुव्रोहिरिवान्यपदार्थप्रधानैरर्थवादैनर्थिः ।
९०. जीवानां व्यामोहयितरि परमेश्वरे 'शैताने' च को विशेषः ?

---

८१. ऋचेति वक्तव्यम् । आपं चैव हलन्तानामित्यापि 'ऋचा' इति सिध्यति नाम, प्रयोगस्त्वस्य न दृश्यते लोकवेदयोः ।
८२. प्राणैः कण्ठगतैरित्यत्र इत्थम्भूतलक्षणे तृतीया वेदितव्या । कण्ठगतैः प्राणैरुपलक्षित इत्यर्थः ।
८३. **आनि लोट्** इत्युपसर्गात्परस्य लोट्-सम्बन्धिन आनेर्नस्य णत्वम् । **अन्तःशब्दस्याङ्किविधिणत्वेषूपसर्गत्वं वाच्यम्** इत्यन्तर् इत्युपसर्गः । अपिः प्रश्ने ।
८४. विराडादिशब्दानामित्येव साधु । **व्रश्चभ्रस्जे**त्यादिना षत्वे जश्त्वे च रूपसिद्धेः ।
८५. तत्रोमिति ब्रूमः । **ओमाङोश्चेति** पररूपमेकादेशः । ओमित्यङ्गीकारेऽव्ययम् ।
८६. अवधारणं निश्चयनं भवति । तेनावमपास्य विमुपसृज्य विधार्येति वक्तव्यम् ।
८७. **दूरान्तिकार्थेभ्यो द्वितीया चे**ति चकारात् पञ्चमी ।
८८. न्यस्येदिति तु वक्तव्यम् । असु क्षेपण इति दिवादिषु पठितम् । गणकार्यमनित्यमित्येवं समादधति स्थितस्य गतिं चिन्तयन्तः ।
८९. बहुव्रीहिणेवान्यपदार्थप्रधानैरित्यादिरुपन्यासोऽदोषः । अत्रोपमानोपमेययोर्वचनभेदः सचेतसामुद्वेगकरो नेत्यदोषाय ।
९०. व्यामोहयितुः परमेश्वरस्य शैतानस्य चेति वक्तव्यम् । भेदे षष्ठीव्यवहार एव प्रतिष्ठितः ।

९१. अवकरस्यावस्करस्य च विशेषं चेद्वेत्थ, शब्दविदसि नूनम् ।
९२. विकर्तन[1] कुलालङ्काराणां प्रथितप्रख्याणां भुवनविजित्वराणां रामादीनां वंश्या वयम् ।
९३. न वयं परिस्थितेर्यथेष्टमीश्महे, तद्वशगा एव वयं बहुश इति वृद्धाः ।
९४. या तत्र नौ सम्भाषाऽभून्न तस्याः सम्प्रत्युपतिष्ठति विषयः स्मृतौ ।
९५. भाषा हि व्यवहारस्य एकतमं साधनम् ।
९६. संस्कृतस्याध्ययने लेखनेऽभ्यसने चानल्पं प्रयोजनमिति प्रायेण प्रतिपद्यन्ते लौकिकाः ।
९७. स्वार्थानुसन्धिपरो लोक आकाशपातालमेकी करोति ।

---

९१. संकरोऽवकरः । ॠदोरप् । **वर्चस्केऽवस्कर** इति पाणिनीयेऽवस्कर इत्यत्र सुट् निपातितः । प्रत्ययस्त्वबेव । **उच्चारावस्करौ शमलं शकृत् । पुरीषं गूथं वर्चस्कमित्यमरः ।**
९२. चक्षिङः ख्याञ् इति क्शादिरयमादेशः । ख्शञः शस्य यो वेत्युक्तम् । तच्चासिद्धकाण्डे द्रष्टव्यम् । तेन यत्वस्यासिद्धत्वेन शकरव्यवधानान्न णत्वम् इति प्रथितप्रख्यानामित्येव साधु ।
९३. परिष्ठितेरित्येव साधु । **उपसर्गात्सुनोतिसुवती**त्यादिना मूर्धन्यादेशो दुर्वारः ।
९४. **अकर्मकाच्चे**त्युपपूर्वात्तिष्ठतेरात्मनेपदं विधीयते, तस्मात् परस्मैपदं दुष्टम् । उपतिष्ठते उपस्थितो भवतीत्यर्थः ।
९५. एकतमत्साधनमिति वक्तव्यम् । नपुंसके स्वमोरद्डादेशस्य दुर्वारत्वात् । अन्यतमम् इति वा प्रयोज्यम् ।
९६. अध्ययनेन लेखनेनाभ्यसनेन चानल्पं प्रयोजनमिति च वक्तव्यम् । तृतीयाप्रयोग एव प्रायिकः । गीतासु तु **यावानर्थ उदपाने सर्वतः सम्प्लुतोदके** इत्यत्र सप्तम्यपि दृश्यते ।
९७. आकाशपाताले एकी करोतीति तु वक्तव्यम् । समाहारस्त्वेकोऽर्थः, तत्राभूततद्भावविषयस्य च्वेरनवसरः । **अनेकं ह्येकं क्रियते ।**

---

१. विकर्तनः सूर्यः ।

९८. अवश्यभाविनमपायमाकलय्य तं शमयितुमुपायमातिष्ठेत्प्राज्ञः ।

९९. एष वास्तविको दार्शनिकः कालः शक्यो व्यपदेष्टुम् ।

१००. युज्यते यच्छात्राः सततं संस्कृतं शीलयेयुः, लौकिकमप्यर्थं संस्कृतेतरस्यां भारत्यां न जातु ब्रूयुः ।

१०१ अद्यतनीनमार्यसंस्कृते रूपं कियतः कालादारब्धमिति सहसा वक्तुं न पारयामः ।

१०२. सुलभा खलु ब्रह्मवर्चस्कामना भवति, दुर्लभा पुनस्तस्याः समृद्धिः ।

१०३. राजाश्रयं विना कीदृश्या अप्युपयोगिन्याः शिक्षायाः प्रसारो नार्हति भवितुम् ।

१०४. ओमिति ब्रवीषि चेत्तदाऽवसन्नस्ते पक्षः ।

---

९८. अवश्यम्भाविनमपायमित्यादि वक्तव्यम् । अवश्यमिति मकारान्तमव्ययम् । लुम्पेदवश्यमः कृत्ये इति कृत्ये परे मलोपविधिर्न तु कृन्मात्रे । असमासो वा विज्ञेयः तथापि मलोपाप्रसङ्गः ।

९९. एष वस्तुतो दर्शनकाल इति दार्शनिकानां काल इति वा शक्यो व्यपदेष्टुम् । दार्शनिक इति तु दर्शनमधीते वेद वेत्यर्थे व्यवह्रियते । **न च व्यवहारोऽन्यथयितव्यः स्वैरितया ।**

१००. संस्कृतेतरया भारत्येत्येवं ब्रूयात् । वाग्घि साधनमर्थोक्तौ न **त्वधिकरणमिति** सप्तम्यनवसरग्रस्ता ।

१०१. अद्यतनार्यसंस्कृते रूपमिति तु निगाद्यम् । खप्रत्ययस्याप्राप्तेः ।

१०२. **ब्रह्महस्तिभ्यां वर्चस** इत्यच् समासान्तो न कृतः, स दोषः । **ब्रह्म**वर्चसकामनेति तु वाच्यम् ।

१०३. महोपयोगाया अपि शिक्षाया इति वक्तव्यम् । कीदृश्या इति शिक्षाया एव विशेषणं भवितुमर्हति न तूपयोगिन्या इति विशेषणस्यापि । वक्ता तु तत्राप्यस्यान्वयमिच्छति । तन्न संभवति । न हि विशेषणं विशेषणान्तरं विशिनष्टि । **उभयोरप्येकस्मिन्विशेष्ये ऽन्वयान्मिथश्चानन्वयात् ।**

१०४. यदा वाक्ये चेच्छब्दः प्रयुज्यते तदा तदेति वा तर्हीति वा उत्तरवाक्ये न प्रयुज्यते इति संस्कृतवाग्व्यवहारः । अत्र प्रमाणोपचयो ऽस्मत्कृतौ वाग्व्यवहारादर्शानुबन्धे द्रष्टव्यः ।

१०५. वयं च ज्ञानालोकप्रवर्तकाणामार्याणां वंश्या इति शक्यं साभिमानं शिर उन्नमयितुम् ।

१०६. लोकव्यवहृतिपरिचितिसम्पत्तये संस्कृतपाठशालासु प्रबन्धः कश्चिद्विधेयः ।

१०७. इतिहासप्रभृतयो विषयाः संस्कृतगिरा निबद्धव्याः ।

१०८. ख्रिस्टाब्दीतः सहस्रद्वयात्प्राग् वेदाः प्रणिन्यिर इति केचित् प्रलपन्ति मातृमुखाः ।

१०९. शास्त्रार्थायाऽभीतवदाह्वयन्तमष्टावक्रं बालचापलमेतदिति नाद्रियते बन्दी ।

११०. लोकरावणो रावणो विविधैराकारैः परुषाक्षरैश्चाभीषयत्सीताम् ।

१११. परं भर्तरि दृढमनुरक्ता सा न मनागप्यबिभ्यत्, न वा धर्माद् व्यचलत् ।

११२. यदि ते किञ्चित्परमार्थतो विज्ञातुं विचेष्टेरंस्तदा ध्रुवं सिद्धिकामपि लभेरन् ।

---

१०५. ज्ञानालोकप्रवर्तकानामिति वक्तव्यम् । तकारव्यवधानेन अट्कुप्वाङ्नुम्व्यवायेपीति णत्वं न ।

१०६. प्रबन्धशब्दः क्रियासातत्ये वर्तते, यथा नानद्यतनवत् क्रियाप्रबन्धसामीप्ययोरित्यत्र पाणिनीये तेन संविधानं किञ्चिद्विधेयमिति वा संविधा काचिद्विधेयेति वा वक्तव्यम् ।

१०७. निबन्द्धव्या इत्येव साधु । तव्येऽनुनासिकलोपस्याप्रसङ्गात् ।

१०८. ख्रिष्टाब्दतो द्वयोर्वर्षसहस्रयोरिति वक्तव्यं प्रागिति चाप्रयोज्यम् । उपपादना च वाग्व्यहारादर्शे कारकाधिकरणे द्रष्टव्या ।

१०९. स्पर्धायामाङ इत्यात्मनेपदे आह्वयमानमिति साधु स्यात् ।

११० अभाययत्सीतामिति वक्तव्यम् । षुगात्मनेपदं च हेतोरेव भये सति भवतो न तु करणादपि । हेतुश्चेह प्रयोजको गृह्यते ।

१११. अबिभेत् इत्येव साधु । शपः श्लुः । तिपि गुणः ।

११२ विचेष्टेरन्नित्यत्र विशब्दो विरुद्धार्थमाह । नहि भवति विशेषेण चेष्टते विचेष्टत इति, किन्तर्हि विरुद्धं चेष्टते नाना वा चेष्टते इति । यथौदनस्य पूर्णाश्छात्रा विचेष्टन्त इत्यत्र ।

११३. हतव्या विघ्नबाधा मङ्गल्येष्वारम्भेषु ।
११४. परुद्भूता सम्मेलनस्य सुषमा नैषमे संभाव्यते ।
११५. अमी गोस्वामिनो वल्लभाचार्यकुलालङ्करणा इति विदितं नः ।
११६. श्रीविष्णुदिगम्बराणां गायनेन समं सभाकार्यमारब्धम् ।
११७. ये ग्रन्थमिममुपयोक्ष्यन्ति ते शब्दार्थान् साधु वेदिष्यन्ति ।
११८. स्वीकृतमनेन साहसिकं कर्म, तेनाऽस्य करुणा कुतः ।
११९. तस्य तत्र स्थितस्य विंशति वा पञ्चविंशति वा वर्षाणि गतानि ।

---

११३. विघ्न इति बाध इति च (बाधेत्यपि च) पर्यायौ । **पर्यायौ च पर्यायेणार्थं ब्रूत इति तथोच्येते** । तेन युगपत्प्रयोगो नेति विघ्ना इत्येव पर्याप्तम् ।

११४. ऐषम इति सकारान्तमव्ययम् । तेन नैषमः संभाव्यत इति वक्तव्यम् ।

११५. अलङ्करणमिति भावे ल्युडन्तम् । ल्युडन्तं नपुंसकम् । कर्तरि ल्युर्वा स्यादिति चेन्न । नन्द्यादिष्वलङ्करोतेरपाठात् ननु । करणाधिकरणयोर्विहितो ल्युट् विशेष्यलिङ्गको भवति यथा इध्मव्रश्चनः कुठार इत्यत्रेति चेदत्र ब्रूमः – अत्र करणत्वमेव नास्ति । प्रकृते भावो वा कर्तृत्वं वाऽभिप्रेयते । तेन अलङ्कारा अलङ्कर्तारो वेति सर्वथा निर्दुष्टो न्यास आस्थेयः ।

११६. गानेनेति वक्तव्यम् । गायनो गाथको भवति । **गस्थकन्** । **ण्युट् च** ।

११७. **प्रोपाभ्यां युजेरयज्ञपात्रेष्विति** तङा भवितव्यम् । लृटि उपयोक्ष्यन्त इत्येव साधु ।

११८. **ओजः सहोऽम्भसा वर्तते** इति ठकि साहसिकशब्दनिष्पत्तिः । साहसिकः पुरुषो भवति । तस्य कर्म साहसिक्यं भवति । तेन साहसिकं कर्मेत्यपास्य साहसमित्येवोच्यताम् ।

११९. विंशत्यादय आ नवनवतेः स्त्रियामिति विंशतिर्वा पञ्चविंशतिर्वेति वक्तव्यम् ।

१२०. ज्ञानलवदुर्विदग्धा:[1] शिष्या ज्ञाननिधीन् गुरूनप्यनाद्रियन्त इति कलेर्विलसितम् ।

१२१. महान्नाम दोषः प्रसज्येत यदि पैतृकी मर्यादा व्युत्क्राम्येत ।

१२२. अयं द्वात्रिंशतां निबन्धानां सङ्ग्रहो हिततमश्छात्रेभ्य इति मतं नः ।

१२३. कठिनमिदं कार्यं यत्नान्तरमपेक्षते ।

१२४. अविलुप्तब्रह्मचर्यो दृढसर्वगात्रो वर्चस्वी स युवा त्रिंशद्वर्षायुषि दारानकुरुत ।

१२५. अत्र संस्कृतज्ञेतराणां प्रवेशो निषिद्धः ।

१२६. ब्रह्मवर्चस्विन इमे वर्णिनः प्रदीप्ताग्नय इव भासन्ते ।

---

१२०. **भाषायां तिङन्तेन समासो नेति** नाद्रियन्त इति वक्तव्यम्, न तु नञ्तत्पुरुषः समाश्रेयः । **अपचसि जाल्मेत्यत्रापचसीति** नञ्समासो न, पृथक्पदद्वयमेतत् । **नलोपो नञस्तिङि क्षेप** इति वार्तिकमप्राप्तं नलोपमेव विधत्ते ।

१२१. व्युत्क्रम्येतेति तु वाच्यम् । **क्रमः परस्मैपदेष्विति** परस्मैपद एव क्रमेरुपधाया दीर्घविधिर्न तु कर्मण्यात्मनेपदे ।

१२२. द्वात्रिंशतो निबन्धानां संग्रह इति वक्तुमुचितम् । **विंशतिप्रभृतयो नवनवत्यन्ताः संख्यावचनाः स्त्रियामेकत्वे प्रयुज्यन्ते संख्येये वर्तमानाः** ।

१२३. कठिनमिति कठोरेण समानार्थकं सुषिरप्रतियोगि । **क्रूरेऽप्युपचर्यते** । कृच्छ्रसाध्ये तु नास्य प्रवृत्तिः क्वचित्साहित्ये दृष्टेति तत्रार्थ आधुनिकोऽस्य प्रयोगो दूष्यः ।

१२४. त्रिंशद्वर्षो वयसा, त्रिंशद्वर्ष इति वा वक्तव्यम् । त्रिंशतं वर्षाणि भूत इति विग्रहः । **चित्तवति नित्यमिति** ठञो लुक् ।

१२५. संस्कृतज्ञेतरेषामिति तु साधु । इतरशब्दो हि सर्वनाम सर्वादिगणे पाठात् । न च तत्पुरुषे सर्वनामता प्रतिषिद्धा शास्त्रेण ।

१२६. **ब्रह्महस्तिभ्यां वर्चस** इत्यचि समासान्ते ब्रह्मवर्चसमिति भवति । तत इनौ ब्रह्मवर्चसिन इति रूपम् । सान्तत्वाभावाद्विनेरभावः ।

---

१. विद्याकणसम्प्राप्त्याऽवलिप्ताः ।

१२७. हन्त देवदत्तो वराकः कियद्भिश्चिद्वर्षैः पक्षाघातेन पीडितोऽस्ति।
१२८. प्रस्तावतरङ्गिणी नाम निबन्धावलिर्भूयसे भविष्यति भव्याय भावुकानाम्[1]।
१२९. अपि वेत्थ कस्य यानस्य बाष्पयानमिति समाख्या ?
१३०. मदुक्तं श्रृणुष्व मनसाऽवहितेन।
१३१. उच्चावचा नाना ह्यधिकारिणो भवन्ति।
१३२ इह प्रबन्धे विचार्य विचयमपि विशेषं दोषं न पश्यामः।
१३३. कैश्चन मासैर्भ्रातुः श्रीवेणीशङ्करस्य वृत्तान्तो नाधिगत इति चिन्ता मामाचामतीव।
१३४. न गर्दभा वाजिधुरं वहन्ति (मृच्छ०)।
१३५. संस्कृतज्ञमानिनोऽस्य ब्राह्मणब्रुवस्याखर्वो गर्वः कथं युज्यते ?

---

१२७. कियन्तिचिद्वर्षाणीत्यत्यन्तसंयोगे द्वितीया प्रयोज्या। तृतीया त्वपवर्गे विहिता। अपवर्गश्चेह नास्ति।
१२८. **भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियामित्यमराद्** भावुकं भव्येन समानार्थकं क्लीबम्। सहृदयं सचेतसं तु नेदमाचष्टे। तेन सहृदयानामिति वक्तव्यम्।
१२९. वाष्पयानमित्यत्र **पूर्वपदात्संज्ञायामग** इति णत्वं प्राप्नोति। क्षुभ्नादित्वान्न भवति। क्षुभ्नादिराकृतिगणः। अविहितलक्षणो णत्वप्रतिषेधः क्षुभ्नादिषु द्रष्टव्य इति ह्युक्तम्।
१३०. श्रृणोतिः परस्मैपदी। तेन श्रृणु इत्येव साधु।
१३१. उच्चावचा इति मयूरव्यंसकादित्वात्साधु। **उच्चावचं नैकभेदमि**त्यमरप्रामाण्यादुच्चावचं नानेत्यनेन समानार्थकम्। तेनैकतरं शक्यं हातुम्। नानेति हीयताम्।
१३२. **दोषविशेषं** विशिष्टं दोषमिति वा वक्तव्यम्।
१३३. कांश्चन मासानित्यत्यन्तसंयोगे द्वितीया प्रयोक्तव्या। तृतीयया नार्थः।
१३४. **ऋक्पूरब्धूः पथामानक्ष** इत्यः समासान्तो विहितः। तस्मिन्सति स्त्रियां टापि च वाजिधुरां वहन्तीति वक्तव्यम्।
१३५. संस्कृतज्ञमानिन इत्येव साधु। णिनौ मुमागमस्याप्रसङ्गात्।

---

१. सहृदयानामित्यर्थं विवक्षति।

१३६. मनुष्यः खलु कियानपि बुद्धिप्रमाणको वैज्ञानिको वा स्यान्नास्यात्मज्ञानमुदेति यावन्न श्रोत्रियं ब्रह्मनिष्ठमुपास्ते ।
१३७. दिनाद्दिनं कर्णजमूल्यं वृद्धिं यातीति किं कुर्मः ।
१३८. चारुचरितस्यास्य दर्शनेन समुत्सुको लोकः ।
१३९. चकास्ति संस्था त्वत्सङ्गात्ते शोभा नास्ति संस्थया ।
१४०. विमानना सुभ्रु ! कुतः पितुर्गृहे (कु० ५ । ४३) ।
१४१. जनयति कुमुदभ्रान्ति धूर्तबको बालमत्स्यानाम् ।
१४२. नाहमात्मनश्छायामपि व्यश्वसमित्यासन्नमरणोऽवरङ्गजीवः शब्दतः प्रतिपेदे ।
१४३. विषवृक्षोऽपि सवर्ध्य स्वयं छेत्तुमसाम्प्रतम् (कु० २ । ५५) ।
१४४. नाथसे किमु पतिं न भूभृताम् (कि० १३ । ५९)

---

१३६. अपि चेन्मनुष्योऽतिमात्रं बुद्धिप्रमाणक इत्यादि वक्तव्यम् ।
१३७. दिने दिन इति वक्तव्यम् । दिनाद्दिनमित्यत्र दिनशब्दे पञ्चमी च द्वितीया चोभे विभक्ती अनुपपन्ने ।
१३८. **प्रसितोत्सुकाभ्यां तृतीया** चेति तृतीया साध्वी ।
१३९. संस्था त्वया चकास्ति, त्वं तु न चकास्सि संस्थयेत्येवं वक्तव्यम् । **समासो बुद्धिलक्षणमिति** यदुक्तं पूर्वसूरिभिस्तन्मनसि करणीयम्, **यथा प्रक्रान्तं तथोपसंहरणीयम्** । पादादौ 'ते' इत्यप्यपप्रयोगः ।
१४०. सुभ्रु इत्यत्र भ्रूशब्दस्योवङ्स्थानीयत्वाद् **नेयङुवङ्स्थानावस्त्री** इति नदीसंज्ञाप्रतिषेधाद् **अम्बार्थनद्योर्ह्रस्व** इति ह्रस्वत्वं न स्यादिति शङ्कयते । **अप्राणिजातेश्चारज्ज्वादीनाम्** इत्यत्रा'लाबूः 'कर्कन्धूः' इत्यूकारान्तादप्यूङ्प्रत्ययमुदाजहार भाष्यकारः । एतस्मादेव ज्ञापकात् क्वचिदूकारान्तस्याप्यूङन्तत्वान्नदीत्वे ह्रस्वत्वमित्याहुरिति मल्लिनाथः । **दीक्षितादयस्तु प्रमाद एवायमिति प्रतिपन्नाः** ।
१४१. **पोटायुवतिस्तोके**त्यादिना बकधूर्त इति तु युज्यते ।
१४२. विपूर्वः श्वसिरकर्मकः, तेनात्मनश्छायायामिति वक्तव्यम् ।
१४३. **निपातेनाप्यभिहिते कर्मणि न कर्मविभक्तिः**रित्यसाम्प्रतमित्यनेन निपातेनाभिहितत्वाद् वृक्ष इत्यत्र प्रातिपदिकार्थमात्रे प्रथमा ।
१४४. **आशिषि नाथ** इति नियमाद् याच्ञायां परस्मैपदमेव युक्तम् । नाधस इति वा पाठः कल्पनीयः ।

१४५. ईदृंशि तपांसि कोऽर्हश्चरितुमृते विश्वामित्रात् ।
१४६. प्रायेण समानरूपाण्यपि वस्तूनि विषमशीलानि भवन्ति ।
१४७. दीर्घिकासु कुमुदानि विकासं लम्भयन्ति शिशिराः शशिभासः ।
१४८. शक्यमञ्जलिभिः पातुं वाताः केतकगन्धिनः । (रा० ४।२८।८)
१४९. भ्रमरोत्करकल्माषा[1] कुसुमानां समृद्धयः ।
१५०. प्रतिमासमाद्येऽह्नि ग्राहकाणां सेवायामुपसर्पति पत्त्रिकाकारो व्यथां च स्वां वेदयति ।

---

१४५. ईदृंशीति शौ रूपं साधु स्यात् । अत्र शिप्रत्ययेऽङ्गं नान्तं न, किन्तर्हि शान्तम् । नकार उपधा न ऋकारः । तेन दीर्घोऽप्रसक्तः ।

१४६. सरूपाणीति वक्तव्यम् । **ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपे-त्यादिना** समानस्य सभावः ।

१४७. डुलभष् प्राप्ताविति धातुः । सर्वा प्राप्तिर्गतिपूर्वा । तथापि क्वचित्सा गतिरुद्भूता प्राधान्येन विवक्ष्यते क्वचिदनुद्भूता गौण्येन । यदाह वामनः—**लभिरयं क्वचिद्गत्युपसर्जनां प्राप्तिमाह, क्वचित्प्राप्त्युपसर्जनां गतिमिति** । पूर्वत्र गत्यर्थत्वाभावाण्णिच्यणौ कर्तुः कर्मत्वं न । **सितं सितिम्ना सुतरां मुनेर्वपुर्विसारिभिः सौधमिवाथ लम्भयन्निति** माघकाव्य उदाहरणम् । उत्तरत्र प्रकृतमुदाहरणम् । अणौ कुमुदानि विकासं लभन्ते । णौ शिशिराः शशिभासः (प्रयोजककर्त्र्यः) कुमुदानि विकासं लम्भयन्ति ।

१४८. केतकानां गन्ध इति केतकगन्धः । सोऽस्त्येषामिति केतकगन्धिनः । अत इनिठनाविति इनिः । तेन नात्र कश्चिद्दोषः । शक्यमिति रूपं विलिङ्गवचनस्यापि कर्माभिधायां सामान्योपक्रमात् इति वामनीयसूत्रेण व्याख्यातम् ।

१४९. **अन्यतो ङीष्** (४।१।४०) इति वर्णवाचिनः कल्माषशब्दादनुदात्तान्ताङ्कीषि कल्माषीत्येकवचने रूपम् । बहुवचने च कल्माष्य इति ।

१५०. ग्राहकान्नग्रमुपसर्पतीत्येवं वक्तव्यम् । उपसर्पतिः सकर्मकः । **ग्राह-**काणां सेवायामिति च संस्कृतवाग्व्यवहारो नेति वर्जयेदिमां पदावलिम् ।

---

१. षट्चरणचक्रचित्राः ।

१५१. रक्ता नाम श्रियमनुसरन्ति विरक्ताश्चानुसर्यन्ते श्रियेति विपरीतो विधातुः क्रमः ।

१५२. ये नाम स्त्रैण[१]मुपजीवन्ति ते यदि जीविताः, के मृताः ?

१५३. वार्तमानिकः प्रजास्वनुपशमः क्षुन्निमित्तक इति निश्चितिः ।

१५४. समाजसंगठनं साम्प्रतमपेक्ष्यतेतमाम्, यतः सर्वतो विरोधिभिः परिक्षिप्ता वयम् ।

१५५. बह्वहं तस्य बुद्धिप्राखर्यमस्तुवम् ।

१५६. सर्वैश्वर्यकामधेनून् देवान्सम्प्रार्थयामहे वितरत नो भद्रं भूयसे मङ्गलायेति ।

१५७. स्वे स्वे धर्मणि निरताः प्रजाः सुखं निर्विशन्ति ।

१५८. तानि धर्मणि प्रथमान्यासन् ।

---

१५१. अनुस्रियन्ते श्रियेति वक्तव्यम् । **रिङ् शयग्लिङ्क्षु** इति रिङादेशः ।

१५२. ते यदि जीवन्ति के मृता इत्येवमुपन्यसितव्यम् । जीविता इति तु निष्ठायां रूपम् । निष्ठा च भूते । वर्तमाना च प्राणधारणक्रिया विवक्षिता ।

१५३. वर्तमान इत्येव शोभनं वचः । तद्धितवृत्त्या नार्थः । **प्रियतद्धितत्वं चेदात्मनोऽभिव्यङ्क्तुमिच्छसि कामं तद्धितं प्रयुङ्क्ष्व ।**

१५४. समाजसंघटनमित्येव संस्कृतम् । **संगठनमिति त्वपभ्रंशः ।** संग्रन्थनेर्थे संगठनमिति प्राकृतम् ।

१५५. अस्तवमित्येव लङ्युत्तमैकवचने रूपम्, गुणस्य दुर्वारत्वात् ।

१५६. कामधेनूरिति वक्तव्यम् । देवा कामधेनव इति रूप्यन्ते । **व्यस्तं** चेदं रूपकम् । पुंस्त्वं तु दुर्लभम् ।

१५७. स्वे स्वे धर्मे निरता इति वाच्यम् । **धर्मादनिच्केवलादित्यस्या**ऽप्राप्तेः ।

१५८. धर्मशब्दोऽर्धर्चादिषु पठ्यते । तेन पुन्नपुंसकयोर्वर्तते । तत्रेयं व्यवस्था—अपूर्वे पुँल्लिङ्गः । तत्साधने नपुंसकम् । तत्साधनं च यागः । प्रकृते चायमेवार्थ इति नपुंसकत्वं निर्दिष्टम् ।

---

१. स्त्रीणां समूहः । स्त्रीरित्यर्थः ।

१५९. कौमार्यं यौवनं स्थाविर्यमिति तिस्रोऽवस्थाः शरीरस्य ।

१६०. शूद्रातापस्यफलस्वरूपे क्वचिद्रामायणेऽकालमृत्युर्वक्तव्य आसीत्स च नोक्त इति शबरी शूद्रा नेति कश्चित् ।

१६१. अत्र देवमन्दिरे कारुकार्यमपि यवनशिल्पिशैलीमनुहरते ।

१६२. रात्रिन्दिवं तत्प्रतीक्षायामगमयं कालम् ।

१६३. चिरविश्लिष्टयोस्तयोरुपश्लेषे प्रावृतत्प्रेमाश्रुवर्षा विलोचनाभ्याम् ।

१६४. यदहं रावणस्य गात्रसंस्पर्शं बलाद् गता तत्रानीशाऽहं किमकरिष्यम् ।

१६५. गच्छत्सु कतिचिद्दिनेषु स गदान्निर्गतः किंचिद्बलमुपाचिनोत् ।

---

१५९. **प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्** (५।१।१२९) इति भावेऽञि कौमारमित्येव साधु । स्थविरशब्दो युवादिषु पठ्यते तेन **हायनान्तयुवादिभ्योऽण्** (५।१।१३०) इत्यणि स्थाविरमित्येव साधु ।

१६०. शूद्रातापस्यफलमिति क्वचिद्रामायणे इत्येवमुपन्यासो व्यवहारमनुपतेत् । **व्यवहारश्च नातिपात्यो वैयाकरणंमन्येनापि ।**

१६१. अनुहरतीति वाच्यम् । कर्त्रभिप्राये क्रियाफले त्वात्मनेपद न दुष्यति । **हरतेर्गतताच्छील्य** इत्यनेन तु न प्राप्नोति । तत्र गतमिति गतिर्गृह्यते । गतविधप्रकारास्तुल्यार्था इति तुल्यतां शीलयतीत्यर्थेऽनुहरत इति साध्विति मतमर्वाचीनं न बह्वादरणीयम् ।

१६२. कालमित्यधिकम् । रात्रिन्दिवमिति द्वन्द्वोऽधिकरणवृत्तिरपि व्यस्तरात्रिन्दिवस्य ते इत्यादाविवान्यत्रापि प्रातिपदिकार्थवृत्तिर्भवति ।

१३६. प्रेमाश्रुवर्षमिति वाच्यम् । वर्षाशब्दः स्त्रियां बहुत्वे प्रावृषमाह, न वृष्टिम् ।

१६४. किं करिष्यामीति वक्तव्यम् । **हेतुहेतुमद्भावविरहाल्लृङ् न ।** लृट्प्रयोगविषयो वाग्व्यवहारादर्शे लकारचिन्तायां विस्तरेण विवेचित इति तत एव विशेषो वेद्यः ।

१६५. कतिषुचिद् दिनेष्विति वदतव्यम् । **न हि चिदिति निपातः समासघटकतां याति । नित्यं पृथक्पदतया व्यवहार्यं भवति ।**

१६६. इमां पुरोवर्तिवनाभिरामतां क्षणं नयनपान्थीकृत्य चरितार्थ्यता-
मात्मा ।

१६७. सतीत्वं कालेन स्वप्नायितं भावीति केचिदाशङ्कन्ते ।

१६८. सेयमुपविंशानां वर्षाणां घटना । नैनां विस्मृतो लोकः ।

१६९. भूकम्पस्य दिनत्रयात्पूर्वमेव कोयटात उदडयन्त शकुनय इति
वार्ता ।

१७०. तेजोदीप्राया अमुष्या बालिकाया नावश्यकता दीक्षायाः ।

१७१. तेषामेव दृष्टावहममूल्यः, परे तु मामकिञ्चित्करं गणयन्ति ।

१७२. अवाप्सीर्महिषीं भोज्यां रणे निर्जित्य रुक्मिणीम् ।

१७३. अहो पङ्कजपरिचयसुरभिः प्रातस्तनः समीरश्चतुर्दिग् विचरन्
सन्तर्पयतीन्द्रियाणि ।

---

१६६. **पथो णो नित्यमिति** व्युत्पादितः पान्थशब्दः पन्थानं नित्यं गच्छ-
तीत्यर्थमाह । तेन प्रकृतेऽप्रसङ्गोऽस्य । पथिकशब्दस्तु शक्य-
प्रयोगः । तथापि नयनगोचरीकृत्य, नेत्रविषयीकृत्येति वानव-
द्यहृद्यो न्यासः ।

१६७. **भविष्यति गम्यादय** इति भाविशब्दः साधुः । प्रयोगस्तु न साधुः ।
भविष्यतीत्येव वक्तव्यम् ।

१६८. इत उपविंशेषु वर्षेष्विदमघटत, नेदं विस्मृतो लोक इति वक्त-
व्यम् । विस्मृत इत्यत्र कर्तरि क्तः, यथा व्यवसितादिषु । तथा च
वामनसूत्रम्—**व्यवसितादिषु क्तः कर्तरि चकारात्** ।

१६९. भूकम्पाद् दिनत्रये (तृतीये दिने इति वा) इति वक्तव्यं पूर्वमिति
चावक्तव्यम् ।

१७०. नार्थो दीक्षयेति वाच्यम् । अवश्यम्भाव आवश्यकं भवति । वुञा
भावस्योक्तत्वादपरो भावप्रत्ययो व्यतिरिक्तः । अर्थश्चापि विव-
क्षितो नार्प्यते ।

१७१. तेषामेवेति पर्याप्तम्, तान्प्रतीति वा, नार्थो दृष्टिशब्देन । **अथ
प्रयुयुक्षसे दृष्ट्येति तृतीयान्तं प्रयुङ्क्ष्व** ।

१७२. आप्लृ व्याप्तावित्यस्य लृदित्वाल्लुङि च्लेरङि अवाप इति रूपम् ।

१७३. चतसृणां दिशां समाहारश्चतुर्दिक् । द्विगुः । स नपुंसकम् इति

१७४. संस्कृतप्रतिन्त्रिकेयं महीशूरराज्येनोपजीव्यते ।
१७५. शक्तिमनतिक्रम्यात्मश्रेयसि यत्नं महान्तमातिष्ठेत ।
१७६. व्यतिक्रमस्य कृते तर्जितः सुतः स्वरूक्षैर्वचोभिः पितरं भृशमतौत्सीत् ।
१७७. न हि वस्तुस्थितिपरिवृत्तिमात्रेण सन्तुष्टिर्नो भवित्री ।
१७८ धनधान्यस्य च स्फीतिः सदा मे वर्ततां गृहे ।
१७९. हे रोहिणि ! त्वमसि शीतकरस्य भार्या, एनं निवारय पतिं सखि ! दुर्विनीतम् ।
१८०. तेनेदं काञ्चनमयं निर्मितं पुरमुत्तमम् ।

---

नपुंसकत्वे स्वमोर्लुकि रूपम् । इह चतुर्दिगिति द्वितीयान्तम् । विचरतेरकर्मत्वेपि **देशकालाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामिति** कर्मत्वम् ।

१७४. महिशूरराज्यमुपजीवतीति वक्तव्यम्, अन्यथा विपरीतमुक्तं भवति ।

१७५. आङः स्थः प्रतिज्ञान इति प्रतिज्ञान आत्मनेपदविधिः, इह त्वाश्रयणमात्रमर्थः । तेनातिष्ठेदिति परस्मैपदमेव युक्तम् ।

१७६. स्वरूक्षैरित्यसमर्थसमासः, स्वस्य वचोभिरित्यनेनाभिसम्बन्धात् । किञ्च स्वशब्दोधिक इति त्याज्यः । अत्यागे च रूक्षैः स्ववचोभिरित्येवं वक्तव्यम् ।

१७७. भवित्रीति तृचि ङीपि रूपम् । इदं कृदन्तम् । किं नाम तिङन्तमिहाध्याह्रियेत । 'अस्ति' इति 'भविष्यति' इति वा । यद्येवं भवित्रीत्यनुक्त्वाऽस्तीति भविष्यतीति वा किं नोच्येत लाघवात् ।

१७८. स्फीतिरित्यपशब्दः, **स्फातिरित्येव शब्दः** । निष्ठायामेव स्फायः स्फीभावो विधीयते ।

१७९. अन्वादेश एनादेशो विहितः । इह चान्वादेशो नास्ति । किंचित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेश इति तल्लक्षणात् ।

१८०. **नित्यं वृद्धशरादिभ्य** इति मयटि काञ्चनमयमिति साधु । क्वचिदुत्सर्गो प्यपवादविषयमभिनिविशत इति दर्शनात् काञ्चनमित्यप्यणि साधु ।

१८. उत्तिष्ठते वासुकिनापि दष्टः ।

१८२. गुरुभिः शिष्या आत्मनिर्भरतामनुशिष्याः ।

१८३ बह्वपानि तडागानि सारसाः समुपासते ।

१८४. ततः समा मासो दिवा रात्रिरिति कालभेदोध्यजायत ।

१८५. गरलभरयाऽनया नीत्या मिथो भेदिताः प्रजा नात्मश्रेयोऽविदुः ।

१८६. क्षीरौदनं गन्धयुतं विधाय स आदयत् किञ्चन तत् तनूजम् ।

१८७. अनादेः कालान्मनूष्यस्येयमिच्छाऽभूद्यत्स पक्षिगण इवाकाश उड्डीयेत ।

१८८. अद्यत्वे शङ्काक्रान्तं जगत् । सबलानि दुर्बलानि वा राष्ट्राणि स्वानि निरायतिकानि[1] मन्यन्ते ।

---

१८१. उदो नूर्ध्वकर्मणि, उद ईहायामिति चेष्टायां यत्नेर्थे आत्मनेपदं न तूत्थाने । तेनोत्तिष्ठतीत्येव साधु ।

१८२. आत्मावलम्बतामनुशिष्या इति वक्तव्यम् । निर्भरो भरः । अति-शय इति यावत् ।

१८३. बह्व्य आपोऽत्रेति बह्वपानि । ऋक्पूरब्धूःपथामानक्ष इत्यकारः समासान्तः ।

१८४. दिवेत्यधिकरणवृत्ति । प्रातिपदिकार्थमात्रे दिवस इति वक्तव्यम् । एकत्वेप्युत्तरत्रयमिति समेत्येकवचनं साधु ।

१८५. गरलस्य भरो यत्रेति व्यधिकरणबहुव्रीहिरास्थेयो भवति । साऽगतिकस्य गतिः । तेन गरलभृतयेति वाच्यम् ।

१८६. आदिखाद्योर्नेति णिच्यणि कर्तुः कर्मत्वं न । तेन तनूजेनेति अनुक्ते कर्तरि तृतीयया वाच्यम् ।

१८७. इच्छाऽभूद्यदहं पक्षिगण इवाकाश उड्डीयेयेति । परेणोदीरितोर्थः परकीयैरेव पदैरविकलं ज्ञाप्य इति संस्कृत सरणिः । वक्ता चात्मानं तच्छब्देन परोक्षवृत्तिना न जातु ब्रूयात् । आत्मस्थामिच्छामाचिख्यासन्नात्मानमस्मच्छब्देनाऽभिलपेत् । सर्वस्यात्मा संनिहितो यतः ।

१८८. स्वशब्द आत्मवचन एकत्वे प्रयुज्यत आत्मवदिति स्वं निरायतिकं मन्यन्त इति वक्तव्यम् । आत्मार्थे स्वं नपुंसकम् । इदं च वाग्व्यवहारादर्शेऽनुबन्ध इत्यत्र सप्रमाणमुपपादितम् ।

१८९. दीपार्चिः शीघ्रं संचरमाणा सूक्ष्मकालकणिकया घटपटादीन् प्रकाशयति ।

१९०. इयमुत्कटा मेऽभिलाषा कश्मीरान्गच्छेयं तत्र च निदाघं नयेयम् ।

१९१. त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् । (मनौ ९।९४)

१९२. एकद्वे वासरे मयि वस्तुमर्हसि, ततो गमिष्यसि ।

१९३. अतिमात्रं स्निह्यत्यम्बा शिशुकम् ।

१९४. देवदत्तायेक्षते दैवं गर्गः ।

१९५ भयङ्करीयं मूर्त्तिर्दृष्टमात्रा लोमानि मे हर्षयति ।

१९६. कौसल्यया रामो जातः सुमित्रया च लक्ष्मणः, तथाविधं च तयोः सौभ्रात्रमिति चित्रीयते लोकः ।

१९७. त्यजेन्मायाविनं मित्रं धनं प्राणहरं त्यजेत् ।

---

१८९. संचरन्तीत्येव साधु । सञ्चरतेस्तृतीयया योगो नास्तीति तङ् न ।

१९०. अभिलाषशब्दो घञन्तः, तेन पुंसि नियतः । अयमुत्कटो मेऽभिलाष इति वक्तव्यम् ।

१९१. **चित्तवति नित्यमिति** ठञो लुकि द्वादशवर्षामिति वक्तुमुचितम् इति पाणिनीयाः ।

१९२. एकद्वान्वासरानिति वक्तव्यम् । एको वा द्वौ वा वासरावित्येकद्वा वासराः । **संख्ययाऽव्ययासन्नाधिकसंख्याः संख्येय** इति बहुव्रीहिः । **संख्येये डजबहुगणादिति** डच् ।

१९३. स्निह्यतिरकर्मकः । तेन शिशुके स्निह्यतीत्येवं वक्तव्यम् ।

१९४. ईक्षतिरिह दैवपर्यालोचने वर्तत इति कर्मणो धात्वर्थेनोपसंग्रहादकर्मकः । तेन दैवमिति कर्म न पृथक्प्रयोगमर्हति ।

१९५. **मेघर्तिभयेषु कृञ** इति खचि मुमागमे टापि भयंकरेत्येव रूपम् । ङीपोऽप्रसक्तेः ।

१९६. कौसल्यायां रामो जातः, सुमित्रायां च लक्ष्मण इत्येवं वक्तव्यम् । जनिक्रियायां मातुरधिकरणतां विवक्षन्ति शिष्टाः । सोऽयं विषयो वाग्व्यवहारादर्शे कारकप्रकरणे सविस्तरं च व्याख्यातः ।

१६८. सुन्दरयाऽनया शैल्या शिक्षिताश्छात्राः संस्कारं कमपि लप्स्यन्ते नूनम् ।

१६६. यतितं मया चिराय व्याकरणमवगन्तुं न च पारितम ।

१००. जागृतोऽहमात्मनि ब्रह्मणि, नहीदानीं विडम्बयितुमर्हति मां माया वराकी ।

२०१. सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः ।
बभञ्जैकैकशः शङ्खान्द्वौ द्वौ पाण्योरशेषयत् (भा० पु० ११।६।७) ॥

२०२. अल्पश्रुतस्येदं शीलं स्वस्याभिमतं मतमेवावलम्बितुमागृह्णाति परान् ।

२०३. एकाक्षरी काश्मीरकाणां श्रीपतित्रकाप्यस्तं गता ।

---

१६७. मायात्रि मित्रमित्येव साधु । मित्रमिति नित्यं नपुंसकम् । स्वमोर्नपुंसकादित्यमो लुकि **नलोपः प्रातिपदिकान्तस्ये**ति नलोपे सिद्धं मायावीति ।

१६८. सुन्दर्याऽनया शैल्येति वक्तव्यम् । गौरादित्वान्ङीष् ।

१६६. यती प्रयत्ने इतीदित् । **श्वीदितो निष्ठाया**मितीण्निषेधे यत्तमित्येव साधु ।

२००. जागृ निद्राक्षये इत्ययं सेट् । अनेकाच्त्वात् । आतश्च **श्र्युकः कितीत्य**नेन इण्निषेधो न । **जाग्रोऽविचिण्णल्ङित्सु** इति गुणः । तेन जागरित इति साधु रूपं निष्पन्नम् ।

२०१. महतीति व्रीडिता इत्यस्य विशेषणमिच्छति भागवतकारः । विशेषणं विशेष्येणैवान्वेति न विशेषणान्तरेण, गुणानां परार्थत्वात् । तेन महदिति क्रियाविशेषणं प्रयोज्यम् ।

२०२. ममाभिमतं मतमेवावलम्बेरन्पर इत्यभिनिविशते इत्येवं वक्तव्यं वाक्योपस्कृतये । अनेकश्चेह दोषो वाक्ये । भिन्नकर्तृकतायां तुमुंस्तावद् दुष्यति । आङ्पूर्वस्य ग्रहेर्हठात्प्रवृत्तौ तिङि प्रयोगो नेति सोपि दुष्यति ।

२०३. एकमक्षरं (वाचकत्वेन) यस्याः सेति विग्रहे स्त्रीत्वे टापि । एकाक्षरेति युज्यते ।

०४. ईश्वराधिष्ठितायाः प्रकृतेः कर्तृत्वं जगतोऽनीश्वराधिष्ठिताया वेति विमृश्यते ।
२०५. मरीचिमिश्रा ऋषयः प्राणेभ्योऽहं च जज्ञिरे (भा० पु० १।६।३१) ।
२०६. नाहं विरिञ्चो न कुमारनारदौ
न ब्रह्मपुत्रा मुनयः सुरेशाः । विदाम यस्येहितम्…(भा० पु० ६।१७।३२)
२०७. उच्चैर्घुष्टं तु घोषणा (अमरः)
२०८. मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वाम् । (मेघ० पू० १०)

---

२०४. कर्तृशब्दो गुणवचनो नेति **त्वतलोर्गुणवचनस्येति** पुंवद्भावाप्राप्तौ कर्त्रीत्वमित्येव साध्विति प्रयोगचरणाः ।
२०५. **अस्मद्युत्तम** इत्युत्तमपुरुष एव प्रयोज्यः । जज्ञिमहे इति वक्तव्यम् ।
२०६. विदामेति लोट्युत्तमबहुवचनेऽनुपपन्नम् । वेदामेति पाणिनीया इच्छन्ति । श्रुतौ विदाम देवं भुवनेशमीड्यम् इत्यत्र विदामेति दृश्यते । **छन्दोवत्कवयः कुर्वन्ति तद्भागवतकारे तु भूयसा लक्ष्यते** । किञ्च । विदामेत्युत्तमबहुवचनं न युज्यते । प्रतिषिद्धाया विदिक्रियाया ऐक्येपि कारकभेदाद् वाक्यभेदो नञ आवृत्तेश्च । प्रतिवाक्यमस्मदादयः कर्तारस्तिङ्प्रत्ययेन कर्तृवाचिनोक्ता इति विदामेत्यत्रोत्तमपुरुषो बहुवचनं चेत्युभयमनुपपन्नम् । अहं न वेदानि, विरिञ्चो न वेत्तु, कुमारनारदावपि न वित्ताम्, ब्रह्मपुत्रा मुनयः सुरेशा (अपि) न विदन्त्विति वाक्यचतुष्टयम् । तत्र कः प्रसङ्ग उत्तमपुरुषबहुवचनान्ताया एकस्याः क्रियायाः ।
२०७. विशब्दनादन्यत्रेण्णिषेधो यथा घुष्टा रज्जुरित्यत्र । तेन घोषणायामर्थे घुष्टमसाधु । विशब्दनाविवक्षायामिण्न कृत इति तु **स्वामी** । अनेकधर्मणो वस्तुनः कस्यचिदेकस्य धर्मस्याविवक्षा स्यान्नाम, साक्षादभ्युपगतस्यार्थस्याविवक्षा कथंकारं युज्येत । घोषणेत्यर्थोक्तेर्विशब्दनस्योच्चैरभ्युपगमात् । **तेन चिन्त्यं स्वामिसमाधानम्** ।
२०८. कर्मधारयवदुत्तरेष्विति मन्दमन्दमितीष्यते । स्थितस्य गतिश्चिन्तनीयेति चेत् स्वतो मन्दं मन्दगामिनं त्वां पवनो मन्दं (यथा स्यात्तथा) नुदतीति कथंचित्समाधेयम् ।

२०९. कथं 'भीतभीत इव शीतमयूखः' (कि०) ।
२१०. सर्वे सङ्क्रामिणो रोगा वर्जयित्वा प्रवाहिकाम् ।
२११. नोच्छिष्टं कस्यचिद् दद्यात् (मनु० २।५६) ।
२१२. वेदैरशेषैः सवेद्यो नः कृष्णो ऽवतु सर्वदा ।
२१३. करभाः स्युः शृङ्खलका दारवैः पादबन्धनैः (अमरः) ।
२१४. सर्वरत्नाकरा भूमिः (गरुड पु० २१७।८६) ।
२१५. न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
२१६. खगबाल्यादिनोर्वयः । (अमरः)
२१७. न यतिभ्योऽर्थानां किञ्चित्प्रयोजनमस्ति ।

---

२०९. सादृश्यस्येवशब्देन गमितत्वात्प्रकारे गुणवचनस्येति द्वित्वाप्राप्तेर्भीतेभ्यो भीत इति कथंचिद् व्याख्येयम् ।

२१०. सङ्क्रामिण इत्यत्र णिनावुपधावृद्धिर्दुर्लभा । **नोदात्तोपदेशस्य मान्तस्यानाचमेरि**त्यनेन तत्प्रतिषेधात् । तेन सङ्क्रमिण इति वक्तव्यम् ।

२११. कस्येत्यत्र षष्ठी शङ्क्यते । अत्रापि समाधिः —न ह्यत्र ददात्यर्थः परिपूर्णः । स्वत्वनिवृत्तिमात्रं दातुः । परस्य स्वत्वापत्तिर्नास्तीति **मेधातिथिः** ।

२१२. **अनुदात्तं सर्वमपादादाविति** पादादौ वर्तमानस्यास्मदो नस् इत्यादेशः पर्युदस्यते । अस्मान् इत्येव वाच्यम् ।

२१३. दारवैरिति दुष्टम् । **नित्यं वृद्धशरादिभ्य** इति मयटि दारुमयैरिति वक्तव्यम् । कामं छन्दसि दारवशब्दप्रयोगो दृश्यते - **न दारवे पात्रे दुह्यात् । अग्निर्वा एष यद् दारुपात्रम्** इति ।

२१४. सर्वरत्नानामाकर इति विग्रहः । आकरशब्दो घप्रत्ययान्तः पुंसि नियतः । एत्य कुर्वन्त्यत्रेत्याकरः ।

२१५. श्वस् प्राणनेऽदादिः । तेन लिङि यासुटि विश्वस्यादिति स्यात् । गणकार्यमनित्यम् इति कर्तरि शपि अतो येय इति 'या' इत्यस्येयादेशे सिद्धं विश्वसेदिति ।

२१६. खगश्च बाल्यादि चेति खगबाल्यादिनी, तयोः खगबाल्यादिनोः । बाल्यमादिर्यस्य तद् बाल्यादि यौवनमिति सर्वमनवद्यम् ।

२१७. न हि यतीनामर्थैः किञ्चित्प्रयोजनमस्तीत्येवं विपरिणमय्य वक्तव्यम् । एष संस्कृतवाग्व्यवहारः ।

२१८. असन्तुष्टा महतोऽप्यस्मात्प्रयत्नात्ते भूयोऽपि यत्नान्तरं चक्रुः ।
२१९. गुरुजनेऽपराद्धायास्मै को न दण्डः प्रदेयः ।
२२०. किमिति च भवतेदं गेहमभ्यागतेन
मृदुचरणसरोजैर्भूषितं सम्मतेन ।
२२१. परस्य युवतीं कान्तां सस्पृहं नेक्षते कः ।
२२२. प्रीताः प्रजाश्च सम्प्रेक्ष्य प्रीणाति परमेश्वरः ।
२२३. दृष्टमत्यद्भुतं तस्यां द्वयमात्मविरोधकृत् । अहो मुखस्वरूपोत्थं तमी च कचसम्भवा (श्रीवरस्य कथाकौतुके) ॥
२२४. उपचर्यः स्त्रिया साध्व्या सततं देववत्पतिः (मनु.)

---

२१८. असन्तुष्टा महताप्यनेन प्रयत्नेनेति वक्तव्यम् । प्रयत्नो हि सन्तोषे कारणं हेतुः । सन्तुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव चेत्यादिषु (मनु० ३।६०) हेतुतृतीयाया दर्शनात् ।
२१९. दण्डो नाम दमो निग्रहो वा । न हि स दीयते । तथा हि गर्गाञ्शतं दण्डयति राजेत्यत्र दण्डिर्ग्रहणार्थो दृष्टः । निग्रहार्थत्वेपि दानक्रिया न युज्यते । दण्डो नाम क्रियते प्रणीयते धार्यते वा । तेन गुरुजनेऽपराद्धेऽस्मिञ्जने को नु दण्डः प्रणेय इति वक्तव्यम् ।
२२०. मृदुचरणसरोजैरित्यत्र बहुत्वं दुष्यति । अभ्यागतो हि द्विपाद् भवति न चतुष्पात् । आदरो जिगमयिषित इति चेत्तथापि बहुवचनं न युज्यते । आदरस्तावदुपमानेन सरोजेन गमित इति चरणशब्द इह चरणार्थत्वं न जहाति । तेन तद्गतबहुत्वमुद्वेगाय । गुरुचरणा इति त्वस्वपदविग्रहो नित्यसमासः । पूज्या गुरव इत्यर्थः ।
२२१. युवतीति युवस्त्रियां दुष्प्रयुक्तम् । यौतेः शतरि ङीपि यद्व्युत्पादयन्ति तन्न साधु । योगसमाश्रये हि मिश्रणकर्म कुर्वती काचित्प्रतीयेत न तु द्वितीये वयसि वर्तमाना वयस्था । वयस्थां च विवक्षति वक्ता ।
२२२. प्रीञ् तर्पणे कान्तौ चेति क्र्यादिः सकर्मकः । प्रीङ् प्रीतौ दिवादिरकर्मकः । तेन प्रीयते परमेश्वर इत्येवं वक्तुमुचितम् ।
२२३. अहर्मुखस्वरूपोत्थमित्येव साधु । रोऽसुपीति रेफे सति रूपम् ।
२२४. उपचार्य इति तु पाणिनीयाः । गदमदचरयमश्चानुपसर्गे इत्यनुपसृष्टादेव चरतेर्यद्विधेः । अन्यत्र ऋहलोर्ण्यति उपचार्य इत्येव ।

२२५. द्वाराणां नव संनिरुध्य······यावत् तिष्ठति तावदेव महतां सङ्गो न संस्तूयते (यो. चूडा० उ० १०७)।
२२६. कति धर्मद्वाराणि कति तत्त्वानि कत्यागमा इति विषये या सामग्री पुराणेषु वितता तामेकत्र संगृह्य विचारोऽत्र विहितः।
२२७. प्रियमधुरसनानि षट्पदाली मलिनयति स्म विनीलबन्धनानि (किराते)।
२२८. विमानना सुभ्रु पितुर्गृहे कुतः (कु०)।
२२९. जरीजागरीति पाणिनीयं सर्वशास्त्रोपकारकम्।
२३०. वर्णाश्रमेतराणां नो ब्रूहि धर्म्मानशेषतः (याज्ञ० १।१)।
२३१. भारो न बाधते राजन् यथा बाधति बाधते (भोजप्रबन्धे)।

---

२२५. नव द्वाराणि इति वक्तव्यम्। आ नवदशभ्यः संख्यावचनाः संख्येये वर्तन्ते न संख्यायाम्। **धर्मिवृत्तय एते न धर्ममात्रवृत्तयः।**

२२६. सामग्रीति सामग्र्यं साकल्यं कार्त्स्न्यमाह। कस्य सेत्याकाङ्क्षा तु न शाम्यति। तेन सामग्रीति केवलः शब्दो न प्रयोक्तव्यः, विवक्षितार्थस्यानवगमात्। प्रकृते प्रमेयसामग्रीति वक्तव्यम्।

२२७. प्रियमधुकेति कपि समासान्ते भविष्यति। उरःप्रभृतिषु मधुशब्दपाठान्नित्यः कबिष्यते। **प्रियं मधु यस्याः सा षट्पदाली प्रियमधुका।**

२२८. **नेयङुवङ् स्थानावस्त्री** इति नदीसंज्ञा प्रतिषेधात् 'सुभ्रु' इत्यत्र ह्रस्वो दुर्लभः। समाधिस्तु पुरस्तादुक्तः।

२२९. जागृ निद्राक्षये इत्यनेकाच्। ततो यङ्लुकौ दुर्लभौ। **धातोरेकाचो हलादेः क्रियासमभिहारे यङ्** इत्येकाचो हलादेर्धातो र्यङं विधत्ते। भृशं जागर्तीति तु वक्तव्यम्।

२३०. वर्णाश्चाश्रमाश्च इतरे चेति वर्णाश्रमेतराः, तेषां वर्णाश्रमेतराणाम्। द्वन्द्वे सर्वनामतानिषेधात्तन्निमित्तकः सुडागमो नेति सर्वमवदातम्।

२३१. **अनुकरणान्यनुकार्येणार्थेनार्थवन्ति भवन्तीत्येकः पक्षः, अनर्थकानि तानीति चापरः।** अनुकरणानुकार्ययोरभेदं स्वीकृत्याऽनुकरणे शक्त्यभावादर्थासत्त्वेन प्रातिपदिकत्वं न। अस्मिन्पक्षेऽनर्थकत्वाद् बाधति शब्दस्य प्रातिपदिकत्वं नेति सुबुत्पत्तिर्न।

२३२. येन नाप्राप्तइत्यस्य यत्कर्तृकावश्यप्राप्तावित्यर्थो नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् (परिभाषेन्दु० अन्तरङ्गादप्यपवादो बलीयानिति परिभाषायाम् ।
२३३. नागरका इमे सूदाः पचन्तिरूपम् ।
२३४. पश्यामि तामित इतः पुरतश्च पश्चात् (मालती०) ।
२३५. निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः । विशदीकरवाणि कौतुकात्…(न्या० सि० मु०)
२३६. यो गुरुभ्योऽसूयत्यसौ हतो हताशः ।
२३७. तद्यत् समान्यामृचि समानाभिव्याहारं भवति तज्जामि भवति (नि० १२।१६) ।

---

२३२. अवश्यप्राप्तावित्यत्रावश्यमो मकारस्य लोपो दुर्लभः । लुम्पेदवश्यमः कृत्य इति कृत्ये प्रत्यये तद्विधानात् । ननु वश्यशब्दोऽप्यस्ति । बाढमस्ति । परं वशं गतो वश्यो भवति, यथा वश्यः सुतः, स चार्थ इह न घटत इति चिन्त्यः प्रयोगः शेखरकारस्य ।
२३३. **नगरात्कुत्सनप्रावीण्ययोरि**त्यनेन प्रावीण्ये गम्यमाने नगरे भवाः प्रवीणा नागरका इत्यर्थे नगराद् वुञ् तद्धितः ।
२३४. पुरत इति समानकालीनम् पूर्वकालीनम् इत्यादिवत् प्रामादिकमिति बहवः । केचित्तु **दक्षिणोत्तराभ्यां** तसुज्विधिनैवेष्टसिद्धावकारोच्चारणमन्यतो विधानार्थम् । तेन पुरत इति सिध्यति । पुर अग्रगमन इत्यस्मात्क्विपि पुर् इति निष्पद्यते । र्वोरुपधाया दीर्घ इक इति दीर्घस्तु न भवति, भत्वात् । न चातसुचश्चित्त्वेऽकारोच्चारणं पक्ष आद्युदात्तार्थमिति वाच्यम्, **बहूनां प्रयोगानुरोधेनान्यतो विधानार्थमिति कल्पनस्यैव न्याय्यत्वात्** इत्याहुः ।
२३५. निजशब्द आत्मीयमाह नात्मानमित्यात्मार्थे प्रयोगो दुष्यति तर्कपञ्चाननस्य । अत्र विषये वाग्व्यवहारादर्शानुबन्धे बहूक्तमिति नेह वितन्यते ।
२३६. योऽसूयति स इत्येवं वक्तव्यम् । यत्तदोर्नित्यः सम्बन्ध इत्युत्तरवाक्ये तच्छब्देन भवितव्यम् ।
२३७. समानशब्दस्य स्त्रीत्वविवक्षायां लोके टापि समानेति भवति । वेदे तु समानीति ङीपि । तत्र केवलमामकभागधेयेत्यादि शास्त्रं विधायकम् ।

२३८. वारुणीमदविशङ्कमथाऽऽविश्चक्षुषोऽभवदसाविव राग: (शिशु० १०।१९)।
२३९. पदङ्घ्रिश्चरणोऽस्त्रियाम् (अमर:)।
२४०. यूयं सर्वे मनुष्या आज्ञप्यन्ते वेदेन नित्यं यजध्वमिति ।
२४१. यत्नयुक्तिविहीनस्य गोष्पदं दुस्तरं भवेत् (यो० वा० ५।७५)।
२४२. इह ब्राह्मणानां नवदश वर्तन्ते इष्यते च विंशति:।
२४३. जनयति कुमुदभ्रान्तिं धूर्तबको बालमत्स्यानाम्।
२४४. अकर्दममिदं तीर्थं भारद्वाज निशामय। (रा० १।२।५)
२४५. संतोषस्त्रिषु कर्तव्य: स्वदारे भोजने धने।

---

२३८. ऊर्यादिषु पाठादाविसो नित्या गतिसंज्ञा। ते प्राग्धातो: (१।४। ८०) इत्यनेन च धातो: प्राक् प्रयोगो नियम्यते। तस्माद् दुष्ट: कविप्रौढिकृतो व्यवहित: प्रयोग:।

२३९. दकारान्ता पद् इति स्वतन्त्रा प्रकृतिर्नास्तीति चिन्त्यमिदमभिधानम्। केचित्तु पद्दन्नोमास् इति सूत्रे प्रभृतिग्रहणस्य प्रकारार्थत्वाच्छसादिव्यतिरिक्तेऽपि विषये पदादीन् आदेशानिच्छन्ति। अत: ककुद्दोषणी इति भाष्यप्रयोगोऽपि संगच्छत इत्याहु:।

२४०. युष्मद्युपपदे आज्ञाप्यध्वे इति मध्यम: पुरुष: प्रयोक्तव्य:। 'सर्वे' इति तु यूयमित्येतद् विशिनष्टि।

२४१. यत्नयुक्तिविहीनेनेति तु साधु स्यात्। न लोकाव्ययेति शास्त्रेण षष्ठीनिषेधात्।

२४२. इह नवदश ब्राह्मणा वर्तन्ते विंशतिश्चेष्यन्ते इत्येवं वक्तव्यम्। हेतुरसकृदुक्त: पुरस्तात्।

२४३. पोटायुवतिस्तोकेत्यादिना शास्त्रेण जाति: पोटादिभि: समस्यते। प्रथमानिर्दिष्टेति जातिरुपसर्जनम्। तेन बकधूर्त इति साधु स्यात्।

२४४. शम लक्ष आलोचने इति चुरादी धातू। ज्ञपादिपञ्चकादन्ये स्वार्थणिजन्ता मितो नेति सिध्यति रूपमिष्टम्। धातूनामनेकार्थत्वाच्छ्रवणेऽर्थे प्रवृत्ति:।

२४५. स्वदारेष्विति वक्तव्यम्। दारशब्द: पुम्भूम्नि नियत:। क्वचित्सूत्रेष्वेकवचनान्त: प्रयोगो दृश्यते स नानुसर्तव्य:।

२४६. वनान्तर्वसति, अन्तर्वणं वेत्युभयथा वृत्तिः शक्याऽऽस्थातुम् ।

२४७. रुचि स्वधर्मे भुवनद्वयेऽपि श्रेयःप्रसूं यत्नमृते ददाति (श्रीकेशवानन्द दि० सा० १८।५३)

२४८. तदानीं सर्वोऽयं देशश्चन्द्रगुप्तस्याधिकारेऽवर्तिष्ट ।

२४९. एतद्देशस्वातन्त्र्यप्रतिलब्ध्यै श्रीसुभाषचन्द्रः प्राणानेव पणेऽदधात् ।

२५०. द्रवाणां घृततैलानां काककीटाद्युपहतानां ··· ···प्रादेशप्रमाणकुशपत्रद्वयाभ्यामुत्पवनेन शुद्धिः (मनु० ५।११५ इत्यत्र कुल्लूकः) ।

२५१. अनेकधा कृताः पुत्रा ऋषिभिश्च पुरातनैः ।
न शक्यन्ते तेऽधुना कर्तुं शक्तिहीनैरिदन्तनैः (बृ० स्मृतौ) ॥

---

२४६. वनान्तर् इति वनेऽन्तर् इति **सप्तमी शौण्डैरिति** सप्तमी समासः । अन्तर्वणमिति तु विभक्त्यर्थेऽव्ययीभावः । **प्रनिरन्तः शरेक्षु प्लक्षे**-त्यादिना (८।४।५) वननकारस्य णत्वम् ।

२४७. श्रेयः प्रसूते इति श्रेयःप्रसूः, तां श्रेयः प्रस्वम् (रुचिविशेषणम्) । **ओः सुपीति** यण् अमिपूर्वं बाधते ।

२४८. सर्वस्मिन्नस्मिन्देशे चन्द्रगुप्तस्याधिकारोऽवर्तिष्टेत्येवं वक्तव्यम् । देशो ह्यधिकारस्य विषयः, स चाधिकारश्चन्द्रगुप्तसम्बद्धो वेति चन्द्रगुप्तशब्दात्कर्तरि षष्ठी शैषिकी वा । सर्वोऽयं देशश्चन्द्रगुप्तेधि अधि वा चन्द्रगुप्तः सर्वस्मिन्नस्मिन्देश इति न्यासस्तु श्रेयान्स्यात् ।

२४९. प्राणानेव पणमकरोदित्येवं वक्तव्यम् । प्राणानामेवापणिष्टेत्येवं वा । प्राणाः पण इति व्यस्तरूपकम् । व्यवहृपणोः समर्थयोरिति प्राणानामित्यत्र षष्ठी ।

२५०. कुशपत्रद्वयाभ्याम् । द्वयमित्यत्र प्रमाणे तयप्प्रत्ययः, तस्य चायजादेशः । तयप्प्रत्ययान्तं धर्मवृत्ति प्रयुज्यते धर्मिवृत्ति च । धर्मवृत्ति चैकवचनान्तं स्त्रीनपुंसकयोः प्रयुज्यते । तेन कुशपत्रयोर्द्वयमिति विग्रहे कुशपत्रद्वयमित्येव भवति नान्यथा । धर्मिवृत्ति च बहुवचनान्तम्—**द्वये प्राजापत्या देवाश्चासुराश्च** ।

२५१. इदन्तनैरिति बृहस्पतेः स्वच्छन्दः । इदानीन्तनैरिति तु भवितव्यम् । इदंशब्दादनव्ययाट्ट्युट्युलोः प्राप्तिरेव नास्ति ।

२५२. स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् । (मनु० ९।१६६)
२५३. तान्सावित्रीपरिभ्रष्टान् व्रात्यानिति विनिर्दिशेत् (मनु० १०।२०)।
२५४. अहोऽतिघोरं बलवच्च ते मनश्चलेषु कामेषु च सारदर्शिनः (बुद्धच० ४।९७) ।
२५५. हृते च लोके बहुभिः कुमार्गैः सन्मार्गमन्विच्छति यः श्रमेण। स दैशिकः क्षोभयितुं न युक्तम्‌……। (बुद्धच० १३।६२)
२५६. प्रासकार्मुकबिभ्रद्भिर्युवभिर्मृष्टकुण्डलैः (रा० २।१६।२) ।
२५७. प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते । एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ।।
२५८. हसताऽपनीय हृदयाद् घनान्धकारं निराशायाः। हसत प्रदीप्य दीपान् पदे पदे यूयमाशायाः ।।

---

२५२. संस्कृतायामित्यर्थद्वारकं विशेषणम् । नपुंसकमपि क्षेत्रशब्दः स्त्रियमाह । तत्स्त्रीत्वमादाय विशेषणे स्त्रीत्वम् ।
२५३. **निपातेनाप्यभिहिते कर्मणि न कर्मविभक्ति**रिति वचनादितिना कर्मणो व्रात्यशब्दवाच्यस्योक्तत्वाद् द्वितीया न युज्यते ।
२५४. अहो अतिघोरमिति ओत् । (१।१।१५) इति प्रगृह्यत्वे प्रकृतिभावे पूर्वरूपं न ।
२५५. स दैशिकः क्षोभयितुं न युक्त इति वक्तव्यम् । युक्त इति कर्मणि क्तः । दैशिक इति कर्म । तेन पुंस्त्वं युक्तम् ।
२५६. प्रासकार्मुकं बिभ्रद्भिरित्येव साध्विति पाणिनीयाः । **न लोकाव्ययनिष्ठाखलर्थतृनाम्** इति षष्ठीनिषेधेऽनुक्ते कर्मणि द्वितीया । न च द्वितीया शत्रन्तेन समस्यते, विधानाभावात् ।
२५७. एनम् इत्यनन्वादेशे न साधु । एतमिति ब्रूयात् । तत्रापि यच्छब्दसम्बन्धेनोत्तरस्मिन्वाक्ये तच्छब्द एव युक्ततरः प्रयोक्तुम् ।
२५८. पूर्वत्र निराशाया घनान्धकारम्, उत्तरत्र च आशायाः प्रदीपान् इत्यत्र षष्ठीं प्रयुञ्जानेन लोकभाषैवानुकृता, संस्कृतवाग्व्यवहारश्च नादृतः। संस्कृते तु रूपकसमाश्रयेण निराशाऽऽशाशब्दाभ्यां प्रथमा प्रयोक्तव्या। यथास्थिते तु निराशाकृतो निराशासम्बद्धो वा घनान्धकार इति प्रतीयेत, आशायाः प्रदीपाः प्रदीपयितारस्तद्व्यतिरिक्ता केचनार्थाः प्रतीयेरन् । न च तथाविधोऽर्थः प्रत्याययिषितः ।

२५९. नाट्यशास्त्रे काव्यस्य निरूपणं नास्ति । काव्यप्रकाशे च नाट्यस्य न । साहित्यदर्पणे तदुभये प्रातिपादिते दृश्येते ।

२६०. चत्वारो धनदायादा धर्माग्निनृपतस्कराः । तेषां ज्येष्ठावमानेन त्रयः कुप्यन्ति सोदराः ॥

२६१. एवं वयं च धर्मज्ञ सर्वे चास्मत्पितामहाः । पाविता वै भविष्यन्ति······(भा० अनु० ८।२६) ॥

२३२. दूरोच्चलन्नाकवधूनिकारसंराविणीं रावणराजधानीम् (अभिनन्दकृते रामचरिते १७।१) ।

२६३. दिनमनुनिजगेहे मेषगोवृन्दकैः सा, ह्यभिमतजनकाभ्यामेधिता ग्रामकन्या (क्रिस्तु भा० ६।४०) ॥

---

२५९. तदुभयं प्रतिपादितं दृश्यत इति तु वक्तव्यम् । त उभये इति वा । उभयशब्दो ह्येकत्वे बहुत्वे च प्रयुज्यते न द्वित्वे ।

२६०. सोदर्याः समानोदर्या इति वा वक्तव्यम् । सदृशवचनः सहशब्दोऽप्यस्ति । तेन **वोपसर्जनस्येति** वैकल्पिके सभावे सहोदराः सोदरा इति चोभयं साधु ।

२६१. वयं भविष्याम इति क्रियाध्याहारेण शक्यं समाधातुम् । वाक्यभेदस्तु भवति । वाक्यैक्ये तु **अस्मद्युत्तमे** इति शास्त्रेण उत्तमः पुरुष एव प्रयोगमर्हति । **शेषे प्रथम** इत्यस्य त्वप्रसङ्गः । युष्मदस्मदोरुपपदयोरभावो हि शेषः । स चेहास्मच्छब्दश्रवणान्नास्ति ।

२६२. सम्पूर्वाद् रौतेर् उपसर्गे रुव इति घञि संराव इति सिध्यति । संरावोऽस्त्यस्यामिति संराविणी । मत्वर्थीय इनिः । इत्यनवद्यं रूपम् ।

२६३. दिनमनु इति समासश्चेत्स दुष्यति । वीप्सायामव्ययीभावेऽनुदिनमिति स्यात् । अथाऽसमासस्तथापि न दोषनिर्मोक्षः । **नित्यवीप्सयोरि**ति वीप्सायां द्विरुक्त्या भाव्यम् । दिनं दिनमन्विति च वाच्यम् । जनकाभ्यामित्येकशेषोऽपि दुर्घटः । जननी च जनकश्चेति जननीजनकाविति स्यात् । न ह्यत्र स्त्रीपुंसलक्षण एव विशेषः । समानायामाकृतौ यत्र विशेषस्तत्रैवैकशेषविधिर्नेतरत्र ॥

२६४. राधे ते करुणाकटाक्षलहरी नीलाम्बुजस्पर्धिनी (करुणा० २)।
२६५. सौभरिः पुण्यमूर्त्तिः... वचनसुधां योक्तुमीहे (मोह० १।१३)।
२६६. आसन्नविंशकपलैः समुपासमानम् (मोह० ६।२७)।
२६७. मुहुर्मुहुर बोध्यहं सकलशास्त्र गूढाशयम् (मोह० ७।१८)।
२६८. कांश्चिच्चन्द्रच्छविरिव मुखं सौभरेः पीयमानान् (मोह० ४।२२)।
२६९. भावत्कं यत्र नहि देग्धि कदापि चित्तम् (मोह० ६।१६)।
२७०. कचप्रपञ्चे सुपरीमलाढ्ये (मोह० ३।३१)
२७१. सा चातकीव सुतमैक्षत जीवमूतम् (क्षत्रपति० १४।५४)

---

२६४. राधे ते अत्र युष्मद एकवचनान्तस्य षष्ठीस्थस्य 'ते' इत्यादेशोऽशक्यः कर्तुम्। पदात् (८।१।१७) इत्यधिकारात् पदात् परस्यैव स आदेशः शिष्यते। राधे इत्यामन्त्रितम्। **आमन्त्रितं पूर्वमविद्यमानवत्** (८।१।७२) इति तस्याविद्यमानवत्त्वात्पदात्परत्वं न, तेन तवेत्येव सुवचम्।

२६५. सौभरिः...योक्तुमीहे। अत्रोत्तमपुरुषैकवचनप्रयोगश्चित्तविक्षेपकृतः शोच्यः।

२६६. आसन्नविंशकपलैरित्यत्र तृतीया नोपपद्यते। अपवर्गे सा विधीयते। अपवर्गश्चेह नास्ति। अत्यन्तसंयोगमात्रे द्वितीयया भाव्यम्। समुपासीनम् इत्येव युक्तम्। आस उपवेशन आदादिकः।

२६७. अबोध्यहम्। अभुत्सि इति तु वक्तव्यम्। चिणि तशब्दे परे विकल्पेन अबोधीति रूपम्। प्रमाद एवायम्।

२६८. चन्द्रच्छविरिवेत्युपमानात्प्रथमा न युज्यते उपमेये मुखे द्वितीयान्ते सति। उपमानोपमेययोः समानविभक्तित्वमिष्यते।

२६९. सम्पूर्वको दिहिः संशयमाह न केवल इति सन्देग्धीति वाच्यम्। न हि सन्देह इति वक्तव्ये देह इति कश्चिदसंमूढः प्रयुङ्क्ते।

२७०. परीमलशब्दो दीर्घमध्यो नास्तीति परिहार्यः, व्यवहारश्च रक्षणीयः।

२७१. जीमूतमिति रूपमेव प्रयोगार्हम्। पृषोदरादीनि यथोपदिष्टानि तथैव साधूनि भवन्ति। तानीष्टं संस्कारमापाद्य न प्रयोगविषयतां नेयानि। तत्र स्वच्छन्दो नियन्तव्यः।

२७२. अर्धसप्तशतास्तत्र प्रमदास्ताम्रलोचनाः ।

२७३. सप्तत्याऽभ्यधिकं यातं सहस्रं परिवत्सराः (राज० १।५२) ।

२७४. कथमस्तमनवेलायाम् इति ।

२७५. तत्र मन्त्रयतामेवं देवतानां मया श्रुतः ।
भवतः सानुगस्यैव वधोपायः सुदारुणः (हरि० २।१।१५) ॥

---

२७२. अर्धं सप्तशतस्येत्यर्धसप्तशतमित्येकदेशि - समासः स्यात् । सप्तशतमिति समाहारे द्विगुः । अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते । तेन स्त्रीत्वे द्विगोरिति ङीप् स्यात् । पात्राद्यन्तस्य नेति नपुंसकत्वम् । अर्धसप्तशता इति तु न सिध्यति । समप्रविभागेऽत्रार्धशब्दः । स च नियतं नपुंसकम् । तस्मादर्धानि सप्त शतानि अर्धं सप्तशतं वा संख्या परिच्छेदकत्वेन यासां ता इत्येवं न शक्यं विग्रहीतुम् । एकदेशिसमासेन बाधात् ।

२७३. सप्तत्याऽधिका याताः सहस्रं परिवत्सरा इत्येवं संशोध्य पठनीयम् । सप्तत्याधिकमिति सहस्रमिति च द्वे विशेषणे परिवत्सरा इत्य् एकस्मिन्विशेष्ये अन्विते, न तु परस्परम् । **गुणानां परार्थत्वादसम्बन्धः समत्वादिति वैशेषिकाः** । सोऽयं न्यायः सन्दर्भशुद्धिमीप्सद्भि विद्वद्भिः सततं हृदि करणीयः । किं चात्रेदं चिन्त्यं यातमिति नपुंसकैकवचने कथं प्रयुक्तम् । नूनमिह कविरन्यत्रमना अभूत् । सहस्रमिति संख्येये वर्तते न संख्यायाम् । संख्येयं चात्र परिवत्सराः । संख्यायां चेत्स्यात् परिवत्सराणामिति ब्रूयात् । कामं तदा यातमिति निर्दुष्टं स्यात् ।

२७४. अस्तमयनमित्यस्य स्थानेऽस्तमनं पृषोदरादित्वात् । शतपथे ब्राह्मणे (१३।८।१।६) ऽकृतयकारलोपं रूपं श्रूयते—सप्तर्षीणां चोदयनमादित्यस्य चास्तमयनम् इति ।

२७५. तलन्तं स्त्रियाम् इति देवताशब्दो नित्यं स्त्री । तेन समानाधिकरणेन विशेषणेन शत्रन्तेनापि स्त्रिया भाव्यम् । तस्मान्मन्त्रयतामित्यसाधु । मत्रि गुप्तपरिभाषणे इत्यनुदात्तेत्, ततः शानचि टापि मन्त्रयमाणानामितीष्यत इत्यन्यदेतत् ।

२७६. कथम् अयमस्तु धनपतिर्धनानाम् । (अथर्व० ४।२२।३)
२७७. मा रोदी र्वच्मि भद्रं ते तवाहं सा प्रियाऽभवत् (वराह० १२५। १२५) ।
२७८. ततः शक्ति गदां खङ्गं धनुश्च भरतर्षभः ।
प्राध्वं कृत्वा नमश्चक्रे कुबेराय वृकोदरः (भा० वन० १६२।१८) ॥
२७९. वक्रः पन्था न गन्तव्यः प्रष्ठे वहति वर्त्मनि (न्यायमञ्जर्याम्) ।
२८०. सप्रभृतयो भवन्तीन्द्रियस्य वीर्यस्य रसस्यानतिक्षाराय (पञ्च० ब्रा० १५।१।६) ।
२८१. यथा समुद्रेऽपि च पोतभङ्गे सांयात्रिको वाञ्छति तर्तुमेव (पञ्च० १।३४५) ।

---

२७६. इत्थं सर्ववेदभाष्यकारः सायणः पौनरुक्त्यदोषं परिहरति—धनानां पतिर्धनपतिरित्येव धनाढ्यत्वे सिद्धे पुनर्धनानामिति व्यस्तनिर्देश ईशितव्यस्य धनस्य बहुत्वख्यापनार्थः । नहि राजपुरुष इत्युक्ते राज्ञोः पुरुषः, राज्ञां पुरुष इति संख्याविशेषप्रतीतिरस्ति, किन्तु राजसम्बन्धमात्रं प्रतीयते । एवमत्रापि धनपतिरिति धनसम्बन्धमात्रेऽवगते तद्बहुत्वप्रतिपादनाय व्यस्तनिर्देश इति न पौनरुक्त्यम् (अथर्व० ४।२२।३) ।
२७७. तवाहं सा प्रियाऽभवदिति प्रथमपुरुषोऽस्थाने । **अस्मद्युत्तम**(१।४।१०७) इत्युत्तम एवोचितः । सेति तु विशेषणम् । अहमिति च विशेष्यम् ।
२७८. **प्राध्वं बन्धने**(१।४।७८) इति गतिसंज्ञा कुतो नेति शङ्क्यते, सत्यां च संज्ञायां कुगतिप्रादयः (२।२।१८) इति नित्यसमासे क्त्वो ल्यबादेशे प्राध्वंकृत्येति स्यात् । अस्थाने शङ्कितं ते । बन्धनहेतुक आनुकूल्ये वर्तमानः प्राध्वंशब्दो गतिर्भवति । इह तु केवलं बन्धनमर्थः। केवल आनुकूल्येपि (रघु० १।४३) इत्यत्र प्रयोगः ।
२७९. **प्रष्ठोऽग्रगामिनि** (८।३।९२) इत्यग्रगामिन्यर्थे प्रष्ठशब्दो निपातित प्रष्ठो गौः । यथाऽगच्छन्नपि पन्था गच्छतीत्युच्यते, तेन न कश्चिद् दोषः ।
२८०. सप्रभृतय इत्यत्र समानशब्दस्य सभावो दुष्यति **समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु** (६।३।८४) इति प्रभृतेः पर्युदासात् । सप्रभृतयः समानोपक्रमाः ।
२८१. तर्त्तुमिति दुष्टम् । तरतिरुदात्तः । तेन वलादेरार्धधातुकस्येड् दुर्वारः । तरितुं तरीतुमित्येव रूपद्वयमदुष्टम् ।

इत्थं विवेचिते रूपे शब्दानां साध्वसाधुनी ।
विनेयानां प्रबोधाय विनोदाय च तद्विदाम् ॥ १ ॥
यद्यमीभ्यः स्वदेतेयं हारिणी हृदयङ्गमा ।
विवेचना प्रसन्ना मे सकामः स्यामहं तदा ॥ २ ॥
तेनेति मेऽर्थना नम्रा दोषज्ञा वीतमत्सराः ।
कृपया परयाऽऽविष्टा विमृशन्तु क्रियामिमाम् ॥ ३ ॥
न वैदुष्येऽभिमानो मे कर्मण्यत्र प्रयोजकः ।
न च दोषैकदृक्त्वं तु परीष्टिः केवला मता ॥ ४ ॥
वाचामुपस्क्रियां कांचिदियमाधास्यति ध्रुवम् ।
कृतिः शैक्षस्य लोकस्य प्रत्ययोऽयं ममान्तरः ॥ ५ ॥
तामिमां प्राभृतीकृत्य वाग्विद्योभयजन्मनि ।
अर्पयामीश्वरे प्रह्वः प्रमना विरमामि च ॥ ६ ॥

इति श्रीचारुदेवशास्त्रिणः कृतिषु शब्दापशब्दविवेको नामाऽयं ग्रन्थः प्रतिसंस्कृतः पूर्तिमगात् ॥

शुभं भूयादध्यापकानामध्यायकानां च ।

ओं स्वस्ति ।

# संकेतिका

| उद्धृत ग्रन्थस्य संक्षिप्तं नामधेयम् | उद्धृत ग्रन्थस्य सम्पूर्णं नामधेयम् |
|---|---|
| अग्नि पु० | अग्निपुराणम् |
| अत्रि० | अत्रिस्मृतिः |
| अथर्व० | अथर्ववेदः |
| अनर्घ० | अनर्घराघवम् |
| अमरः | अमरकोषः |
| अमरु० | अमरुशतकम् |
| आप० ध० सू० | आपस्तम्ब धर्मसूत्रम् |
| आश्व० गृ० | आश्वलायनगृह्यसूत्रम् |
| ईश उ० | ईशोपनिषद् |
| उत्तर० | उत्तररामचरितम् |
| उदयनः | न्यायकुसुमाञ्जलिकार उदयनः |
| ऋ० | ऋग्वेदः |
| ऋ क्प्रा० | ऋक्प्रातिशाख्यम् |
| कथा | कथा सरित्सागरः |
| कथाकौ० | कथाकौतुकम् |
| करुणा० | करुणाकटाक्षलहरी |
| कल्प० | कल्पलता |
| का० नी० सा० | कामन्दकनीतिसारः |
| कारिकावलिः | कारिकावलिः |
| काव्यादर्शः | काव्यादर्शः |
| काशिका | काशिकावृत्तिः |
| का० श्रौ सू० वृ० | कात्यायनश्रौ०सूत्रवृत्तिः |
| का० सू० | (वात्स्यायनीयं) कामसूत्रम् |
| कि० | किरातार्जुनीयम् |
| किरणा० | किरणावलिः |
| कीचक० | कीचकवधम् |
| कु० (कुमार०) | कुमारसम्भवम् |
| कुल्लूकः | कुल्लूककृता मन्वर्थमुक्तावलिः |
| के० दि० सा० | श्रीकेशवदिग्विजयसारः |
| क्रिस्तु० | क्रिस्तुभागवतम् |
| गणरत्न० | गणरत्नमहोदधिः |
| गरुड० | गरुड पुराणम् |
| गो० गृ० | गोभिलगृह्यसूत्रम् । |
| चम्पूरा० | चम्पूरामायणम् |
| तुलसी० | तुलसीमहाकाव्यम् |

| | |
|---|---|
| दशकु० | दशकुमारचरितम् |
| दुर्ग० | निरुक्ते दुर्गवृत्तिः |
| दुर्गा० | दुर्गासप्तशती |
| दूत० | दूतवाक्यम् |
| देवी० | देवीभागवतम् |
| नागानन्द० | नागानन्दं नाटकम् |
| नारा० | नारायणीयम् |
| नि० | निरुक्तम् |
| नै० | नैषधम् |
| पञ्च० | पञ्चतन्त्रम् |
| पञ्च ब्रा० | पञ्चविंश ब्राह्मणम् |
| पराशर० | पराशरस्मृतिः |
| परिभाषेन्दु० | परिभाषेन्दुशेखरः |
| प्राणा० | प्राणाभरणम् |
| बालरा० | बालरामायणम् |
| बुद्धच० | बुद्धचरितम् |
| बृ० उ० | बृहदारण्यकोपनिषद् |
| बृ० श्लो० सं० | बृहच्छ्लोकसंग्रहः |
| बृ० स्मृ० | बृहस्पतिस्मृतिः |
| बौ० ध० सू० | बौधायनधर्मसूत्रम् |
| ब्र० पु० | ब्रह्मपुराणम् |
| ब्रह्मवै० पु० | ब्रह्मवैवर्तपुराणम् |
| भट्टि० | भट्टिकाव्यम् |
| भर्तृ० | भर्तृहरिकृतसुभाषितत्रिशती |
| भविष्य० | भविष्यपुराणम् |
| भा० पु० | भागवत पुराणम् |
| भा० अनु० | महाभारते ऽनुशासन पर्व |
| भा० आदि० | ,, आदिपर्व |
| ,, भा० उ० | ,, उद्योगपर्व |
| ,, कर्ण० | ,, कर्ण पर्व |
| ,, द्रोण० | ,, द्रोणपर्व |
| ,, वन० | ,, वनपर्व |
| ,, शां० | ,, शान्ति पर्व |
| ,, सभा | ,, सभापर्व |